# चूड़ामणिदर्शनम्

## ( प्रथम खण्डम् )

महामहोपदेशक
शशधर तर्कचूड़ामणि
विरचितम्

वाराणसीस्थ-राजकीय संस्कृतविद्यालयभूतपूर्वाध्यक्ष
महामहोपाध्याय श्रीयुक्त गोपीनाथ कविराज एम० ए०
महोदय प्रदर्शित दिशा

श्रीयुक्त ताराचरण साहित्याचार्येण स्वरचित भूमिकया
ग्रन्थकर्त्तुः संक्षिप्तजीवनकथया च सह
सम्पादितम्

वाराणस्यां
कमला यन्त्रे श्रीकालाचाँद चट्टोपाध्यायेन मुद्रितम्
पाकुड़निवासि कुमार स्वर्गीय ज्ञानेन्द्रचन्द्र पाण्डेय
महोदयस्यादेशेन तदात्मज श्रीयुक्त नृपेन्द्रचन्द्र पांडेयेन
प्रकाशितञ्च ।

मूल्यं मुद्रात्रयम्

# चूड़ामणिदर्शनस्य भूमिका ।

—

साम्प्रतं प्रेक्षावतां पुरतश्चूड़ामणिदर्शनं नाम किमप्यभिनवं दर्शनं सादरमुपस्थाप्यते सनिर्बन्धमभ्यर्थ्यन्ते च ते यत् साभिनिवेशमामूलमेतदालोक्य प्राच्यविज्ञानगौरववर्द्धकं किमप्यनिर्वचनीयं तत्त्वमास्वादयन्त्विति । प्रणेतारोऽस्य ग्रन्थस्य तत्रभवन्तः सुप्रथितनामधेयाः स्वर्गताः पण्डितप्रवराः शशधरतर्कचूड़ामणि महोदयाः । सनातनधर्मावलम्बिषु मन्येऽत्यल्पा एव जना एतेषां महापुरुषधौरेयाणां नाम न जानन्ति । पूर्ववङ्गेषु फरिदपुरमण्डलान्तर्गत पराणपुर ग्रामवास्तव्यस्य कश्यपान्वयसम्भूत विद्वद्वर हलधर विद्यामणि भट्टाचार्यस्यात्मजा इमे त्रिसप्तत्युत्तर सप्तदश शत परिमिते (१७७३) शकभूपवर्षे लब्धजन्मानः आयुष आसप्तसप्ततिवर्षं यावद् भारतवर्षस्य बहुषु प्रदेशेषु सनातनधर्मस्य तत्त्वं गौरवञ्च प्रचारयन्तो व्याख्यानकौशलेन कालप्रभावविकृतबुद्धीन् शिक्षितम्मन्यानसंख्यान् युवकान् पुनः स्वधर्मे संस्थापयन्तः पञ्चाशदधिकाष्टादशशतमिते (१८५०) शकवर्षे मुर्शिदा-

बाद मण्डलान्तर्गत बहरमपुराख्ये नगरे भागीरथीतीरे पाञ्चभौतिकं देहं विहाय स्वर्गमारूढाः। तत्रभवतां जीवनवृत्तं संक्षेपेण लिखितमस्यैव ग्रन्थस्यान्यत्र प्रकाशितं वर्त्तते तद्-वलोकनेन तदीयाद्भुतशक्तेः सम्यक् परिचयो भविष्यति।

अस्मद्भाग्यस्याधन्यतयैव ग्रन्थकर्त्ताऽस्य ग्रन्थस्य समाप्तिं कर्त्तुं नाशक्नोदिति वयं विषीदामः। विप्रतिपन्नानां विप्र-तिपत्तीर्निरसितुं विरुद्धवादिनो बोधयितुञ्च या या युक्तय स्तर्काश्चापेक्ष्यन्ते तांस्तु त एव ज्ञातुं प्रभवेयुर्ये खलु तत्तत्-कर्म सरणिं समाश्रितवन्तः। अस्मदालोच्यो ग्रन्थकार आम-रणं धर्मप्रचारक्षेत्रमधितिष्ठंस्तत्र तत्र सम्यङ् निष्णातः सञ्जात इति तु कृतमुक्तेन। ततश्च तत्प्रणीतोऽयं ग्रन्थः सर्वथोपयोगी सर्वेषामुपकारकश्च भविष्यतीति वयं विश्वसिमः।

महर्षिभिः कणादादिभिर्दर्शनशास्त्रकारैरार्षेण चक्षुषाव-लोक्य यद् यत् तत्त्वमाविष्कृतं यच्च सूत्ररूपेण मानवेषु प्रकटी-कृतं तदेव जगति साम्प्रतं वर्त्तमानानामदृश्यतां गतानां वा सर्वेषां विज्ञानानां मूर्धन्यं प्रधानमुपजीव्यं तानि चार्षविज्ञा-नान्नातिरिच्यन्ते चेति तर्कप्रमाणाभ्यां प्रतिपादनमेवास्य ग्रन्थस्य प्रयोजनमवगच्छामः।

यद्यपि साम्प्रतिकाः पाश्चात्यवैज्ञानिकाः पूर्वतनानां विज्ञानविदां सिद्धान्तीकृतानि मतानि नाङ्गीकुर्युः पाश्चात्य-सिद्धान्तानां प्रायः परिवर्त्तनशीलत्वात्तथापि ग्रन्थप्रणयनसमये

पाश्चात्यविज्ञानविदुषां सम्मता यावन्तः पदार्था ग्रन्थकृता समुपलब्धास्तानादृत्यैव समालोचनं कृतम् ।

असमाप्तस्यास्य ग्रन्थस्य यावदुपलब्धमस्माभिस्तावदेव गत्यन्तराभावात्प्राकाश्यं नीयते । तत्रापि सप्तमाध्याय-पर्यन्तमेवास्मिन् प्रथमभागे सन्निवेशितमवशिष्टं तु यदि भगवतो विश्वनाथस्य कृपा स्यात्तदाऽग्रे प्रकाशितं भविष्यति ।

अत्राध्यायाः सप्तैव सन्ति, तेषु च प्रथमतः षष्ठाध्याय-पर्यन्तं ग्रन्थकृता स्वयमेव लेखेनाध्यायसमाप्तिः सूचिता सप्तमस्तु परिकल्प्यास्माभिर्निवेशितः । अग्रे कुत्रापि अध्या-यच्छेदो न समुपलभ्यते । एतच्च लेखकप्रमादाद् ग्रन्थकृतोऽ भिप्रायवशाद् वा सञ्जातमिति नावबोद्धुं शक्यते । वयं तु विषयाणां स्वरूपं सम्प्रधार्य स्वबुद्धिप्रभावेण तथा प्रयतित-वन्त इत्यस्माकं साहसिक्यं क्षाम्यन्तु सुधियः ।

इदानीं संक्षेपतो ग्रन्थप्रतिपादितविषया उच्यन्ते—

संसारे विज्ञानमेव महाविद्या-ब्रह्मविद्या-ब्रह्मविज्ञान-प्रज्ञा-नघनेत्यादि नामभिराख्यायते तच्च परमेश्वर्याः परमेश्वरस्य वा चितिशक्तेर्नामरूपान्तरं तस्मात् परमं दैवतं, सत्यं, सारतमं, प्रियतमं, स्पृहणीयतमं, सर्वाराध्यं, पवित्रं, सर्वेषा-मीशानं, सर्वाधारश्चातः सर्वैरुपायस्म् ।

तस्याश्च परमदेवतायाः सत्त्वोपाधिना मूर्तिकल्पनं, कल्पितायां च मूर्त्तौ आचरणाद् ब्रह्मरन्ध्रान्तान्यङ्गानि प्रत्यङ्गानि च कल्पनीयानि। तत्र विचारशून्यं केवलेन्द्रियजन्यं यज् ज्ञानं विषयज्ञानस्य प्रथमावस्था वा तज् ज्ञानमूर्त्तेश्चरणत्वेन कल्प्यते। अधस्तनत्वात् स्वल्पप्रकाशकत्वात् प्रथमदृष्टत्वाच्च। जलादौ पृथग्भावेन यद् गुणक्रियादिकमारभ्य परमाणुपर्यन्तदर्शनं जगन्मूलत्वदर्शनञ्च तदेव ज्ञानमूर्त्तेर्जंघात्वेन चिन्तनीयम्। कणादगौतमादिज्ञानानि तु तदुपरितनत्वाद् ऊरुस्थानानि। वस्तुतस्तु गौतमीयदर्शनं न पदार्थतत्त्वानुसन्धानपरं किन्तु तत्सन्धानोपायभूत-प्रमाणतत्त्वान्वेषणपरमतो ज्ञानमूर्त्तेरङ्गत्वं न भजते। प्रमाणज्ञानानि च ज्ञानमूर्त्तेरापादतलाच्छिरः पर्यन्तं समानतयैव वर्त्तन्तेऽतो यस्मिन्नङ्गे तेषां सम्बन्धस्तदङ्गस्य रक्षकरूपत्वगादिस्थानीयानि भवितुमर्हन्ति। पाश्चात्यानामप्यश्वक्रान्तोद्भवानां सिद्धपुर वासिनां चैवंविधं ज्ञानं ज्ञानमूर्त्तेरूरुत्वेन कल्प्यते। अन्यदेशीयानां ज्ञानानि च यथायथं पूर्ववर्णित जंघाचरणस्थानीयानि। रसायनविद्या ज्ञानस्योदरं, प्राकृतिकविद्या च स्तरभेदेनोरःकण्ठ देशौ। एते च रसायनविद्या-प्राकृतिकविद्ये अस्मद्देशे आयुर्वेदेषु तन्त्रेषु श्रुतिषु च बृहदारण्यकाद्यासु विराजेते। ऊरुतः परवर्त्तिनीनां शारीरतत्त्व-भूतत्व-खतत्त्वादिविद्यानां यथायथमेष्वेवांगेष्वन्तर्भावः। अतः परमौपनिषद्दीया अध्यात्मविद्या कपिलपञ्चशिखादिप्रचारिता अध्यात्मविद्या

औपनिषदीया ब्रह्मविद्या च सर्वोपरि विराजमाना ज्ञानमूर्त्तेः शीर्षत्वेन चिन्तनीयाः ।

व्यावहारिक वस्तुप्रतिपादनपरत्वेन सत्यार्थतया च सर्वासामेव विद्यानामादरणीयत्वम् । व्यवहारभेदाच्च न तासां परस्परविरोधः । इत्थञ्चापादतलान्मस्तकान्तावयवत्वेन कल्पिताः सर्वा एव विद्याः विद्यामूर्त्तिं परिपूरयन्तीत्यवश्यमभ्युपेयम् । इदमप्यत्रावधेयम्—न खलु सर्वेषु देशेषु सर्वाभिर्वा भाषाभिः परदेवतायाः सर्वेषामेवाङ्गानां सम्यग् विकाशः सम्भवति । एकैकस्मिन् देशे कतिचित् कतिचिदेवाङ्गानि समुपलभ्यन्ते । तत्राश्वक्रान्तरथक्रान्तयोः सिद्धपुरे च देशे आपादतलाद् विद्याया हृदयदेशपर्यन्तप्रदर्शका बहव एव ग्रन्थास्तत्तद्देशीयभाषाभिर्निबद्धा विराजन्ते कण्ठादितस्तु न तथा । येऽपि कण्ठाद्यवयवाः पाश्चात्यैर्विपश्चिद्भिरुन्मुक्तास्तत्रापि अध्यात्मांशोऽतीव वैगुण्यबहुलो बहुभ्रान्तिसमाकुलश्च । ब्रह्मविद्या तु तेषां दृष्टेर्बहिरेव वर्त्तते । तेषु देशेषु विद्यामूर्त्तेर्मस्तकशून्यो देहोऽवभासत इति मन्तव्यम् । भारते पुनः संस्कृतभाषादिभिरध्यात्मब्रह्मविद्येऽद्यापि जाग्रतः किन्तु शारीरविद्या रासायनविद्या प्राकृतविद्याप्रभृतयश्चेदानीं विलुप्तप्रायाः । सत्यं देशभेदेन विद्याया अङ्गभेदाः प्रकाशन्ते तथापि सर्वेभ्यो हि देशेभ्यो यथासम्भवमवयवसमाहारेणापादतलात् शिरः पर्यन्तं विद्यादेव्याः सर्वाण्येवाङ्गानि परिकल्पयितुं

शक्यन्ते न च संसारे एकान्ततः कस्यचिदङ्गस्याभाव इति विषयसंक्षेपः ।

ग्रन्थेऽस्मिन् ये ये विषया विलसन्ति ते प्राच्यैः प्रतीच्यैश्च दर्शनकृद्भिरनुमता अपि ग्रन्थकृताऽभिनवया पद्धत्या समालोचितास्तेन किञ्चिद् भिद्यमाना अस्मद्बुद्धेः क्षोदीयस्तया विचारविषयतां नावगाहन्तेऽतस्तत्र न किञ्चिद् वक्तुं प्रभवामः ।

सांख्यादिदर्शनानां भारतीय-रसायनशास्त्राणामायुर्वेदस्य च सूक्ष्माणि तत्त्वानि समालोच्यातिसरलया गीर्वाणभाषयोपनिबध्य सारवत्या युक्त्या दृष्टान्तद्वारेण च पाश्चात्यवैज्ञानिकमतानां तैः सह सामञ्जस्योकरणे यादृशी प्रतिभा प्रकटीकृता ग्रन्थकारेण सा तु विश्वतोमुख्यनन्यसाधारणी चेति ग्रन्थमिमं पर्यालोचयतामनायासेन प्रत्यक्षीभविष्यतीति सोच्चकण्ठं ब्रूमः । परमार्थतस्तु ग्रन्थोऽयं सर्वेषां दर्शनशास्त्ररसिकानां परमं प्रमोद मुपजनयिष्यतीति सगर्वमुद्घोषयितुं शक्नुमः ।

परमरमणीयस्यास्य ग्रन्थस्य प्रचारकामाभ्यां तत्रभवतो ग्रन्थकारस्य प्रियशिष्याभ्यां साम्प्रतमेव सहसा परलोकं गताभ्यां प्रसिद्ध 'पाकुड़' भूम्यधिकारिणा कुमार ज्ञानेन्द्रचन्द्रपाण्डेय महाशयेन भूतपूर्व फरिदपुरमण्डलशासकेन ( मैजिष्ट्रेट ) रायवहादुर यतीन्द्रमोहन सिंह एम. ए. बि. एल. महोदयेन च सम्मुद्रय ग्रन्थस्य प्रकाशनाय भूतपूर्व वाराणसेयराजकीयसंस्कृतविद्यालयाध्यक्षा अस्मत्परमसुहृदस्तत्रभवन्तो महा-

महोपाध्यायाः श्रीमन्तो गोपीनाथ कविराज एम्. ए. महोदयाः सादर मभ्यर्थिताः तैश्च ग्रन्थावलोकनप्रमुदितैर्मयि स भारो न्यस्तः। तदादिष्टेन च मया तत्र सर्वथाऽसामर्थ्यवतापि गत्यन्तराभावान्न तदादेशः प्रत्याख्यातुमशाकि। ग्रन्थस्या-पूर्णतयाऽऽदर्शपुस्तकलिपिविकलतया च क्वचित् क्वचिद् विप्रतिपत्तिव्याकुलितोऽहं यदि तत्र भवतां कविराजमहोदयानां साहाय्यं नाध्यगमिष्यन्तर्हि कथमपि ग्रन्थप्रकाशनसमर्थो ना-भविष्य मतः सधन्यवादं स्वकृतज्ञतां विज्ञापयामि।

ग्रन्थमुद्रणस्य यावान् व्ययभारः पाण्डेय महाशयेन वोढुं स्वीकृत स्तदर्थं तमपि सधन्यवादमभिनन्दामः।

इदानीं विद्वद्वरेषु सविनयं सविश्रम्भञ्चाभ्यर्थ्य स्वोक्ति-मुपसंहरामि यन्मया यावच्छक्यं ग्रन्थमिममशुद्ध्यादिदोषरहितं विधातुं प्रयतितं किन्तु मन्मतेरपाटवान्मुद्राकरदोषा दन्य-विधात्प्रमादाद्वा यदत्र स्खलनं सञ्जातं तदर्थं ग्रन्थकारा स्तत्र-भवन्तश्चूड़ामणिपादाः श्रीमन्तः कविराज महोदया वा नापरा-धभाजः सर्वेऽपराधा ममैवेति सम्प्रधार्य वराकमिमं क्षाम्यन्तु कृपया ग्रन्थमिमं दृष्टिविषयतां नयन्त्विति चेत्यलं पल्लवितेनेति शुभम्।

वाराणसी
मार्गशीर्ष पूर्णिमा।
१९९६ सं०।

विदुषा मनुचरः
श्रीताराचरण शर्म भट्टाचार्यः

# A SHORT LIFE OF THE AUTHOR.

Pandit Sasadhar Tarkachuramani, the great exponent of *Sanatan Dharma*, the eminent scholar, thinker, savant ; the renowned expounder of Hindu religion and culture ; the acknowledged leader of the Hindu Revival movement during the last quarter of the Nineteenth Century was born in an orthodox *Vaidik* Brahman family at Paranpur in the district of Faridpur (Bengal) in the year 1851. The family had its original stock in Kotalipara in the same district which is the famous seat of Sanskrit learning, and claims as one of its eminent scions the great *Vedantic* scholar and saint Madhusudan Saraswati, commentator of *Srimad Bhagabad Gita* and author of a good many treatises on Vedanta Philosophy.

Pandit Tarkachuramani was born of poor parents. His father Haladhar Vidyamani was also a good sanskrit scholar but of moderate means. In his early years the boy received his education in *Vyakaran*, *Kabya* and *Nyaya* philosophy in a *tole* of Vikrampur in the district of

Dacca. But before he could finish his education, he lost his father and the burden of maintaining the family fell upon his shoulders. But Pandit Churamani, as we shall call him,* with his inborn talents and extraordinary memory, mastered the different branches of the *shastras* within a very short time. While he was hardly above his teens he attracted, by his profound scholarship and religious devotion, the attention and reverence of Rai Bahadur Annada Prasad Roy, a Brahman Zamindar of Berhampur in the district of Murshidabad, who appointed him as his family Pandit. Pandit Churamani lived in his house at Berhampur on the bank of the Bhagirathi and made the best use of his time by a more thorough study of the *shastras*. Dr. Ram Das Sen, another Zamindar and a literary man of Berhampur had a good library. Pandit Churamani took full advantage of it in order to quench his thirst for knowledge. This inordinate thirst for acquisition of knowledge was a predominent trait in his character. Whatever he learnt he had the power to assimilate within a short time. He could by deep thinking, solve many an abstruse problem of philosophy and religion, which baffled the intellect of many scholars. This

* The *Bhrigu Samhita* (भृगु संहिता) horoscope of the Pandit describes him as "पण्डितानां शिरोमणि:" ।

whole-hearted devotion to the Goddess of Learning tasted throughout his long life. He studied books of Anatomy and Physiology in Bengali translation and even attended the Dissection room of the Belgachia Medical College in Calcutta to see with his own eyes the different parts of the human body. Although he did not know English, he could easily understand the substance of the language hearing others talk.

After some years he accompanied the Rai Bahadur Zamindar to Benares, the greatest seat of Hindu learning and orthodoxy in India. He took the opportunity to give a finishing touch to his education and study of Hindu Philosophy. He studied the *Upanishads* with a *Dandi Swami* of renown, a follower of the Great Sankaracharya; Pandit Churamani also was his follower and accepted *Adwaitabad* as his creed.

But although he accepted the creed "सोऽहम्" (*So-ham*), "अहं ब्रह्मास्मि" (*Aham-Brahmasmi*), "सर्व्वं खल्विदं ब्रह्म" (*Surbam-khalwidam Brahma*) i. e. He and I are one, I am Brahma, All is Brahma—these ideas were according to him the ultimate goal of a *Vaidantic*; but in daily practice he must follow the tenets of the dual system

of philosophy (द्वैतवाद), for as long as he lives and moves in this phenomenal world (मायिक जगत्) he cannot divest himself of the worldly ideas and feelings ; he must accept as true, for the time being, what he sees, hears and feels ( the पारिभाषिक जगत् )—he must not pretend to dive into the depth of the पारमार्थिक जगत् (the noümenal existence), which is only possible in a state of निर्विकल्प समाधि (*Nirbikalpa Samadhi*).

It is for this reason that the *Adwaita-badi* adopts in his daily life the practice of सगुण and साकार उपासना (*Saguna and Sakar upasana*). Pandit Churamani also practised *sakar-upasana* and was a great devotee (भक्त). He was a *Sakta* (शाक्त) and used to worship God as the Divine Mother, like Ram Krishna Paramahansa, the great saint of Dakshineswar near Calcutta, who was his contemporary. The Paramahansa had great regard for the Pandit, who was also devoted to him. They would often meet, and revel in devotional topics. Tears would trickle down the cheeks of the Pandit while listening to the devotional songs of Paramahansadeva in praise of Goddess Kali.

After their stay at Benares, Rai Bahadur Annada Prasad came down to Munghyr, where

he had a house and Pandit Churamani accompained him. It was here, that he got an inspiration for the great mission of his life, for which his preparations were finished viz : the great task of Hindu revival.

But before we proceed further, it is necessary to take stock of the condition of Bengali society at the time. After the advent of the British in India English education, European ideas and foreign culture gradually made inroads upon the Hindu Society and Bengal took full advantage of them, perhaps more than any other Province of India. Christianity followed in the wake of European Civilization, and Christian Missionaries began to preach doctrines wholly antagonistic to the prevailing ideas and practices of religion. Schools and Colleges for imparting English education were established in Calcutta, and youngmen versed in English literature and philosophy, and quite innocent of the ancient learning and culture of the land, began to look askance at their ancestral belief and practices which they called superstition. English Professors like De Rozario and Richardson of the Hindu College, who were masters of English literature and eminent teachers, earned immense popularity with these youngmen,

but at the same time taught them to rebel against the current social customs and usages. Moreover they planted in their young minds the roots of scepticism, aguosticism and atheism. This was going on during the first quarter of the 19th Century, when Raja Ram Mohan Roy took the field.

Raja Ram Mohan was wellversed in the Bible, the Koran and the *Upanishads* and studied Vedanta philosophy. He was alarmed at the religious downfall of the Hindus and the shock given by the Christian Missionaries to the foundation of the society. In order to counter-act the effect of their teachings, and to bring back the minds of the educated youngmen to the fold of Hinduism, he bagan to preach Brahmo doctrines, *i.e.* the essence of Vedanta in the garb of Christianity. As laid down in the *Upanishad*, he taught "एकमेवाऽद्वितीयम्" —which means, there is only one existence ; but Raja Ram Mohan, interpreted it to mean that there is only one God without a second, thereby aiming a blow at the myriads of Gods and Goddesses, worshipped by the Hindus. Like the Missionaries he declaimed against the worship of "stocks and stones" in the Hindu temples and shrines, and railed at *Siva*, *Vishnu*, *Kali*, *Durga*

&c whom the Hindus worship as different aspects of Brahma, not to speak of the incarnations (*avatars*) like Ram Chandra and Srikrishna. Thus there was a common platform established between the Raja and the Missionaries in their crusade against the Hindu religion. But soon a great rivalry broke out resulting in a serious cleavage between them.

During the early efforts of the Missionaries a good many educated youngmen had embraced Christianity, such as Krishna Mohan Banerjee, and others. But later on, the Missionaries found to their great chagrin that the educated and enlightened portion of the society began to follow the teachings of the Raja in preference to the teachings of Christianity, and the number of converts among the educated classes began to dwindle down. There was then a pitched battle between Raja Ram Mohan and the Missionaries. The Raja wrote a good many treatises against the preachings of the missionaries which turned the minds of young Bengal against Christian doctrines. Thus the Brahmo Samaj was founded by the Raja to counter-act the influence of Christianity. But in order to make some sort of compromise, he adopted the method of Christian worship i. e.

congregational prayer once or twice in the week in a Prayer Hall like the Christian Church ; he proclaimed the superiority of individual reason to आप्तवाक्य i. e. belief in the infallibility of the *Vedas* or teachings of the *Rishis* ; he preached the equality of all men irrespective of birth ; he rebelled against the inborn superiority of the Brahmans and the prevailing caste-system ; he took steps to put a stop to such inhuman customs as the burning of the Hindu widows on the funeral pyre of their husbands &c. The establishment of the Brahmo Samaj marked a great epoch in the social and religious history of India.

After the Raja's death, Maharsi Debendra Nath Tagore and his disciple Brahmananda Keshab Chandra Sen took up the cause, and by their earnest efforts and constant teachings spread the tenets of the Brahmo religion among the English educated people of India. Another great reformer Pandit Dayananda Saraswati had already begun to preach against the so-called idolatory of the Hindus in the Punjab, and his great influence spread over Upper India. But unlike the Brahmo preachers, he adopted some forms of *Vedic* worship i. e. *havan* (हवन) which the Brahmos declaimed as idolatory. Still these two great forces joined

hands from opposite directions of India in order to crush Hinduism. Swami Dayananda had many followers, and he founded the *Arya Samaj.*

Both Raja Ram Mohan and Pandit Dayananda in their inordinate zeal to preach the teachings of the *Vedas* and *Upanishads*, as they understood them, completely ignored the evolution of religious thoughts, which taking their root in the *Vedas* had in the course of centuries spread many branches in the shape of the *Purans*, the *Smrities*, the *Tantras* according to the exigencies of time, and power of understanding and inclination of the devotees. They completely brushed aside the worship of *Avatars* ( incarnation, ) like Ram Chandra and Srikrishna which had enthralled the minds of millions of people for centuries ; and the worship of *Siva*, *Durga*, *Kali*, *Ganapati* and other Deities which appealed to the masses and inspired them with devotional feelings. The great *Bhakti* cult taught by *Srimad Bhagabat*, *Vishnu Purana* and other Vaishnab literature which was a source of inspiration to Chaitanya Deva was nowhere to be found in the teachings of Raja Ram Mohan or his followers; but it should be acknowledged that the Raja had studied some of the *Tantras* and quoted their *slokas* in his

arguments against current Hinduism. Keshab Chandra Sen also in his after life was drawn towards *Bhakti*, specially by coming in contact with Ram Krishna Paramahansa.

However, the teachings of the Brahmo Samaj spread far and wide in the country. Brahmo houses of worship were established not only in Calcutta but in many towns and important villages in the interior. Brahmo preachers were invited to preach among the masses. The orthodox Hindus, who were bewildered and unable to hold their own against the onslaught, began to be pushed into the background. National culture was held up to ridicule. Blind imitation of the west was considered to be the height of wisdom. The very name of "Hindu" excited contempt among the educated classes. Even the school boys imbibed the Brahmo doctrines and outlandish ideas which became the fashion of the day. Many young boys in their zeal to join the Brahmo-samaj cut asunder all family ties, and floated a drift in the sea of life. On the whole, Hindu society seemed to be in a tottering state and it was the dream of the Brahmo preachers that in the course of a few years Hindu temples would be razed to the ground and Brahmo churches would be built in their place.

When Hindu society was in this state of disintigration, Pandit Tarkachuramani received some thing like a divine inspiration to come to its rescue. At that time Babu Bankim Chandra Chatterjee was the acknowledged head of the educated community in Bengal. He is known as a great novelist, but to say this, it is saying too little of his literary attainments. He was in fact a versatile genius ; literary culture of both West and East met in him in the highest degree. It was he, who brought the Bengali language to the fore-front of the literary world by his many-sided activities. He was surrounded by a galaxy of literary men who contributed to the *Banga darsan*, a first class monthly magazine edited by him. Bankim Chandra was not, however, impressed by the preachings of the Brahmo-samaj and he kept aloof from the movement. On the other hand, he was a great admirer of Hindu religion, and studied carefully the *Mahabharat*, *Bhagabad Gita* and other religious books. Subsequently he wrote a commentary on the Gita in Bengali. He was an ardent devotee of Sri-Krishna whom he considered to be an Incarnation of God.

While staying at Munghyr, Pandit Tarkachuramani made the acquaintance of Sri Krishna

Prasanna Sen, who was a good orator and an advocate of Hindu religion. He had already begun an agitation and Pandit Churamani at once made up his mind to join the movement. He started for Calcutta, the great centre of all social, political and religious movements. On the way he made the acquaintance of Babu Indra Nath Banerjee, a famous lawyer of Burdwan and also a great literary man. Indra Babu was very much impressed with the religious discussion which he had with the Pandit at Burdwan and he considered him to be the fittest person to lead the Hindu agitation. He brought the Pandit to Calcutta and introduced him to Bankim Chandra and his literary circle, of which Indra Babu was a prominent member. They welcomed the Pandit very warmly and appointed a day to hear his discourse. They were very much impressed with his exposition of the Hindu *shastras*, and some of them were then and there converted to his views, as Babu Chandra Nath Bose has frankly written in his own life story. Bankim Chandra then took the lead and arranged for public meetings in Calcutta to hear the learned discourses of the Pandit, and he himself presided over the first meeting which was held at the Albert Hall. The *Bangabasi* weekly paper owned by Babu Jogendra

Chandra Bose was then the most popular paper in Bengal, and Indra Nath was (so to say) its "Friend, Philosopher and Guide." Indra Babu made this paper the mouthpiece of Hindu religion and the lectures and writings of Pandit Churamani being published in the *Bangabasi* were circulated throughout the Bengali speaking districts. The educated public of Calcutta found new light in the discourses of Pandit Tarkachuramani and they were very much delighted to hear from his lips the truths underlying the Hindu shastras and mode of worship which were supported by the western science and philosophy. The lectures of the Pandit continued week after week in Calcutta and people flocked to hear him with great ardour and zeal. He was also invited to preach in the interior from one end of Bengal to the other and in this work he was assisted by Sri Krishna Prasanna Sen and some other learned Pandits. In this way a reaction set in, and changed the trend of thought in Bengal within a few years. The re-action also exercised a great influence on the Bengali literature of the time. Bankim Chandra himself wrote some latter day novels—Devi Chowdhurani, Sitaram &c.-expounding the doctrines of Hindu culture as outlined in the *Gita* ; he wrote a life of Sri Krishna, and

a philosophical work named *Dharma-tattwa*. He also issued another monthly magazine named *Prachar*, which contained many articles on Hindu religion.*

Another high class monthly magazine named *Nabajiban* was brought out and edited by Babu Akshoy Chandra Sarkar another intimate friend of Bankim Chandra and a great literary man of the time, upholding the cause of Hinduism. Babu Chandra Nath Bose, a famous writer of Bankim circle wrote *Hinduttwa* and other works expounding the doctrines of Hindu culture. Besides *Bangabasi* some other weekly magazines were founded which exercised a great influene on the society. The theatres of Calcutta began to play many religions dramas such as *Prahlad Charitra*, *Dhruba Charitra*, *Budha Deva*, *Nimai Sannyas* &c written by eminent dramatists, which drew crowded houses and thus helped to spread Hindu religion. Mr. Ramesh Chandra Dutt I. C. S. had translated the *Rigveda* into Bengali, and following the European scholars, he expressed the view

*It should be noted here that Bankim Chandra stated in this magazine that the strictly orthodox ideas on food and drink as taught by Pandit Sasadhar Tarkachuramani were not essential parts of Hinduism and in this respect he dissented from the Pandit.

that the *Vedas* contained nothing but songs or hymns of the first Aryan settlers and peasant cultivators in praise of the natural phenomena such as the sun, moon, fire, lightning which excited the wonder of their ignorant mind. Pandit Churamani very ably refuted the theory and said that the *Rigveda* was the great store-house of scientific and philosophical truths "seen" by the Great seers called *Mantra-drasta* (मन्त्र द्रष्टा) ***Rishis***, which the later discoveries of European scholars are by and by confirming.

The above account is taken from an article written by an eyewitness, the late Dr. Dina Nath Sanyal Rai Bahadur, retired Civil Sugeon, which appeared in the *Manasi and Marmabani* monthly magazine shortly after the death of Pandit Churamani in 1928.

There were three or four chief planks on which the Brahmo samaj was built, and Pandit Churamani by his criticism knocked the bottom out of them.

(1) They culled the doctrine "**एकमेवाऽद्वितीयम्**" from the *Upanishad* which Raja Ram Mohan Roy interpreted to mean that there is only one God without a second, although in the *Upanishad*

it was used in the sense that there is one existence only—Brahma and the rest is *Maya* "असत्". This expression the Brahmos found handy to knock down the myriads of Gods and Goddesses which the Hindus were supposed to worship in place of one God. Pandit Churamani interpreted the expression in the *Vaidik* sense which was also accepted by Sankaracharya. He explained that the Hindus also worshipped one God, and the thirty-three millions of Gods and Goddesses were like the hundreds of millions of waves of the limit-less ocean. *Brahma* is absolute and eternal and as such He is beyond our comprehension,—"अवाङ्मनसगोचरम्" "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"—He is beyond our thought and speech. But as the ocean is known by its waves which are inseparable from it, so is Brahma or Iswara worshipped through the millions of Deities, who are but different manifestations of and inseparable from Him.

(2) The second plank was this : God is the Supreme Being—the Great Personality ; but He is without shape or form, He is *Nirakar* ; He pervades the Universe. The Hindus ascribe shape and form to Him and thereby make him a finite being. Pandit Churamani argued : It

is quite true that God is Infinite ; but we are finite beings, we cannot conceive the Infinite without giving Him a shape and form like ourselves. *arahma* is *Nirakar* as well as *Nirgun*—without form and without attributes, and as such, Brahma is beyond our thought and beyond worship "नेदं यदिदमुपासते"—श्रुतिः. We can only worship Him, when He assumes some shape and form and attributes with the help of His *Maya*, when He is called *Iswara*. We can then approach Him as a Personality. But in this state, He has *gun* ( attributes ) as well as *rup* ( shape ). We cannot conceive a Being, a Person, having attributes without having a certain form. But the Brahmos ascribe all sorts of *guns* ( attributes ) to Him—they call Him All-powerful, All merciful, All-knowing &c—their only objection is to call Him *Sakar* and to recognise certain shapes and forms in Him. To us human beings, mind without a body is unthinkable. But the question is, has God actually a body like ours ? Yes, the Universe is His body, so He is called विराट पुरुषः in the *Vedas*. The mind and body as conceived by us, the different shapes and forms of the *devatas* whom we worship, are part and parcel of the विराट पुरुषः the Universal body and mind, and are pervaded by Him. So while worshipping the different forms ( देवताः ) we worship Him only.

(3) But the Hindus do not worship God, argued the Brahmos, they only worship the idols made by them and also "Stocks and stones" as the Christian Missionaries said. Pandit Churamani replied—"This is not true. The images are worshipped by the Hindus, not as images, but as representations of the different aspects or manifestations of the Divine Being—just as the statue or picture of a man is adorned with wreaths of flowers with the object of showing respect, not to the statue or picture, but to the person whom they represent. At the same time when God is all-pervading, He is also immanent in the image or idol, and He is therefore worshipped in it. The Brahmos admit the presence of God everywhere, but they deny His presence in the idol. As to the "stocks and stones," they are mere symbols and are never worshipped as such. The Englishmen salute their National flag, the Union Jack. Do they thereby show their respect to the piece of cloth hoisted as the flag or they treat it as a symbol representing the British nation ? The *mantras* used by the Hindus in their worship show unmistakably whom they worship. Thus while pouring water on *Salgram*, a small ball of stone used as a symbol of God Vishnu, they cite the following *mantra* of *Rigveda-Purusha-sukta* :—

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतोवृत्य अत्यतिष्ठद्दशांगुलम् ॥

I worship the *Purusha*—the Great Personality, who has thousand heads, thousand eyes, thousand feet, who pervades the Universe &c.

(4) But how are the images formed ? Are they conceptions of the human mind ? It is laid down in the *Shastras :—*

"साधकानां हितार्थाय ब्रह्मणो रूपकल्पना ।"

Here the word "कल्पना" does not mean imagination of human mind, it means that *Brahma* assumes forms for the benefit of the devotees (कर्त्तरि षष्ठी), so *Brahma* Himself assumes the different shapes and forms as required by the ardent devotees. And why should He not ? He has unlimited powers, He is Mayadhish ( मायाधीशः ) the Master of the Maya ( माया ), with the help of the Maya he can assume any form He likes, as He states in the *Bhagavat Gita*

"प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया"

(5) But it should be noted that an outward image is not indispensable in Hindu worship. The mental image according to the "ध्यानम्" of the

particular Deity as described in the *shastras* is the real thing; it is represented by an outward image either in clay, stone, line or colour, for the benefit of the devotee. In this way Art is a handmaid to religion and there has been great improvement of art in all countries through the patronage of religion as in the Roman Catholic world, ancient Greece and Budhistic countries.

(6) It should also be remembered in this connection that according to the English philosophers, the human mind is incapable of thinking anything except in terms of time and space. It can conceive nothing but images. We cannot think of God except in the form of an image. Even an abstract idea such as "kindness" is quite unthinkable except as a concrete form of kind act. So the All-merciful, All powerful, Almighty is conceived by us as an image of a Person wielding irresistible power and all-embracing mercy. Add to this the image of a demon i.e. evil in human shape, whom the Person is vanquishing. Thus is formed the image of Goddess Durga in our mind, which has been subsequently represented by an image made of clay or stone for the benefit of the mass mind. Human mind as it is constituted does not remain content

with abstract ideas. It forms images according to its predilection. Thus Gautama Buddha had preached certain abstract ideas and rules of conduct as his religion. But they did not satisfy the mass-mind, so they formed an image of Buddha himself and began to worship him as God through the image. They also borrowed from the Hindus innumerable forms of Gods and Goddesses such as *Tara* etc which they worshipped. Thus was formed the sect of *Tantrik Boudhas.*

Likewise, the abstract teachings of the *Brahmo-Samaj*, although they appealed at first to the highly educated few, did not really give them satisfaction and appease their mental craving. They did not at all appeal to the masses. So this inborn weakness of the Brahmo cult was the real cause of its downfall. Pandit Churamani only brought it out and held it up with his lucid exposition and persuasive eloquence. His discourses were full of cogent reasoning and strictly logical arguments; they were supported by apt quotations from the *Upnaishads* on which the Brahmo preachers had laid great stress in preference to other *shastras*. He enlivened his exposition of **भक्ति साधना** by citing instances of *Bhaktas* and saints who had santified this land

of ours by their devotion, and speaking of them the speaker could not restrain his tears which produced a similar effect on the appreciative audience.

In this way Pandit Churamani worked for about 10 years and within this period he succeeded in turning the tide completely throughout Bengal. Many confirmed Brahmos left the Brahmo Samaj and returned to the fold of Hinduism; many waverers became true believers of Hindu doctrines; and those Hindus who had not left the practices of the old religion but did not really understand their significance, were re-assured with reasoned satisfaction. *Dharma Sabhas* were established at the head-quarters of many districts for the religious training of the younger generation and young boys flocked in numbers to hear the lectures of Pandit Churamani and other lecturers who were invited to attend from time to time. It was at this time that the seed of nationalism was sown by the Pandit in the minds of the younger generation in respect of national dress, national manners and customs and use of the mother tongue in our daily conversation which had degenerated into a mixed dialect, i.e. Bengali interspersed with English words.

Pandit Churamani wrote a book named *Dharma byakhya* (धर्म्म व्याख्या), a wholly original work on Hindu philosophy and religion. He wrote another book named *Bhaboushadh* ( भवौषध ) in which he lucidly explained the process of भक्ति साधना. He also wrote *Sadhan-Pradip* (साधन प्रदीप) in which he dealt with many abstruse principles of worship. Besides these he wrote some other smaller treatises. For about half a century, he produced a mass of literature, which were published in the weekly *Bangabasi*, the monthly magazine *Veda Vyas* ( वेद व्यास ), and other papers and which if collected would form a heap of books. He translated into Bengali the *Sankar Bhasya* शंकर भाष्य of *Srimat Bhagabat Gita* which was published with other commentaries by Pandit Prasanna Kumar Shastri.

After leaving Calcutta he came to reside at Behrampur on the holy bank of the Bhagirathi where he built a house. He had a great many disciples and admirers, and there are still hundreds of men in Bengal who were benefited by his precepts in formation of character. But the number of his *Mantra Sisyas* ( मन्त्र शिष्य ) was very small. He was very strict in the observance of religious practices and tried his utmost to follow

to the letter the precepts and injunctions laid down in the shastras. He did not care to amass wealth, which at one time he could easily do if he was so inclined.

In 1890, Sir Andrew Scoble, Law Member to the Govt. of India, introduced in the Indian Legislative Council the first Age of Consent Bill, and there was a tremendous opposition to it from all parts of Bengal as it encroached upon the social and religious rights and customs of the Hindus. Pandit Tarkachuramani was the leader of the opposition. Some tempting offers of Govt. favours were made to him, but he spurned them like bits of straw and stuck to his gun. The Bill was of course passed into law raising the age of consent of married women to twelve years, although it subsequently proved to be a dead letter. But the great agitation launched forth by him paved the way for the future national awakening. It also showed his immense influence at the time.

After returning to Berhampur he lived a retired life. It was at this time that he conceived the idea of writing the *Churamani darsan*. But it took long years to put it into practice. Sir Manindra

Chandra Nandi K. C. I. E., Maharaja of Kasimbazar (Berhampur) who was a great patron of learning and staunch Hindu, heard of his intention, and appointed a Pandit to act as his amanuensis, as Pandit Churamani could not then wield his pen on account of feebleness. The Bengali manuscript of this work was written by that Pandit at the author's dictation. The book was written in Sanskrit in order to make it available to Indian scholars outside Bengal and also scholars of foreign countries.

Pandit Churamani enjoyed a pension from the estate of Rani Annakali Devi, widow of his late patron Rai Bahadur Annada Prasad Roy, till his death. He also received much pecuniary assistance from some of his rich disciples of the Pakur Raj family, a prominent member of which Kumar Jnanendra Chandra Pande has laid the Hindu society under deep obligation by bearing the entire cost of bringing out this valuable posthumous work of Pandit Tarkachuramani. It would be well to publish a Bengali translation of the book for the benefit of the Bengalis.

Pandit Tarkachuramani breathed his last at 77 years of age on the 1st *Falgoon*, 1335 ( 1928 )

on the holy bank of the Ganges. It is a matter of regret that the older generation of Bengalis seem to have forgotten him and the younger generation do not know him, although they are all enjoying the fruits of his labours. But when a history of the revival of the Hindu religion will be written, the name of Pandit Sasadhar Tarkachuramani will be written in letters of gold.

**Jateendra Mohan Sinha Rai Bahadur,**
*(Retired Magistrate-Collocter, Bengal)*

---

ॐ नमो महाविद्यायै

# चूडामणिदर्शनम्

## प्रथमोऽध्यायः

ज्ञानात्मानं प्रपन्नोऽस्मि महाविद्यादिसंज्ञितम् ।
प्रकाशं तस्य रूपाणि व्याचिकीर्षुस्तमोऽन्तकम् ॥

इह तावद् विज्ञानमेव परमं दैवतं सत्यं सारतमं प्रियतमं स्पृहणीयतमं सर्वभूतैराराध्यमानं परमं पवित्रं सर्वेषामीशानं सर्वेषामाश्रयः प्रभवोऽप्ययश्चेत्यवगम्यते ।

दृशिमात्रं हि तच्छब्दलक्ष्यं स्वप्रकाशं विशुद्धसत्त्वोपाधिकं ब्रह्मात्मैकत्वसमुद्भासकं बुद्धिवृत्त्यविशिष्टज्ञानवृत्तिरूपमापन्नं प्रकाशरूपतामजहत् महाविद्याब्रह्मविद्या-ब्रह्मविज्ञान-प्रज्ञानघने-त्यादिनामभिराख्यायते । तत् पुनः परमेश्वर्याः परमेश्वरस्य वा चितिशक्तेर्नामरूपान्तरम् । तस्मात् तत् परमं दैवतम् ।

तत् पुनः सत्त्वरूपोपाधेरसत्यत्वेऽपि दृशिस्वरूपेण सत्यं तत एव वस्तु च । अतोऽन्यत्वेन प्रतीयमानं सर्वमवस्तु । ततस्तत् सर्वेभ्यः सारेभ्यः सारतमं रजस्तमोऽनुविद्धसत्त्वप्रदी-

ममपि तदध्यासबलात् साधारणज्ञानवृत्त्याख्यया अभिधीयमानं न सारत्वात् प्रच्यवते। अन्तःसंज्ञयाभ्युपगम्यमाना हि तरुलतादयोऽचेतनत्वेन मन्यमानेभ्यः परमाण्वादिभ्यः किञ्चित्सारवत्तयाऽभ्युपेयन्ते । तेभ्यश्च किञ्चिदाधिक्येन तिर्यञ्चः, तिर्यग्भ्यः पशवः, पशुभ्यो मानुषाः । मानुषेषु च विज्ञानन्यूनाधिक्यमात्रयैव सर्वे सारवन्तोऽसाराश्चेत्येवमादिना व्यवह्रियन्ते। येऽपि साधारणज्ञानसम्पन्ना हालिकादयस्ते वित्तबलादिसम्पन्ना अपि असारा उच्यन्ते। ये पुनः कस्मिंश्चिद् विज्ञाने कथंचिदधिकारिणस्ते हालिकादिभ्यः ससाराः। ये तु किञ्चिद्विशिष्टविज्ञानमारूढास्ते उत्कृष्टसारा इति। तस्मात् तत् सारतमं धनबलादि साराणाम् । इन्द्रियविषया भुज्यमाना यथा कियत्कालानन्तरमप्रियतामावहन्ति नैवं ज्ञानम्। न हि कश्चित् किञ्चन ज्ञानं लभमानः पुनस्तत् प्रत्याख्यातुमुत्सहते तृप्त्यनन्तरं लड्डुकादिवत् । प्रकृष्टतमबहुभोगसम्पन्नस्यापि ज्ञानेष्वासक्तेः प्रियतमं ज्ञानम्। प्रियतमत्वाच्च सर्वेभ्यो भोगेभ्य आधिक्येन ज्ञानाय स्पृहयते लोकः ।

आब्रह्मस्तम्बपर्यन्तं जगत् तमसाभिभूतं सर्वव्यवहाराक्षमं श्रवणादीन्द्रियैः प्रत्यक्षतो मनसा च मननादिना यथाभिलाषं व्यवहाराय ज्ञानमेव सततमाराधयतीति सर्वाराध्यं ज्ञानम् ।

विषयाः पवित्रा अपि सन्तो न सर्वथा निष्कलुषाः सम्भवन्ति। ज्ञानं तु विषयस्य पापवत्त्वेऽपि न कदाचित् पापवद् भवति प्रकाशरूपत्वात्। अतस्तत् पवित्राणामपि सर्वेषां

पवित्रतमम् । प्रकाश्यमेव ह्यपवित्रं भवति । सम्राजामपि ज्ञानाधीनत्वात् सर्वेषामीशितृ ज्ञानम् । आश्रयत्वादिकं चास्य सर्वेषामुपरिष्टात् प्रवेदयिष्यामः । अतएवैतद् व्याप्यदेवानाम-प्यनलानिलादीनां देवत्वात् परमदेवता ।

तस्मात् तस्मिन्नेव सर्वोत्तमोत्तमे स्वात्मानं समर्प्य तस्यैव यथाभागं रूपादिकं वक्ष्यामस्तदाराधनरूपेणैव ।

इति श्रीमन्महर्षि-कश्यपान्वयहलधरविद्यामणिभट्टाचार्या-त्मज श्री शशधर तर्कचूड़ामणिविरचिते चूड़ामणिदर्शने ग्रन्थ विषयप्रशंसनं नाम प्रथमोऽध्यायः ।

---

# द्वितीयोऽध्यायः

तस्याश्च परमदेवतायाः सत्त्वोपाधिना मूर्त्यादिकल्पनया तदुपाधौ रजस्तमोऽनुवेधविशेषमाश्रित्य ज्ञेयसहभावेन बहवो भेदा अध्येष्यन्ते।

मूर्त्तिकल्पनायां च नितरामेवाचरणाद् ब्रह्मरन्ध्रान्तान्यङ्गानि प्रत्यङ्गानि च यथायथं सन्निवेश्यानि। तत्र प्रथमं तस्याश्चरणमेव दिदृक्षामः।

अत्राविचारेण केवलेन्द्रियतो मातापित्रादिवाक्यतो वा निजस्वभावानुरूपकल्पनया वा सर्वेष्वपि विषयेषु ज्ञानस्य याऽवस्था प्रथमं प्रकाशते सा ज्ञानमूर्त्तेश्चरणत्वेन कल्प्यते, स्वल्पप्रकाशत्वाद् अधस्तनत्वात् प्रथमदृष्टत्वादन्तर्नयनस्याधउन्मेषेणैव लब्धत्वाच्च। इह तावत् सर्वेषामेव शिरसि ज्ञानस्योत्कृष्टप्रकाशो दृश्यते। ततः कण्ठादिक्रमेणाधस्ताज्जड़ताधिक्यं, चरणयोस्तु न किमपि बाह्यं रूपादिकं प्रकाशते। आन्तरोऽपि वृक्षादिवदल्पसंज्ञाप्रचारः। यश्च शीतोष्णादेः प्रचारः स चरणद्वारेण शिरस्येव भवति न चरणयोरित्यङ्गानां चरणं स्वल्पप्रकाशम्। अधः स्थितौ च चरणौ खट्वादिपादवद् आजानुतः शिरःपर्य्यन्तानि सर्वाण्यङ्गान्युद्वहतः। तथा प्रथमदर्शनीयं च चरणम्। इह हि चक्षुषोरधोदृष्टिरेव स्वाभा-

विकी, ऊर्ध्वदृष्टिस्तु किंचित् प्रयत्नान्तरमपेक्षते । तस्मान्मनुष्यादिमूर्त्तौ स्वाभाविकेन नयनसम्पातेन तच्चरणमेव दृश्यते । प्रयत्नान्तरेण तु हृदयं वा मस्तकं वा । विचारशून्यमिन्द्रियादिलभ्यज्ञानमपि तथा । तस्मात् तज्ज्ञानं ज्ञानमूर्त्तेः पादाङ्गत्वेनैव कल्पनीयमिति ।

यथाचैवं तत् प्रदर्श्यते । इह तावद् विषयभेदस्य ज्ञानभेदनियामकतया तद्भेदात्तद्भेद इति स्थितिः । ज्ञानमूर्त्तेः पादाद्यवयवरूपविशिष्टज्ञानभेदानां निर्वचनावश्यकत्वादादौ विषयभेदाः प्रदर्शयितव्याः । तत्र दृष्टिव्यवहाराणां प्राथम्यादिक्रमेण स्थूलसूक्ष्मत्वादिव्यवस्थया जातिव्यक्त्यादिभेदाच्च विषयाणां भेदा व्यवस्थाप्यन्ते । तेषां च पुनराधिदैविकादिभेदाः, तैश्च ज्ञानानां भेदा इति । तत्र प्रथमदृष्टिसम्बन्धात् प्रथमव्यवहारभूमित्वाच्च मृज्जलादयो मनुष्यपश्वादयस्तदवयवाश्च श्रवणनयनादयः स्थूला विषया उच्यन्ते ।

तेषां चाधिदैविकत्वादिभेदात् त्रैविध्यम् । तत्राधिदैविकविषया मृज्जलाग्निवाय्वादयः, पारदगन्धकादयश्च तेषामवान्तरभेदाः ; मनुष्यपशुपतत्रिसरीसृपादयश्चाधिभौतिका विषयाः ; श्रवणनयनादय इन्द्रियादयो मनोऽहंकारादयश्चाध्यात्मिका इति । एवं विषयभेदव्यवस्थया तज्ज्ञानानां भेदा व्यवस्थाप्यन्ते, आधिदैविकं ज्ञानमाधिभौतिकं ज्ञानमित्यादिना । तानि सर्वाणि ज्ञानानि ज्ञानमूर्त्तेश्चरणस्थानानि । तेषां पुनर्व्य-

ष्टिधारणया बहून्येव पदानि ज्ञानमूर्त्तेर्वक्तव्यानि, समष्टिधारणया तु एकमेव। तत्राधिदैविकानि पदस्थानानि ज्ञानानि तरलपिण्डादिभावेनाद्भासमानेषु भूतपदार्थेषु जलं, मृत्तिका, सिकता, लवणं, गन्धकं, पारदं, सुवर्णं, रजतं, ताम्रं, लौहं, सोसकमभ्रमित्येवमादीनि। एवमादीनि ज्ञानानि यावदपरीक्षितानि भवन्ति तावज्ज्ञानमूर्त्तेश्चरणाख्यायोग्यानि। यानि जलादिविषयेषु क्रियागुणादीनि तेषां सहैव जलादिभिरभिन्नतयोद्भासमानत्वात् तज्ज्ञानान्यप्यपरीक्षितानि जलाद्याश्रयज्ञानेष्वेवान्तर्भवन्तीति न तेषां पार्थक्यं कल्पयामः। कल्पिते च पार्थक्ये जङ्घादिरूपेण तानि द्रष्टव्यानि। आधिभौतिकानि तु मनुष्याः पशवो वयांसि तिर्यञ्चः सरीसृपा उद्भिज्जा जलजा इत्येवमादीनि। पशुषु पुनर्गावो महिषा अश्वा मार्जाराः कुक्कुराः शृगालाः शूकरा व्याघ्राश्चेत्येवमादीनि। पतत्रिषु काकाः शुकाः कोकिला बकाः कुररं शवटका इत्यादीनि। तिर्यक्षु वल्ल्यः शरटाः करटा लता उत्कुणा मत्कुणा मशका इत्येवमादीनि। सरीसृपेषु सर्पा महीलता इत्यादीनि। उद्भिज्जेषु तरवो लता गुल्मा गुच्छा इत्यादीनि। जलजेषु च मत्स्याः कूर्माः कर्कटा मकरा नक्रा जलौका इत्यादीनि। ज्ञानान्याध्यात्मिकानि पुनर्बाह्याभ्यन्तरभेदेन द्विविधानि तत्र बाह्यानि देहतदवयवविषयाणि। यथा शरीरं, मुखमण्डलं, गण्डयुगलं, ललाटफलकं, भ्रूयुगलं, अधरोष्ठौ, कर्णयुगलं, नयने, केशपाशो, भुजौ, करौ, स्तनौ, वक्ष, उदरं नाभिरित्येवमादीनि। सर्वाण्येवैतानि ज्ञानानि

ज्ञानमूर्तेः पदत्वेन कल्पनीयानि। तत्र शारीरज्ञानेषु यदा मुखादीनां स्वस्वक्रिया नावभासन्ते पृथक् पृथक् शक्तिपरिचालनेन तत्तत् क्रियानिष्पादकयन्त्रभावश्च नावद्योतते, अङ्गीभूतपेशीशिराधमनीस्नाय्वस्थ्यादीनि, तदारम्भकाणि रसरुधिरादीनि च नाभिस्फुरन्ति, किन्तु केवलं देहांशरूपतैवाऽऽभाति सह सौन्दर्यादिना चन्द्रपङ्कजादीनि चोपमानत्वेन समापतन्ति, तदैवैतानि ज्ञानानि पदत्वेनारोप्यन्ते। येषु पुनर्ज्ञानेषु तत्तत्क्रियायन्त्रभावादीनां परिस्फुरणं स्यात् तान्यङ्गत्वेन कल्पनीयानि। तच्चोपरिष्टात् प्रवेदयिष्यामः। आन्तराणि चाध्यात्मिकानि। यन्त्रेष्वेव श्रवणनयनादिषु शरीरेषु, श्रवणेन्द्रियं नयनेन्द्रियं घ्राणेन्द्रियं रसनेन्द्रियं वागिन्द्रियमित्यादीनि ज्ञानानि। अन्तःकरणज्ञानं च हृत्पुण्डरीके। एतान्यपि ज्ञानस्य चरणानि। तथा प्रकृतलक्षणमपहाय केवलदानादिरूपेष्वनुष्ठानेषु वधबन्धनादिरूपेषु च धर्म्माधर्मत्वप्रख्यापकाणि ज्ञानानि। तथा स्थूलोऽहं कृशोऽहमित्यादिरूपेण देहादिष्वात्मत्वप्रकाशकानि। तथा परमेश्वराधिकारे पृथिवीपिण्डादिवद् गोलोकवैकुण्ठादिकं परिकल्प्य तत्र दृश्यमानसौधादिवद् विचित्रभवनोद्यानजलाशयादीनि च व्यवस्थाप्य तेषु पुनर्विष्ण्वादिकं मानुषवच्छरीरिणं राजानमिव निश्चित्य तत्र तत्रैव परमेश्वरत्वं निबद्धमित्येवंरूपदर्शनानि। तथा रामकृष्णादिषु तथा दाक्षायणी कात्यायनी हैमवत्यादिषु च। एवमादीनि सर्वाण्येव ज्ञानानि ज्ञानस्य चरणत्वेनावस्थापयितव्यानि।

तथा व्यावहारिकाण्यपि ज्ञानानि शिल्पजातादिविषयाणि, गृहं शय्यासन पीठं खट्वा वस्त्रमलंकाराः कुम्भो घट इत्येवमादीनि, उद्भिज्जादि प्राणिजातफलादिविषयाणि च । फलं धान्यं तिला मूलं शाकमित्येवमादीनि तद्विकारशिल्पसहायवस्तुविषयाणि च, अन्नं व्यंजनं पायसं पिष्टकं दधि घृतं क्षीरमित्येवमादीनि । उपकारकत्वादिनाभिसम्बद्धेषु च माता पिता भ्राता भगिनी स्वामी जायेत्येवमादीनि दैवेषु च खातेषु विल तड़ागगर्त्तनद्यादिविषयाणि । एतानि च ज्ञानानि ज्ञानस्य पदनामयोग्यानि । मानवादिपदवत् तमोऽभिभूततया विषयाणां सर्वथाऽप्रकाशनात् । एतेषां विषयाणामाभ्यन्तरिकस्तराणां बहुविधभेदेनोपर्य्युपरि बहुविधज्ञानानां सत्त्वादेतानि ज्ञानानि तेषां सर्वेषामधस्तनानि । वाहकानि च तेषां जन्मत एव दशदिग्भ्यः प्रकाशात् प्रथमानि च, अन्तर्नयनरूपस्य मनस आभ्यन्तरानुसन्धानव्यतिरेकेणाधःस्थानीयवहिःसन्निपातमात्रेणैव प्रकाशमानानि चेत्यतः पदानीव लक्ष्यन्ते ।

अथ यदि तस्या मूर्त्तेस्तत्र पादाद्यवयवद्दृष्टेरस्फुरणेन देहपिण्डभावमात्रस्फूर्त्या त्वङ्मांसस्नाय्वस्थिमज्जादीन्यध्येष्येरन् तदैतानि ज्ञानानि तच्छरीरपिण्डस्य त्वग्रूपेण मन्तव्यानि आपातप्रतीयमानत्वाद्, अभ्यन्तरस्तरवर्तिनामन्येषां ज्ञानानामावरकत्वाच्च ।

अथ चेत्तस्य ज्ञानस्य बाल्याद्यवस्थाः परिकल्प्येरन् तदैवमाद्याकारेण विषयाणामुद्भासमानावस्था तस्य बाल्यं, बालवज्ज्ञाख्याभिसम्बन्धात् ।

यदि वा आलोकादिवत् प्रकाशाप्रकाशतया लक्ष्येत तदा सौरालोकस्योषःप्रकाशवत् स्वल्पप्रकाशावस्थेयं ज्ञानस्य मन्तव्या। एवमन्या अपि बहुविधकल्पनाः सम्भवन्ति। सर्वथैव तु प्रदर्शितानि ज्ञानानि नाशेषतो विषयानुपस्थापयन्तीत्यस्फुटतया न विशेषेण सारवन्ति, तथापि तान्याराध्यान्येव नाऽनादर्त्तव्यानि व्यवहारोपयोगित्वाद् अभ्यन्तरस्तरवर्त्तिज्ञानानां च सहायत्वात्। अन्यथा सर्वव्यवहारलोपः सर्वज्ञानानुत्पादश्च प्रसज्येत। यदि हि जलमृत्तिकादीनि, शय्यासनादीनि, अन्नपानादिभोजनद्रव्याणि मातापित्राद्यभिसम्बन्धिनश्च तत्तद्रूपेण न परिचीयेरन् न तर्हि सततप्रयोजनसिद्धये तानि व्यवह्रियेरन् तदाश्रितानि वाक्यानि वा नोच्चार्येरन् न वा अन्यान्यपि ज्ञानानि वाक्यतः परीक्षादिव्यवहारतश्च प्रतिपाद्येरन्। एवं च सति आन्ध्यमूकत्वादिप्रसङ्ग एवापतति। तथा च सर्वव्यवहारलोपप्रसङ्गः। आ तिर्य्यग्भ्य आ च मानुषाद् विजानन्त एव जलमृत्तिकादिभावं शय्यासनादिरूपमन्नव्यञ्जनाद्यवस्थाश्च क्षुत्तृष्णाद्यातुरा निद्रालस्यशीतोष्णाद्यार्त्ता वा अन्यप्रयोजनेप्सवो वा यथासम्भवं तत्तद् वस्तु समाहर्त्तुं शक्नुवन्ति, वाग्भिश्चाभिलपन्ति, अभिलप्य समाहृत्य च यथासम्भवं तानि व्यवहरन्ति। विजानन्त एव पुनरेतान् भावान् निपुणा मानवाः "अस्मिन् जले, अस्यां मृदि, अस्मिन्नन्ने, व्यंजने, पयसि, हविषि वस्त्रादिषु, आसनादिद्रव्यादिषु चापातप्रतीयमानावस्थाभ्यः परं केचन अवस्था-

विशेषः सन्ति न वेति" संशेरते, संशय्य च तत्त्वमन्विच्छन्ति परीक्षन्ते, परीक्ष्य चैतेषां जलादीनामन्तः प्रत्येकं बहुविधानि तत्त्वानि परिचिन्वन्ति । तेषु पुनस्त्रसरेणुपरमाण्वादीनि ततश्च शेषतत्त्वमप्याविष्कर्त्तुं शक्नुवन्ति । तस्मादेतानि ज्ञानान्युपरितनानां सर्वेषामेव ज्ञानानां साक्षात् परम्परया वाऽऽलम्बनभूतानि । अतस्तमोऽभिभूतत्वेनापकर्षेऽप्येतानि संग्रहीतव्यान्यादरणीयानि च । अत एतद् व्यवहारभूमावेवंविधज्ञानानां प्रमितित्वमेतत्प्रदातारश्च गुरव एवेति मन्तव्यम् । तत्तज्ज्ञानप्रकाशकप्रस्थानं च शास्त्रत्वेनावधेयम् ।

इति श्रीमन्महर्षि कश्यपान्वयज हलधर विद्यामणि भट्टाचार्य्यात्मज श्रीशशधर तर्कचूड़ामणि विरचिते चूड़ामणिदर्शने द्वितीयोऽध्यायः ।

---

# तृतीयोऽध्यायः

अथेदानीं ज्ञानमूर्त्तौ जङ्घोरू चिन्तयामः। तत्र जलादौ पृथग्भावेन गुणक्रियादिकमारभ्य परमाणुपर्य्यन्तदर्शनं जगन्मूलत्वदर्शनं च ज्ञानमूर्त्तेर्जङ्घावयवत्वेन चिन्तनीयम्। तथा शय्यासनवसनाशव्यंजनादिषु प्राणिशरीरेषु चोपादानतत्त्वविषये आपातप्रतीयमानस्थूलभूतारब्धत्वज्ञानं, पुनश्च शरीरे अवयवतत्त्वविषये श्रवणनयनादीनां सहैव क्रियागुणादिभिस्तत्तत्क्रियासाधनयन्त्रत्वविज्ञानं, इन्द्रियाणां च भौतिकमूर्त्तिपर्य्यन्तप्रकाशः, आत्मविषये च मस्तिष्कादिशक्तिविशेषत्वस्य तद्गुणविशेषत्वस्य वा बुद्धिनामकर्त्तुपाधिविशेषत्वमाभासः। मातापित्रादिषु च मातृत्वादिसम्पादकविशिष्टक्रियागुणादिप्रत्ययः। इत्येवमादीनि ज्ञानानि ज्ञानस्य जङ्घानामधेययोग्यानि, पदस्थानीयेभ्यो ज्ञानेभ्य आश्रितत्वेनोपरिवर्त्तित्वाद् अन्तर्नयनस्य मनस आपेक्षिककिंचिदधिकोन्मेषेण प्रकाशमानत्वाच्च। यथा चैतत् तदवधेहि।

इह तावत् क्षितिजलाग्न्यादिमूर्त्तीनां यथासम्भवं सहैव शैत्यद्रवत्वादिभिर्द्विचतुर्भिर्गुणैः परिचयेन पदचारणपानावगाहनादिव्यवहारेणैव च मानवाः प्रायेण सन्तोषमावहमानास्तत्सम्बन्धिनामन्येषां विषयाणां जिज्ञासाप्रवणतामेव न

मनसा स्पृशन्ति । तेषां दृष्टौ चामरणात् क्षितिर्जलमित्यादिरूपाण्येव तत्त्वान्यवतिष्ठन्ते, नैतस्माद् परं तत्त्वमस्तीति धारणा च, सप्रमाणताबुद्धिश्च तस्यां धारणायाम् । एवमादिज्ञानानां यथा ज्ञानमूर्त्तेश्चरणत्वं, तथा येषामेवं ज्ञानमात्रेऽधिकारस्तेऽपि यावन्मनुष्यसमाजस्यैकस्यां मूर्त्तावङ्गीक्रियमाणायां तस्याः पदस्थानीयाः । बाल्यकौमाराद्यवस्थासु पुनस्तस्याः कल्प्यमानासु देहस्य जरसा वृद्धत्वेऽपि समाजमूर्त्तेर्बाल्यावस्थायामेव ते स्थापयितव्याः । बाल्यावस्थायां संगृहीतस्यापरीक्षितस्य ज्ञानस्यैव सद्भावात् ।

अथ येषां मनःस्वल्पतरा प्रेक्षा परिस्फुरति ते तु क्षित्यादिषु सर्वेष्वपि वस्तुष्वापातदृष्ट्या यं यं भावं संगृह्णन्ति न तन्मात्रेण सन्तुष्यन्ति । ततस्तत्र तत्रानुवर्त्तीनि विशिष्टगुणकर्मादीनि जिज्ञासमानाः परीक्षमाणाश्च वस्तूनां बहिःस्तरादूर्ध्वतनानि तत्त्वान्यवलोकयन्ति, अवलोक्य च तथैव निश्चिन्वन्ति । स एव निश्चयो ज्ञानस्य जङ्घात्वेन परिकल्प्यते । तन्निश्चयवन्तश्च समाजमूर्त्तेर्जङ्घारूपाः ।

तच्च ज्ञानं क्षित्यादितो यथायोग्यं प्रदर्श्यते । प्रथमं तावद् ज्ञानजङ्घादर्शिन इह जगति द्रव्यगुणकर्मसामान्यविशेषसमवायाभावरूपान् सप्तैव पदार्थान् पश्यन्ति, ततोऽभावरहितान् षट् । तत्र क्षितिजलानिलानलनभोमनःकालात्मनो द्रव्यत्वेन गणयन्ति । गन्धरसरूपस्पर्शशब्दसंख्यापरिमिति-

पृथक्त्वसंयोगविभागपरत्वापरत्वज्ञानसुखदुःखेच्छाद्वेषयत्नगुरुत्वद्रवत्वस्नेहसंस्काराददृष्टानि च गुणत्वेन मन्यन्ते। उत्क्षेपणावक्षेपणाकुंचनप्रसारण गमनानि तु कर्मत्वेन, सामान्यत्वेन च जातीः, विशेषत्वेन च क्षित्यादिपरमाणुगतपरस्परविभेदकधर्मान् ख्यापयन्ति । ततः पुनरमीषु द्रव्येष्वमीषां गुणानां कर्मणां च सामान्यविशेषयोश्च वृत्तिनियामको यो मुख्यः सम्बन्धः, यश्च द्रव्यगुणकर्मसु सामान्यस्य, तं समवायत्वेन पश्यन्ति, शून्यं च भावप्रतियोग्यभावत्वेन मन्यन्ते, तत्र क्षित्यप्तेजोमरुद्व्योमसु भूतत्वं व्यवस्थाप्य स्वाभाविकदृष्ट्या समुद्भासमानेष्वेषु मृत्तिकाजलाग्निवायुषु क्षित्यादिनामधेयभूतत्वं पर्यवसाययन्ति आपरमाणुभ्यः, परमाणवश्च दृश्यमानमृदादीनामेवांशाः क्रमेण परिमण्डलाकारा अंशविशेषा अविभाज्यत्वात् स्वयं स्वजातीयांशशून्या इति । तेषां परस्परमिलिताभ्यां द्वाभ्यां द्वाभ्यां यो यः पिण्डविशेषो भवति तं द्व्यणुकं अणुं च प्रवदन्ति। त्रिभिश्च परमाणुभिर्निर्मितं पिण्डं त्रिशता च केचन ब्रुवन्ति। तत्र स्थूलमृत्तिकात आद्व्यणुकादनित्यत्वं परमाणूनां च नितयत्वमूलकारणत्वे कल्पयन्ति । एवं व्यवस्थाप्य तेषां चतुर्णां मृदि गन्धरसरूप स्पर्श संख्या परिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्ववेगाख्यसंस्काररूपांश्चतुर्दशगुणान् परिकल्पयन्ति। अम्भसि पुनर्गन्धहीनान् स्नेहसहितांश्चतुर्दश तेजसि च रूपाद्यपरत्वान्तान् नव द्रवत्ववेगौ चेत्येकादश, वायौ पुना रूपद्रवत्ववर्जितान् नवसंख्यका-

नेतान् गुणान् पश्यन्ति । नभसि तु नित्यत्वव्यापकत्वे परिकल्प्य शब्दसहितान् संख्यादिपञ्चगुणान् निश्चिन्वन्तीत्येषा तेषां सगुणक्रियभूतविषयिणी दृष्टिर्द्रव्येषु । शिष्टानां च चतुर्णां द्रव्याणां नित्यत्वं परिकल्प्य कालदिशोः संख्यापरिमितिपृथक्त्व संयोगविभागान् मनसि च तानेव परापरत्ववेगसहितान्, आत्मनि परमेश्वरभिन्ने संख्यादीन् पञ्च ज्ञानसुखदुःखेच्छाद्वेषयत्नधर्माधर्मभावनाख्यसंस्कारांश्च गुणान् कल्पयन्ति । ईश्वरे पुनः संख्यादिपञ्चकं ज्ञानमिच्छा प्रयत्नश्चेत्यष्टौ गुणानवधारयन्ति । तत्र च नभोदिक्कालात्मसु नित्यं परममहत् परिमाणं मन्यन्ते । आद्येषु च त्रिषु एकत्वसंख्यां चतुर्थे तु बहुत्वं, नित्यज्ञानेच्छायत्नान् पुनरीश्वर एव कल्पयन्ति । आत्मनः स्वरूपन्तु न निर्दिशन्ति । फलतस्तु तस्य ज्ञानाधारत्वात् स्वयमप्रकाशरूपतया जड़त्वमेव तेषां मत आयाति । नित्यत्वन्तु परमाणुगगनादिवत् तेषामभिमतम् । मनस्तावत् तेषां कस्यचिद्दृष्ट्या परमार्थतो वायोरेव परमाणुविशेषो न त्वर्थान्तरम् । वर्णितेश्वररूपात्मकमेव च ब्रह्म न त्वन्यरूपं किञ्चन विद्यत इति तेषां पदार्थविषयिणी दृष्टिः। एतेषां ज्ञानानां बहूनि सर्वत्रैव पृथिव्यां विराजन्ते ; भारते तु यथासम्भवं पात्रभेदात् सर्वाण्येव, पात्राणां च नव्यपुरातनभेदेन सत्यमिथ्याभेदाद् धारणानां महाभेदो दृश्यते । इह तावत् प्रदर्शितानां सर्वेषामेव ज्ञानानां तत्तद्व्यवहारभूमावुपयोगितया सत्यत्वमेव सर्वैरवधेयम् । अन्यथा सर्वव्यवहारलोप इत्यवो-

चाम । अत्रार्वाचीनाः सम्प्रदायविशेषा एतेषां पारमार्थिकमपि सत्यत्वमवधारयन्ति । पुरातनास्त्वाचार्य्याः भगवत्कणाद-गौतमादयो व्यवहारिकसत्यतामवलम्ब्यैतेषामतिसाधारणा-न्यपहायानेकानि प्रदर्शयामासुः । तत्रोपरिष्टात् प्रवेदयिष्यामः । एतेषां यानि साधारणानि तानि प्राक्परिकल्पितपदस्थानीय-ज्ञानानामुपरितनत्वात् तदुपरिवर्त्तिभ्यश्च ज्ञानेभ्योऽधस्तनत्वा-ज्ज्ञानमूर्त्तौ जङ्घात्वेन कल्प्यन्ते । कणादगौतमादिज्ञानानि तु तेभ्य उपरितनत्वादूरु स्थानानीति ।

इति श्रीमन्महर्षि कश्यपान्वयज हलधर विद्यामणि भट्टाचार्य्यात्मज श्रीशशधर तर्कचूड़ामणि विरचिते चूड़ामणि-दर्शने तृतीयोऽध्यायः ।

---

# चतुर्थोऽध्यायः

वस्तुतस्तु गौतमीयदर्शनं न पदार्थतत्त्वानुसन्धानपरं किन्तु तत्सन्धानोपायप्रमाणतत्त्वान्वेषणपरम्। प्रमाण-ज्ञानानि च ज्ञानमूर्त्तेरापादतलाच्चिकुरःपर्यन्तं समतयैव वर्त्तन्त इति। यस्मिन्नङ्गे तेषां सम्बन्धस्तदङ्गस्यैव रक्षकरूपत्वगादि-स्थानीयत्वात् तानि तस्यास्त्वगाख्यानयोग्यानि सर्वाङ्गस्यैव। यत् पुनस्तत्र प्रमेयनिरूपणं तत् प्रमाणानां प्रयोगार्थं, न च तत्तत्त्वनिश्चयार्थम् अतत्परत्वाद् ग्रन्थस्य। यत्परः शब्दः स शब्दार्थ इति न्यायात्। तस्मात्तन्निरूपणं न सिद्धान्तासनमा-रोढुमर्हति। वैशेषिकवदित्यतो गौतमीयदर्शनस्य प्रमेयज्ञानं न ज्ञानमूर्त्तेरङ्गत्वं भजत इति मन्यामहे। यदि पुनस्तथैवाभ्यु-पगम्यते तदा वैशेषिकज्ञानवदेवैतत् स्थापयितव्यमिति।

पाश्चात्याना मप्यश्वक्रान्तोद्भवानां सिद्धपुरवासिनां चैवंविधं ज्ञानं ज्ञानमूर्त्तेरूरुत्वेनैव कल्पयितव्यम्। एतदधस्ताच्चान्यदेशीयानां ज्ञानानि यथायथं प्राग्वर्णित-जङ्घाचरणस्थानानीति मन्तव्यम्। एवंविधधारणावन्तश्च समाजमूर्त्तेरप्यूरुस्थानानीति।

अथ रसायनविद्या ज्ञानस्योदरं प्राकृतविद्या च स्तरभेदे-नोरः कण्ठदेशौ। एते पुनरस्मद्देशे आयुर्वेदेषु तन्त्रेषु श्रुतिषु

च बृहदारण्यकाद्यासु विराजेते । एतत्परवर्त्तिज्ञानाधिकारिणश्च मानवाः समाजमूर्त्तौदरादिस्थानीयाः । शारीरतत्त्वभूतत्त्वखतत्त्वादिविद्यानामप्यूरुतः परवर्त्तिनीनां यथायथमेष्वेव स्थानेऽन्तर्भावो वेदितव्यः, समाजाङ्गोपन्यासश्च । अतः परमौपनिषदीयाध्यात्मविद्या, कपिल-पंचशिख-पतञ्जल्यादिप्रचारिताश्चाध्यात्मविद्या औपनिषदीयब्रह्मविद्या च सर्वोपरि विराजमाना ज्ञानमूर्त्तेः शीर्षत्वेन व्यवस्थाप्याः । एताः पुनर्न शब्दबोधमात्रत्वेन विद्यात्वं भजन्ते । विषयाणां मानसप्रत्यक्षगोचरतया मानसप्रत्यक्षरूपा एवात्र विद्या भवन्ति । तादृशज्ञानवन्तश्च मानवसमाजस्यापि मस्तकत्वेन मन्तव्या इति ज्ञानमूर्त्तेरंगविन्यासः ।

इति श्रीमन्महर्षि कश्यपान्वयज हलधर विद्यामणि भट्टाचार्य्यात्मज श्रीशशधर तर्कचूड़ामणि विरचिते चूड़ामणिदर्शने चतुर्थोऽध्यायः ।

---

# पञ्चमोऽध्यायः ।

सर्वासामेव विद्यानां स्व स्व व्यवहारेषु पृथग्विधेषु फलवत्त्वादावश्यकत्वं मानवादिशरीरस्य करचरणादिवत्, प्रमात्वं च तत्तद्व्यवहारक्षेत्रे विरोधाभावादवगम्यते. सत्यपि तदूर्ध्वांगरूपपरवर्त्तिज्ञानेन वाधितत्वे इत्युक्तम्, अत्र तद् विशेषेण वर्ण्यते उपयोगित्वात् ।

यदा खल्वेकस्मिन्नेव व्यवहारे एकस्मिन्नेव वस्तुनि परस्परविरुद्धशक्त्यनावच्छेदकद्वयेन विभिन्नज्ञानद्वयसम्भव-स्तदा तज्ज्ञानद्वयस्य संशयत्वमेकतरस्य प्रमात्वं चान्यतरस्य भ्रान्तित्वविरोधश्चापतति. न तु भिन्नव्यवहारे भिन्नवस्तुनि । यथा स्थाणुर्वा मानुषो वेति ज्ञानं संशयनामधेयं भवति । यदा तु स्थाणौ स्थाणुत्वेनावधारणं तत् प्रमा । तस्मिन्नेव मनुष्य-त्वेनावधारणं भ्रमः । सति च स्थाणुत्वावधारणे यदि पुनस्तदेव वस्तु मनुष्यत्वेनाप्यवधारयितुं कल्प्येत तदा विरोध आपतति । स्थाणुमानवयोः पुनर्भिन्नयोरधिकरणयोः स्थाणुत्वमानुषत्व-प्रत्यययोः कश्चन प्रमात्वविरोधः । व्यवहाराभेदादुभयोरप्येवं वेदितव्यम् ।

अत्र व्यवहारो जीवानां विषयाभिसम्बद्धो व्यापारविशेषः स च बाह्याभ्यन्तरभेदेन द्विविधः। तत्र बाह्यो गमनशयनोपवेशन-

भोजन पानावगाहनादि प्रयोगरूपः। आन्तरस्तु सेन्द्रिय मनोऽहङ्कारबुद्धीनामभ्यासपरिपाकजधारणाविशेषाधीनः। व्यवहारस्य च भेदात् तत्त्वविचारेणाभिन्नमपि वस्तु भिद्यमानमिव सद् भिन्नत्वेनैवाभिलप्य समाश्रियते लोकैः। सर्वदैव सर्वोपरितमज्ञानेन सर्वेषां जडपदार्थानां बाधितत्वादेवमाश्रयो नोपालब्धव्यः अन्यथा सत्यज्ञानाश्रयणे सर्वव्यवहारलोपः प्रसज्येत। न चास्मिन् व्यावहारिकज्ञानस्य भ्रमत्वेऽपि तदधीनव्यवहारस्य भ्रममूलकत्वव्यवहारो दृश्यते। गन्धरसरूपस्पर्शशब्दा हि प्रमाणतः शक्तिविशेषमात्ररूपेण निर्णीता अपि घ्राणेन्द्रियादिव्यवहारवर्त्तमानैर्लोकै गुणत्वगन्धत्वादिजातिविशेषैः शक्तितः पदार्थान्तरत्वेनावधार्य्यन्ते। तान्येव पुनः परीक्षाक्षेत्रारूढैर्विपश्चिद्भिः पदार्थ विशेषतरंगादिसङ्घातरूपेण शक्तिविशेषेण व्यवसीयन्ते। न चेन्द्रियव्यापारे वर्त्तमानास्तेऽपि गन्धादिभावं न प्रतियन्तीति वक्तुं शक्यते, न चैतद् गन्धगुणादिज्ञानं परवर्त्तिपरीक्षितज्ञानेन भ्रमत्वपक्षे निक्षिप्तमपि भ्रमत्वेन व्यवह्रियते। तथा अनन्तक्रियानिष्पादकपराणां प्रेर्यप्रेरकभावापन्नानां पृथक्भावैरुत्क्षेपणावक्षेपणाकुंचन प्रसारण गमन भ्रमणरेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनादिभि र्व्यापारैरविरामं वर्त्तमानानामाकेशाग्राद् आ च पदनखाग्राद् वार्त्ताप्रेषणव्यजनादिषु वैद्युतयन्त्रवदपरिसंख्येयानां यन्त्रविशेषाणां समष्टिरूपेऽस्मिन् शरीरे कविप्रभृतयः शरीरावयवविषयकाभ्यन्तर व्यवहारालम्बनेन तादृशा-

यन्त्रभावमपश्यन्तः, पश्यन्तोऽपि च तदनवधानपराः, तत्तत्-क्रियानिष्पादननिरूढनामान्यपि तत्तद्वयवनिरूढत्वेनाध्या-स्याधरोष्ठदन्तनासिकागण्ड नयन ललाटादीनि मृत्पिण्डा-द्यवयववच्छरीरावयवत्वेन पश्यन्ति सौन्दर्य्यादिकं च यथा-यथं वर्णयन्ति । पक्वबिम्बफल कुन्दपंकजादिभिश्च यथायथम् उपमापयन्ति । अन्ये पुनर्मेधाविनो वर्णितयन्त्ररूपेणैव तान-वयवान् पश्यन्ति । नामानि च तेषां तत्तत् क्रियासम्पादक-त्वेनैवावगच्छन्ति, न तु प्रकृति प्रत्ययार्थ शून्यतया तत्तदंशमात्रे रूढतया । एवं परवर्त्तिपरीक्षितज्ञानेन कव्यादिकल्पितज्ञाना-नामतात्त्विकत्वेऽपि निर्णीते न तानि मिथ्यात्वेन व्यवह्रियन्ते । तथा पानभोजनादिषु वर्त्तमाना अविज्ञा विज्ञा वा जलान्नादि-रूपेणैव द्रव्याणि पश्यन्ति न तु तत्प्रकृतिमनुसन्दधाना-स्तत्तत् प्रकृतिरूपेण । परीक्षाभूमावुपस्थितास्तु सर्व एव तत्तत् प्रकृतिरूपाणि द्रव्याणि पश्यन्ति, न तु जलादिरूपाणि वस्त्वन्तराणि । न चैतेन ज्ञानेन जलादिज्ञानानां सत्यत्वे बाधितेऽपि मिथ्यात्वव्यवहारो दृश्यते इत्येवं व्यवहाराधीन-तया ज्ञानानां सत्यासत्यत्वे प्रतिष्ठिते व्यवहारस्य भेदेनैकमेव वस्तु पृथक् पृथग् रूपेण पश्यन्ति पृथग्विधा लोकाः । सर्वाणि च तानि तत्तद व्यवहारभूमिषु सत्यान्येवेति वक्त-व्यम् । शक्तिभावमपहाय गन्धादिभावं प्रकाशयद् यन्त्रभाव-शून्यं वा बिम्बोष्ठादिरूपं ख्यापयत् पक्वादिरूपविशेषं वाऽ नवगाहमानमन्नजलादिभावमवभासयज् ज्ञानमिव । तस्मा-

देवं विधं ज्ञानं भ्रम एवेति वक्तव्यम् । वस्तु च शक्तयाद्याकारेण गन्धाद्याकारेण वाऽवभासमानमेकमेव । एकमेव वस्तु व्यवहारभेदेन भिन्ननामरूपादिभि र्निश्चिन्वन्ति लोकाः । तस्मात् सर्व एव निश्चयः प्रमा । एकस्मिंस्तु व्यवहारे भिन्ननामरूपादिभिश्चेत् पृथग्विधा निश्चयाः स्यु स्तदा भ्रान्तिरूपा एव मन्तव्याः स्थाण्वादिषु मनुष्यत्वादि निश्चयवदिति । अत्रासत्कार्य्यवादिनो बहुधा प्रविवदन्ति । तत् सर्वमुपरिष्टात् प्रवेदयिष्यते । अतएव येन केनापि प्रकारेण व्यावहारिकार्थप्रतिपादकं विद्यामात्रमेव प्रमात्मकम् । तस्मात् चार्वाक कणादादिप्रदर्शिता देहात्मविद्याद्या अपि तत्तद्व्यवहारानुगततया सत्यत्वात् न भ्रममूलकत्वेनोपालब्धव्याः । न वा जलमृत्तिकादिषु भूतत्वादिव्यवस्था कवीनां वा बिम्बोष्ठ मुखपंकजादिसम्भावनम् । इत्येवं तत्तद् व्यावहारिकवस्तु प्रतिपादनपराः सर्वा एव विद्याः सत्यार्थतया आदरणीयाः, व्यवहारभेदाच्च न तासां परस्परविरोध इति । इत्थं च आपादतलात् मस्तकान्तावयवत्वेन कल्पिताः सर्वा एव विद्या विद्यामूर्त्तिं परिपूरयन्तीति न्याय्यैवेयं व्यवस्था ।

इति श्रीमन्महर्षि कश्यपान्वयज हलधर विद्यामणि भट्टाचार्य्यात्मज श्रीशशधर तर्कचूड़ामणिविरचिते चूड़ामणिदर्शने पंचमोऽध्यायः ।

---

# षष्ठोऽध्यायः ।

एवमपि न सर्वेष्वेव देशेषु सर्वाभिर्वा भाषाभिर्भगवत्याः परमदेवतायाः सर्वेषामेवाङ्गानां सम्यग् विकाशः प्रतिभाति । कतिचित् कतिचिदेव त्वंगान्येकैकस्मिन् देशे । तत्राश्वक्रान्त-रथक्रान्तयोः सिद्धपुरे च देशे आपादतलाद् विद्याया हृदय-देशपर्य्यन्तप्रदर्शका बहव एव ग्रन्था स्तत्तद्देशीयभाषाभिर्वि-राजन्ते कण्ठादिस्तु न तथा । तथाहि पाश्चात्यादि विप-श्चिद्भिर्यत् कण्ठाद्यवयवा उन्मुक्तास्तत्राध्यात्मांशोऽतीव विगुणताप्रचुरो वहुभ्रान्तिसमाकुलश्च । ब्रह्मविद्या त्विदानीमपि दृष्टेर्बहिरेव तेषां वर्त्तते । तस्मात् तेषु देशेषु विद्यामूर्त्तेः शिरोविहीनो देहोऽवभासते । भारते पुनरस्मिन् संस्कृतभाषा-दिभिरध्यात्मब्रह्मविद्ये अद्यापि जाग्रतः, किन्तु शारीरविद्या रासायनविद्या प्राकृतविद्याद्याश्चेदानीं विलुप्तप्रायाः । अस्मिंस्तु देशेऽध्यात्मब्रह्मविद्ययोरत्यन्तसन्निहितावयवाना-मेकान्तानुकूलानां च शारीरविद्यादीनां यथावश्यकोपकारा-सामर्थ्यादपहतकण्ठहृदयं विद्यामूर्त्तेः शरीरं विराजते । एवं देशभेदेन विद्याया अङ्गभेदाः प्रकाशन्ते । तथापि सर्वेभ्यो हि देशेभ्यो यथासम्भवमवयवसमाहारेणापादतलात् शिरः-पर्य्यन्तं विद्यादेव्याः सर्वाण्येवाङ्गानि परिकल्पयितुं शक्यन्त इति न पृथिवीत्वावच्छेदेन कस्यचिदङ्गस्याभावः ।

यद्दि चान्येषु देशेषु वाह्यविज्ञानकुशला अनेके विद्वांसः संस्कृतभाषायामधिकृताः तन्निवद्धाश्छान्दोग्यबृहदारण्यकादीन् बहूनध्यात्मब्रह्मविद्याप्रकाशकग्रन्थानवलोकयन्ति तथापि नालं सम्यगभिनिवेष्टुं तदर्थेषु। सम्यग्विज्ञानविदाचार्य्याभावात् तादृशतत्त्वानां कदाचिदप्यश्रवणात् तद्विरुद्धज्ञानसंस्कार प्राबल्याच्च।

असेचनके ( एसियायां ) पुनरिदानीं महादेव्याः सर्वेषामेवांगानामापादतलान्मूर्द्धान्तानां प्रायेणान्तर्धानमिव लक्ष्यते। यद्यपि बहव एवात्राध्यात्मब्रह्मविद्याग्रन्थेषु बृहदारण्यकादिषु कृतभूरिपरिश्रमा अधुनापीदं भारतमवद्योतयन्ति; तथापि नालं ते सम्यग् ब्रह्मतत्त्वमवगाहितुमध्यात्मतत्त्वं वा, प्राकृतशारीर विज्ञानानामभावेन तत् संसृष्टानामाध्यात्मिकानामंशानामपरब्रह्मतत्त्वानां चापरिज्ञानात्। येऽपि कदाचिल्लक्षलक्षेषु ब्रह्मविद्याफलं भुञ्जानाः, भुञ्जाना इव वा दृश्यन्ते तेऽपि प्राग्भवीयसंस्कारवशात् शास्त्राचार्योपदेशं लब्ध्वा अतिकृच्छ्रेणैव ब्रह्मतत्त्वमभिमुखीकर्त्तुं शक्नुवन्ति। अपरब्रह्माध्यात्मविद्ये तु न कदापि तेषु स्फुरतः।

ननु ब्रह्मण्यवस्थिताः सर्वविदो भवन्तीति श्रूयते, तत् कथं तेषामविद्यत्वमपरब्रह्मतत्त्वादिष्विति चेदुच्यते, सर्वेषां हि वस्तूनां ब्रह्मातिरिक्तत्वेनासद्भावात् परब्रह्मण्येव स्थितस्य सर्वविज्ञानमुक्तम्, न तु तदवस्थायां यावदध्यात्मतत्त्वादि-

गर्भिण्याः प्रकृतेः स्फुरणं भवति । तथा सति तज्ज्ञानेन बाधितत्वाद् ब्रह्मभावानुत्पत्तेः । अध्यात्मतत्त्वाद्यनवगाहमानानामपि सुषुप्तवत् ब्रह्मभावोपपत्तेश्चेत्यास्तामत्र तद् विस्तरः । परतस्तु तद् यथाशक्ति प्रत्येष्यिष्यते । एवमेषा अस्मद्देशीयानां शास्त्रव्यवसायिनामध्यात्मब्रह्मविद्यावस्था । अन्येषां पुनरध्यात्मशास्त्राद्यविदुषां प्राकृतशारीरतत्त्वादिषु विशेषाधिकारितया क्वचित्कमन्तरेणेदानीमपि न प्रकाशो विज्ञायते । तस्मात्र तदुल्लेखः सन्तोषयतीत्यतो भारते विद्यायाः कण्ठहृदयाद्यवयवानां नेदानीं यथायथप्रकाश इत्युक्तिर्नात्यन्तसाहसिकी ।

तस्मात् प्रत्येकस्मिन्नेव देशानां विद्याया न सर्वाण्यङ्गानि प्रकाशन्त इति न्याय्यैवेयं दृष्टिः । अयमेव हि पृथिव्यां सर्वेषां मानवानामत्यन्तभेदहेतु र्यत् सर्वत्र न सर्वासां विद्यानां प्रचारः । भेदश्चाभिमानकलहादिबह्वनर्थपातकारणम् । विद्यामात्रस्य च सारतमत्वात् तदल्पतानुसारेण मानवानामसारतापरिणामात् सर्वधर्म्मालम्बनभूतयोः सर्वोत्कृष्टसारयोरध्यात्मब्रह्मविद्ययोरभावे प्रकृष्टधर्मविपर्य्यासेन मनुष्यजातेरुच्छेदप्रसंगात् तन्निवृत्तये सर्वेषु देशेषु सर्वेषां विद्यावयवानां प्रकाशाय सर्वैरेव प्रयत्नः कर्त्तव्यः । प्रयतमानस्य तु तस्मिन्नर्थेऽन्तरायापसारणं, उपायान्तरसंग्रहश्चानुष्ठेयः । तत्रास्मद् देशे प्राकृतविद्यादिप्रकाशे यथोपयोगं ग्रन्थाभावः शिक्षाभावश्चान्तरायः । अध्यात्मब्रह्मविद्ययोस्तु सहानयो-

द्वितीयेन वर्णितशारीरविद्या मध्याव: प्रथम:। द्वितीयस्त्वा-ध्यात्मब्रह्मविद्याग्रन्थानां बृहदारण्यकादीनां पुरातनोद्देश्य-साधनानुरूपग्रन्थनव्यवस्थारूप:। इह तावद् ग्रन्थप्रणयने विपश्चितां द्विविधमुद्देश्यं दृश्यते। तत्रैकं ज्ञानमूर्त्तेस्तत्तदङ्गानां प्रकाशनमात्रम्। अपरन्तु कर्मविशेषाणामनुष्ठानार्थं तस्मिंस्त-स्मिन्नभ्यर्हित विद्यावयवानां वस्तुतत्त्वसहितानुष्ठानानुष्ठान-प्रक्रियाप्रकाशनम्। न ह्यनुष्ठाने प्रक्रियां वस्तुतत्त्वं वाऽपरिज्ञाय कश्चित् किमपि कर्मानुष्ठातुं शक्नोति। तस्मात् कर्मानुष्ठानो-द्देश्यको ज्ञानोपदेश इति। तत्राद्ये नानुरूपमनुष्ठानं शिष्या: कुर्वन्तु न वा कुर्वन्तु उभयथैव ग्रन्थरचना न फलेभ्यो व्यभिचरति। द्वितीये तु अनुष्ठानाभावे उपदेशानर्थक्यम्। तत्र सर्वा एव श्रुतयोऽस्मिन् द्वितीय उद्देश्येऽभिनिबद्धा:, तदुपका-रीणि च दर्शनादीनि। अन्यदेशीया ग्रन्थास्तु तत्तत् कर्मानु-ष्ठानमन्तरालीकृत्य मुख्यतया ज्ञानोपदेशायैव ग्रथिता इति तेषां विद्यांगप्रकाशे न क्रमस्यातिवर्त्तनं दृश्यते। श्रुत्यादीनां च प्रतिप्रकरणमेव प्रायेण ज्ञानस्य कर्मणश्च छेदोऽसम्पूर्णता च दृश्यते। तस्मात् कस्मिंश्चिदपि प्रकरणे न कस्यचिज्ज्ञानस्य सर्वांशोपदेश: संवृत्त:। तदेतत् किञ्चिदुदाह्रियते,—शुक्ल यजुर्वेदीय बृहदारण्यके तावदध्यायद्वयेन देवतातत्त्वादि रहितं केवलकर्मकाण्डं विरचय्य तदेव कर्म पुन: सोप-करणकदेवतातत्त्वादिज्ञानेन सहितं ब्रह्मलोकादिफलान्तर-लाभाय कर्त्तव्यमित्यभिप्रेत्य "ओं उषा वा अश्वस्य मेधस्य

शिवः" इत्यादिना ज्ञानकाण्डमेवारभ्याध्यात्मब्रह्मविद्याधनं अश्वमेधयज्ञांगीभूतस्याश्वस्याग्नेश्च प्रजापतित्वारोपाय तदनुष्ठातुश्च प्राजापत्यप्राप्तिप्रदर्शनायाश्वमेधाद्यनुष्ठानोपयोगिमात्रं, अध्यात्मविद्याया उन्नतमांशभूतं प्रजापतिंहिरण्यगर्भादिरूपं वर्णितं संक्षेपतः। सृष्टिव्यापाराश्चाश्वाग्न्युदकानामुत्कर्षख्यापनाय कियन्मात्र एव ख्यापितः। परस्मिन् ब्राह्मणे पुनर्ज्योतिष्टोमांगीभूतमुद्गीथजपमुपक्रम्योत्सृज्यैव सृष्टिप्रकारं हिरण्यगर्भाविततत्त्वं च, सेन्द्रियमनसः शुद्ध्युपायभूतं जपप्रकारं विदधती श्रुतिः प्राणेन्द्रियदेवतातत्त्वं केवलं समाशिश्लेष इत्येवं प्रकारान्तरेण पूर्वापरग्रन्थयोः संगतावप्यध्यात्मब्रह्मविद्यादृष्ट्यनुसारेण तत्प्रकरणसम्बन्धं विच्छिच्छेदैव। ततश्चान्यस्मिन् प्रकरणेऽन्यदुपासनमुपपादयन्ती किञ्चिदपरब्रह्मतत्त्वं किञ्चिच्चाध्यात्मिकं सृष्टिव्यापारांशं च कंचिदुपदिदेश। एवं विच्छिद्य विच्छिद्यैकैकस्मिन् प्रकरणे एकैकमुपासनमवतार्य तदंगभावेन किंचिदाध्यात्मिकं किंचिच्च ब्रह्मतत्त्वमवतारयाञ्चकार। अतएव तु कर्ममीमांसा "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां" "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इत्यादि सूत्रजातैरध्यात्मादितत्त्वविद्याप्रकाशनार्थत्वमेव श्रुतीनामवरोद्धुं साहसञ्चकार।

एवं सविच्छेदांशमात्रप्रकाशेनाध्यात्मब्रह्मविद्ययो रूपे ख्यापिते नत्वविच्छेदेन। तथा च सति येन सर्वा एव प्रधानो-

पनिषदो यथान्यायं समधीताः, स सामर्थ्यवान् यदि तत्त्वविद्यामधीयानो विद्यारूपसंग्रहाय सम्यगालोचयति स एव नामवलोकयितुं शक्नोति न तूपनिषदामंशविशेषाणामध्येतारः। द्वित्रिचतुःपंचषड्दशका अप्युपनिषदः सम्भूय नाध्यात्मब्रह्मविद्यायाः सर्वांशानवतारयाञ्चक्रुः तस्मान्महानन्तराय उपनिषत्पाठेन विद्यालाभे। न च ततोऽप्यधिकोपनिषत्सेवकाः प्रायेणेह दृश्यन्ते, तत्त्वान्वेषणपरायणाश्च। इह हि प्रायेण सर्व एव कस्याश्चिदुपनिषदोंऽश विशेषं साकल्येन वा कांचित् द्वित्रिचतस्रो वा उपनिषदोऽधीत्यानूचानमानिन आत्मनि सन्तुष्यन्ति। तेन च प्रभात इव नक्षत्रदर्शनेनास्फुटेन ज्ञानेन समुल्लसिता अन्धप्राया इवान्धं पथिविशेषं नेतुमुत्सहन्ते, फलं च तस्य यथावदेव भवति। एवमप्यध्यात्मब्रह्मविद्ययो महान् विपरिणाम आभाति साम्प्रतमयं च महानन्तराय इति। तदेतत् सर्वेषामन्तरायाणामपनयायानुकूलसंग्रहायानुगुणा चेष्टा कर्त्तव्येत्यैषणां वह्वीभ्य एव समाभ्य आत्मनि पुपुष्वान् तदुपयोगिविज्ञानाभावाद् विसम्वादिनीयमिच्छेति मन्यमानो न तच्चेष्टायै साहसमकार्षं; विज्ञायैव यथायथं तत्र यतिष्य इति मत्वा इतः प्रागपि मौनेनैवाभूवम्।

ततः पुनरेतावत्यपि जीविते सप्ततिसमाधिके यथाशक्ति भगवतीं विद्यादेवीं सेवमानस्य मूर्खत्वमेवाधिकाधिकमाभाति; विद्वत्त्वन्तु सुदूर एव। एवमध्यवस्यंश्चेदानीमाकाश-

यदनन्तरूपं महादेवीचरणसंस्पर्शिसमीरणकणिकामात्रमेव समग्रहींषमिति मन्ये । तस्मात् प्राग्वर्णितविद्याप्रकाशविघ्नोपशान्तये तदनुकूलसंग्रहाय च किंचिद् वक्तुमिच्छन् हिमांशोरधस्तादभ्रापसारणाय उद्बाहुर्बाल इव लज्जितः सञ्जातः । तथापि बलवती हृदयप्रवणता यत् किंचिदाभासमात्रानुभूतं तदेव वक्तुं मुखरयतीत्यतोऽशक्येऽप्यस्मिन्नर्थे प्रयते । यैस्तावदियन्मात्रमपि न दृष्टं तेषामनेन स्वल्पोऽप्युपकारः स्यादिति चाशासे । अत्र पाठकानामाक्रोशरहितां दृष्टिं प्रार्थये । सोऽयं प्रयत्नः प्रत्यूहरहितः स्यादिति तामेव महाविद्यां याचे ।

इति श्रीमन्महर्षि कश्यपान्वयज हलधर विद्यामणि भट्टाचार्य्यात्मज श्रीशशधर तर्कचूडामणिविरचिते चूडामणिदर्शने षष्ठोऽध्यायः ।

---

# सप्तमोऽध्यायः

अथेदानीमुक्तान्तरायापसारणहेतुरनुकूलोपायश्च चिन्त्यते। तत्रास्मद्देशे शास्त्रमात्राध्यायिषु भाषान्तरप्रचारितशारीरतत्त्वाद्यनभिज्ञेषु सुतरामध्यात्मब्रह्मविद्योपयोगिशारीरविद्याद्यंशविशेषाणामन्तरायापनोदनहेतुतद्या सम्भविष्यतीत्याशास्महे। तद्विज्ञानाभावो ह्यस्मद्देशेऽन्तराय इत्यवोचाम। परदेशेषु च संस्कृतभाषानभिज्ञेषु विपश्चित्सु तयैव भाषयाध्यात्मब्रह्मतत्त्वसमावेदनमन्तरायापसारकं भवेदित्याशासे। तदज्ञानं हि तेषां पूर्णविद्यामूर्त्तिदर्शनस्यान्तरायः।

परस्पर विरुद्धत्वे प्रतिष्ठाप्य वर्ह्णाभ्य उपनिषद्भ्यो निष्कर्षणेनाध्यात्मब्रह्मविद्ययोः पूर्णावयवप्रकाशनं उभयेष्वेव देशेष्वध्यात्मब्रह्मविद्य अनुकूलयिष्यति शारीरप्राकृताध्यात्मब्रह्मविद्यानां परस्परसम्बन्धप्रदर्शनं च। इह हि प्रायेण सर्वे शारीरतत्त्वसिद्धान्ताः प्राकृततत्त्वसिद्धान्ताश्च तथाध्यात्मतत्त्वसिद्धान्ता ब्रह्मतत्त्वसिद्धान्ताश्च चतसृष्वेव शारीरप्राकृताध्यात्मब्रह्मविद्यासु चतुष्पादेषु खट्वा इव प्रतिष्ठिताः। तस्मादासामेकतमापायेऽपि कश्चित् सिद्धान्त स्त्रिपदा खट्वेव नावस्थातुं शक्नोति, संहत्यैव तु सर्वाः सर्वान् सिद्धान्तान् प्रतिष्ठापयन्तीत्यतः परस्परसिद्धान्तव्यवस्थापनरूपैककार्य्य-

साधनत्वमेवासामन्योन्यसम्बन्धः । अत्र चतसृणां विद्यानामेकैकस्मिन् सिद्धान्ते मनः प्रणिधत्स्व तेन सर्वमवैष्यसि । तथाहि विदेशीयशारीरविद्या तावन्मांसास्थ्यादि शरीरावयवजनकानां कोषाणां कोषबीजानां च प्रत्येकं प्राणित्वं चेतनत्वं स्वातन्त्र्यं च पश्यति । स्वस्य मातापित्रा वा भुक्तपीतपदार्थेभ्यो रासायनशक्तिविशेषाद्वा तेषामुत्पत्तिं मन्यते सैव पुनर्मस्तिष्कस्यापि ज्ञानपरिचालनादिसर्वक्रियाणां कर्त्तृत्वादिकं प्रतिजानाति । निद्राद्यवस्थासु पुनर्मशकादि दष्टानां करचरणविक्षेपादौ रुधिरीयरासायनशक्तिविशेषस्यैव कर्त्तृत्वं ब्रवीति । न च तेषां कोषादीनामुत्पत्तिप्रक्रियां न्यायप्राप्तमुत्पत्तिकारणं वा दर्शयति । न वा सिद्धान्तानां परस्पर विरोधमपनयति । तदभावे च सिद्धान्तानां व्याघातोऽकर्मण्यता चाभाति । सोऽयमभावः शिष्टाभिहितसूभिर्विद्याभिरपनीयते । इत्ययमेको दृष्टान्तः द्वितीयस्तु प्राकृतविद्यासम्बन्धी । प्राकृतविद्या तावच्छब्द विद्युत्तापवर्णादितत्त्वान्यनेकधा वर्णयन्ति, ननु तेषामुत्पत्तिप्रकारं तत् कारणं वा प्रतिपादयति । अध्यात्म विद्यादयस्तु तत् प्रतिपादयन्ति ।

तृतीयश्चाध्यात्मविद्याधीनः । तथाहि, दर्शनज्ञानादिप्रतिपादने तावदध्यात्मविद्या आत्ममनःसंयोगपूर्वकमन इन्द्रियसंयोगान्तरेन्द्रियार्थसंयोगस्य कारणत्वं सिद्धान्तयति, अन्तःकरणस्य च विषयाकारतां ब्रवीति । सोऽयमिन्द्रियार्थसंयोगः कथं स्यात्, कथं वा इन्द्रियेण मनसः संयोगः,

मनसश्चात्मना, अर्थादीनां स्वरूपं किं कुत्र वा किंभावेन ते अवतिष्ठन्ते, कथं वा वृत्तिप्रचारः कुत्र वा ज्ञानं परिसमाप्यत इत्यादीनि तत्त्वानि न प्रकटयति। अत्रेन्द्रियग्राह्य शब्दाद्यर्थतत्त्वं स्वप्रचारं प्राकृतविद्याया विषयः। तेषामिन्द्रियादिभिः सम्बन्धः इन्द्रियादिवृत्तिप्रचारः, तेषामवस्थिति स्वस्वकर्मसाधन प्रक्रियादयश्च शारीरविद्यायाः, ज्ञानपरिसमाप्तिश्च पुनर्ब्रह्मविद्यायाः, एवमपराभिस्तिसृभिर्विद्याभिर्दर्शनज्ञानादिविषयोऽध्यात्मविद्यासिद्धान्तोऽभिभाव्यते।

चतुर्थो ब्रह्मविद्याधिकृतः। ब्रह्मविद्या तावज् जगतो मिथ्यात्वप्रतिपादनेन सर्वप्रमाणातीतैकमात्रं तत्त्वं ख्यापयति। शब्दाद्यर्थान्वित जगत्तत्त्वन्तु न विशेषेण ब्रवीति। न च तत्तत्त्वाविज्ञाने जगतो मिथ्यात्वं सत्यत्वं वा निश्चेतुं शक्यते। तच्च प्राकृतविद्यादीनां विषयः। एवमेतेषां सर्वे सिद्धान्ता अपरा स्तिस्रो विद्या अपेक्षन्ते। तस्माच्चतस्रो विद्याः प्रत्येकं सिद्धान्तानां पादा इत्युक्तम्। तानेतान् सर्वान् पादानन्योन्येनान्योन्यं योजयित्वाध्यात्मविद्यादि सिद्धान्तानां व्यवस्थापनं विद्यामूर्त्तेर्हृदयकण्ठाद्यवयवानां सम्यग् पूर्त्तेरनुकूलं भवति। तस्मान्महाविद्यासेवकैः प्रोक्तान्तरायापनोदनायानुकूलसंग्रहाय च यथाशक्ति प्रयतितव्यं, न च तथाविधो विशिष्टः प्रयत्नः कस्यचिद्विज्ञायत इत्यतोऽशक्ता अपि तस्मिन् विषये यथाशक्ति प्रयतामहे। प्रोक्त चतुर्विद्या विषयाणामेव यथावश्यकं प्रदर्शयितव्यत्वे तदधस्तनानामपि विद्या-

विषयाणां तदुपकारकतया समाम्नत उल्लेख आवश्यकः। अत्रापि चरणस्थानीय विद्याविषयाणामयत्नतोऽपि सर्वगोचरतया तदुल्लेखे प्रयोजनाभावो विद्यांगप्रदर्शनप्रसंगे प्रदर्शितश्चात्र । जङ्घाद्यत्रयवविषयाणान्तु भूततत्त्वादीनामसाधारणगोचरतया प्रागुद्दिश्यमात्रेणोत्थापितत्वेऽप्यवशिष्टानां केषांचिदुत्थापनेन किंचित् पर्य्यालोचनमावश्यकम् । तस्मात् तत्रैवादौ प्रयतामहे ।

अत्र भूततत्त्वसमालोचने भूतसंज्ञैव प्रथमं निर्णेया, सा हीदानीं विप्लुतेवाभाति । साधारणा हि शास्त्रान्धतया जगतो मूलकारणत्वमेव भूतत्वं कल्पयित्वा तदेव शास्त्रार्थतया मन्यमानाः पाश्चात्यानामशीत्यधिक मूलकारणवादमिलेष्वादीनां च तथात्वं दृष्ट्वा श्रुत्वा वा तदेव सत्यतया विश्वसन्तोऽस्मदीयान् पंचभूतवादिन आचार्य्यान् अनभिज्ञाद्युक्तिभिरुपालभन्ते । शास्त्रदर्शिनोऽनेके शास्त्रार्थानवधानेन तदुपालम्भश्रवणात् तत्प्रत्युद्यैव क्लिश्यन्ति। तेषामनुकूला अपि केचन भवन्ति । तस्माद् भूततत्त्वावधारणमावश्यकम् ।

तत्र भूतशब्दः पुराणेतिहासदर्शनादिष्वेव श्रूयत इति तदभिमतभूतलक्षणान्येव प्रदर्श्यन्ते। तथाहि बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वं भूतत्वमिति न्यायवृत्तिः भाषापरिच्छेदीयसिद्धान्तमुक्तावलिरप्येतदेव वदति । बहिरिन्द्रियग्राह्यविशेषगुणास्तु गन्धरसरूपस्पर्शशब्दाः स्नेहद्रवत्वे च सप्त । बाह्येन्द्रियाणि श्रवणत्वङ्नयनरसनाघ्राणानि, विशेषगुणानां मध्य एत एवैतैर्गृह्यन्ते । तस्मादेतेषां गुणानां कतिपये सर्वे वा यत्र

दृश्यन्ते । तदुक्तं न्याये, "पृथिव्यप्तेजोवाय्वाकाशमिति भूतानि" भाषापरिच्छेदे च "क्षित्यादि पंच भूतानीति" । तत्राकाशे बहिरिन्द्रियग्राह्यविशेषगुणः शब्दः । समीरणे तु स्पर्शः । तेजसि पुनारूपस्पर्शद्रवत्वानि । जले च रूपरसस्पर्शस्नेहद्रवत्वानि । क्षितौ गन्धरसरूपस्पर्शद्रवत्वानीति । अत्र क्षित्यादिचतुर्णां परमाणुष्वेतेषां गुणानां बहिरिन्द्रियग्राह्यत्वाभावेऽपि ग्रहणयोग्यत्वात् परमाणूनामपि भूतत्वसंग्रहः । परमाणुषु हि परस्परेण मिलितेषु स्थूलभावमापन्नेषु नयनादिभी रूपादयो गृह्यन्ते, सूक्ष्मत्वात् तु तेषां नैकैकस्मिन्, तस्मादस्ति परमाणुष्वपि रूपादीनां ग्रहणयोग्यतेति । एवं स्थूलपिण्डमारभ्य परमाणुपर्य्यन्तेष्वाकाशेषु भूतत्वसंग्रहः । न चानेन लक्षणेन जगन्मूलकारणत्वं लक्ष्यते, न वा रूपाद्यभाववज्जातिक्रियादयः । एतेन ये ये गन्धरसरूपादिमन्तः पदार्थाश्चतुःषष्ठिधा चतुरशीतिप्रकाराः शतसहस्रप्रकारा वा भवन्तु त एतेषां पंचानामेवावान्तरभेदा इति पञ्चष्वेवैतेषु सर्वे संगृह्यन्ते । तस्मात् पंचैव भूतानि न त्वधिकानि ।

वैशेषिकदर्शने भाष्यादावपि भूतलक्षणं न निर्दिष्टं, किन्तु क्षित्यादिपंचानां लक्षणानि निर्दिश्य तेष्वेव भूतत्वं व्यवहृतम् । यथाह "रूपरसगन्धस्पर्शवती पृथिवी" (१) "रूपरसस्पर्शवतय आपो द्रवाः स्निग्धाः" (२) "तेजो रूपस्पर्शवत्" (३) "स्पर्शवान् वायुः" (४) "त आकाशे न विद्यन्त इति (५) सर्वे चैते परमाणूनां नित्यत्वं ख्यापयन्ति । वेदान्तदर्शनेऽपि

कस्मिंश्चिद् भूतलक्षणं न दृश्यते। भूतत्वव्यवहारस्तु पंचस्वेव क्षित्यादिषु लक्ष्यते। तेषां रूपाणि चैवमेवाभ्युपगतानि। परमाणुनित्यतावादस्तु सम्यङ् निराकृतः। सांख्यपातञ्जलयोस्तु परमाणुपर्यन्तेषु भूतत्वमंगीकृत्य सहाकाशेन क्षित्यादिपरमाणूनां नित्यत्वं प्रत्युद्य साक्षात्तेन तज्जनकसूक्ष्मपदार्थविशेषेष्वपि पञ्चसु भूतत्वमङ्गीकृतम्। तेनानयो र्द्वयोः स्थूलसूक्ष्मभेदेन द्विविधानि भूतान्यभिमतानि। तत्रापरमाणुभ्यः पिण्डादिपर्यन्तानि स्थूलभूतानि। परमाणुजनकानि तु साक्षात्तेन सूक्ष्माणीति पर्य्यवसितम्। तथा च सांख्यदर्शनं. "सत्वरजस्तमसां साम्यावस्था प्रकृतिः। प्रकृतेर्महान् महतोऽहंकारः। अहंकारात् पञ्चतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः स्थूलभूतानि पुरुष इति पंचविंशतिर्गणः।" "नाणुनित्यता तत्कार्यत्वश्रुतेः।" पातञ्जलं च "विशेषाविशेषलिंगमात्रालिंगानि गुणपर्वाणि" "स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः"। पुराणेतिहासादीनि चैवमेव ब्रुवन्ति। विस्तरभयात् तदुल्लेखो निरस्तः। तथा च यथोक्तगुणानि पृथिव्यादीनि पञ्चैव भूतानीति सर्वेषामस्मदीयानां शास्त्राणां सिद्धान्त इति निश्चयः। अपरेषु च देशेषु एतस्मिन्नर्थे भूतसंज्ञासमं किंचिन्नामैव नास्ति। जगन्मूलकारणमभिप्रेत्यापि नैकं नाम श्रूयते। तत्र पृथक् पृथक् पदार्थेषु पृथग्रूपेण बहूनि नामानि व्यवह्रियन्ते। विभिन्नलक्षणान् यावतः पदार्थान् ये पश्यन्ति ते तावतां नामधेयानि रचयन्ति। तथाविधसंख्यं चैतेषामवधार-

यन्ति। तथा च यावत् पर्यन्तं ते मृज्जलवायूनेव व्यजानन्त हुताशनं वा पृथग्भावेन, तावत् त्रीणि चत्वारि वा जगतो मूलान्यविदुः। अथ ततोऽधिकमात्रया प्रेक्षायां प्रकाशमानायां सह लौहादिभिः त्रिंशत्येकविंशतिसंख्यकानि कारणान्य-पश्यन्। एवं क्रमेण चतुःषष्टिः कारणानि। ततश्च च[illegible]रशीति-पंचाशीतिसंख्यकानि। ततः पुनस्तानपि सर्वान् विहायेदानी-मिलेक्ट्रन् मात्रमेकतरवं कारणं ब्रुवन्तीति जगन्मूलत्वमेवा-भिसन्धाय तेषां निर्णयः, न तु भूतसंज्ञाभिधेयानां संख्या[illegible]। तस्मान्नात्रास्मदीयानां कस्यापि न तैः सह कश्चिद्विरोधः। वैशेषिकादीनान्तु परमाणुनित्यत्ववादे जलीयपरमाण्वादिवादे च महान् विरोध आभाति। स च न केवलं परदेशीयैराकाश-परमाण्वादीनां नित्यतावादे तु सांख्यपातञ्जलादिभिर-स्मदीयैरपि। कणादादयस्तावद् वैशेषिकादिषु "द्रव्यत्वनि-त्यत्वे वायुना व्याख्याने" "सदकारणवन्नित्य" मित्यादिसूत्रैरा-काशपरमाण्वादीनामनेकेषां नित्यत्वमभ्युपजग्मुः। न त्विदानीं विदेशीया विपश्चितस्तथा ब्रुवन्ति। अस्मदीयाश्च कपि-लादयो गुरवः सांख्यादिषु तन्निराचक्रुरित्येतस्मिन्नर्थेऽस्मद्-गुरूणामपि परस्परविरोधः। सर्वगुरुसम्मते त्वस्माकं जली-यपरमाण्वादिवादे विदेशीयानामेव विपश्चितां मतविरोधः। सर्व एव ह्यस्माकं गुरवो यथा क्षितेस्तथा जलस्य तेजसो वायोश्च परमाणूनुपपादयामासुः। परदेशीयास्तु पण्डिता अणूनामुपरि तेषामारम्भकतयेलेक्ट्रन् नामकं तत्त्वान्तरं पश्यन्त-

स्तेषां नित्यत्वं प्रतिवदन्ति । ततश्चेदानीमिलेक्ट्रनामकानामपि परं तत्त्वान्तरमिथारनामकमनुसन्धाय तेषामप्यनित्यत्वं ख्यापयन्ति, तस्मात्तेषां सिद्धान्तेन सह परमाणुनित्यतावादस्य विरोधः । सामान्यविशेषसमवायाकाशदिक्कालात्ममनसां विशेषवार्त्ता तेषामद्यापि न श्रूयत इत्यतः कणादादीनां तेष्वपि नित्यताराद्धान्ते परदेशीयसिद्धान्तानां विरोधाविरोधानुसन्धानकारणमेव नास्ति । अस्मदीयास्तु सांख्याद्याचार्य्याः श्रुत्यादयश्च यथा नृणामनित्यत्वं मन्यन्ते तथा सामान्यविशेषादीनां वैशेषिकाद्युक्तात्मना सह जन्यत्वं निश्चिन्वन्ति । तथा च सांख्यदर्शनं, "नाणुनित्यता तत्कार्यत्वश्रुतेः" "अहंकारात् पंचतन्मात्राण्युभयमिन्द्रियं स्थूलभूतानीति" च । तथा पातञ्जलं "विशेषाविशेषलिंगमात्रालिंगानि गुणपर्वाणीति" । तथा शारीरकदर्शनं, "यावद्विकारं तु विभागो लोकवत्' (१) "एतेन मातरिश्वा व्याख्यातः" (२) "असम्भवस्तु सतोऽनुपपत्तेः" (३) "तेजोऽतस्तथाह्याह" (४) "आपः" (५) "पृथिव्यधिकाररूपशब्दान्तरेभ्यः" (६) अत्र परमाणूनामनुल्लेखेऽपि पंचानामेवाकाशादीनां जन्यत्वप्रतिपादनात् परमाणवोऽपि प्राप्ताः । अण्वो मात्राविनाशिन्यो दशार्द्धानां च या मता" इत्यादिका मन्वादिस्मृतयः । सेतिहासपुराणानि चैवमेव ब्रुवन्ति । तथा श्रुतयोऽपि "सर्वं ह वै तज्जलान्" "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" "स प्राणमसृजत् प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम् ❀ ❀ ❀ ।" तथा "तस्माद्वा

दतस्माद्दात्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोस्तेजस्तेजस आपोऽद्भ्यः पृथिवीत्याद्याः" "तदैक्षत बहु स्याम् प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति। तदपोऽसृजत। तस्माद् यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ता आपः ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद् यत्र क्व च वर्षति, तदेव भूयिष्ठमन्नं भवति। अद्भ्य एव तदध्यन्नाद्यं जायत इत्याहुः।

भगवताक्षपादेन पुनः नाणुनित्यत्वादित्यादिसूत्रैः परमाणवादीनां नित्यत्वमभ्युपेतम्। तस्मादस्माकमृषीणां मध्ये द्वयोरेवैतयोः कणादगौतमयोरत्र सर्वैः ऋषिभिर्विरोधः; तथा श्रुत्याऽपि। एवं विरोधापन्नयोः परमाणवादीनां नित्यत्वानित्यत्ववादयोः कतरः पक्षः सत्यतयाश्रयणीय इति निर्णेतव्यं विरोधश्चापनेयः। तत्रार्वाचीना आचार्य्याः सांख्यादिव्याख्यातारः, परदेशीयाश्चेलेक्ट्रन् वादिनः परमाणवादीनां नित्यतापक्षवर्त्तिन ऋषीनप्यज्ञेत्यादिना तिरस्कुर्वन्ति, तांश्च पुनर्नित्यतापक्षवर्त्तिनः। सति तु सामञ्जस्यसम्भवे नैवं परस्परोपालम्भः शिष्टोचितः। ऋषीणां पुनर्भ्रमांगीकारे सर्वशास्त्रानास्थाप्रसंगश्च। तस्मात् सामञ्जस्यायैव प्रयतितव्यम्।

तत्र परमाणूनां नित्यताभ्युपगमे श्रुत्यादिसर्वशास्त्राणां विरोधात् प्रत्यक्षबाधाच्च तत्सिद्धान्तस्य चरमसत्यतां

निर्धार्य द्वयोः केवलयोः कणादगौतमयोर्विरुद्धसिद्धान्तान् चरमसत्यत्वादिना व्यवस्थाप्य सामञ्जस्यं कर्त्तव्यमिति न्याय्योऽयं पक्षः । तथाहि, सत्यत्वनित्यत्वादीनि तावत् चरमाचरमत्वादिना श्रुत्यादिसर्वशास्त्रेषु व्यवह्रियन्ते । "प्राणा वै सत्यं तेषामेष सत्यं सत्यस्य सत्य" मित्याद्याः श्रुतयो हि प्राणानामापेक्षिकसत्यतामात्मनश्च चरमसत्यतां ब्रुवन्ति । तथा—"नित्यो नित्यानां चेतनश्चेतनानाम्" इत्याद्यास्तेषामेवापेक्षिकनित्यत्वं स्वीकृत्यात्मनि चरमनित्यतां वदन्ति । स्मृतिष्वप्येवं व्यवहारो दृश्यते । "अपाम सोममसृता अभूम" इत्यादिना आपेक्षिकामृतत्त्वं दर्शयति । "तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजति" इत्यादि श्रुतिं व्याख्यातुकामा स्मृतिः श्रुत्युक्तामृतशब्दस्य आभूतसंप्लवस्थानममृतत्वं हि भासत इत्यादिना आपेक्षिकामृतत्वं व्याचचक्षे । चरमामृतत्वन्तु न सोमपानादिकर्मणा साध्यते "न कर्मणा न प्रजया धनेन त्यागेनैकेन अमृतत्वमानशुरित्यादि श्रुतेः । तत् पुनरात्मज्ञानादेव सम्पद्यते । त्वमेवैकं विजानथात्मानमन्या वाचो विमुञ्चथ, अमृतस्यैष सेतुरिति श्रुतेः । एवमन्यत्रापि । तस्मात् तद्वत् कणादगौतमोक्तं परमाणुनित्यत्वमापेक्षिकतया बोद्धव्यम् । स्थूलपिण्डादितो द्व्यणुकपर्यन्तानां पिण्डानां सर्वदैव विनाशो दृश्यते । परमाणूनान्तु महाप्रलयपर्यन्तस्थायित्वात् तेभ्यः सर्वेभ्यो नित्यत्वमंगीकृतम् । यथा च महाप्रलये तेषां विनाशः स्यात् तदग्रे वक्ष्यामः । "विशेषाविशेषलिंगमात्रा-

लिंगानि हि चत्वारि गुणपर्वाणि"। अत्र विशेषपर्वमात्रं दिद-
र्शयिषुर्भगवान् कणादो जगतः परमाणुपर्यन्तरूपमेव विशेषेण
व्याचख्यौ, तथा सह मनसा दशेन्द्रियाणि च। एतान्येव हि
विशेषसंज्ञितानि। तथा च पातञ्जलसूत्रभाष्ये,—"विशेषा-
विशेषलिंगमात्रालिंगानि गुणपर्वाणि" इति सूत्रं "तत्राकाश-
वाय्वग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्धतन्मात्रा-
णामविशेषाणां विशेषाः। तथा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि
बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि,
एकादशं मनः सर्वार्थः, इत्येतान्यस्मितालक्षणस्याविशेषस्य
विशेषाः। गुणानामेष षोडशको विशेषपरिणाम" इति।
विशेषतत्त्वव्याख्यानाच्चास्य दर्शनस्य वैशेषिकसंज्ञा युज्यते।
अत्र त्वविशेषादिपर्वाणामनुक्तत्वेऽपि अप्रतिषिद्धं परमत-
मनुमतं भवतीति न्यायेनान्यत्रोक्ता अविशेषादयोऽपि पदार्था
यथावत् कणादस्याभिमता इत्यवगम्यते। यत्त्वणूनामकारण-
वत्त्वमुक्तं तत् स्वजातीयकारणाभिप्रायेणेति न दोषः। अत्र
गन्धरसादिमत्त्वं स्वाजात्यम्। तत्र यथा परमाणुजन्यानां
द्व्यणुकानां स्वजातीयकारणकत्वं, न तथा परमाणूनाम्। न
हि तेषां गन्धादिवद्व वस्त्वन्तरं कारणमस्तीत्यभिप्रायः।
तन्त्रान्तरपरिपठितन्तत्त्वाणूनां कारणान्तरं नैतेन प्रतिषिध्यते।
तस्माद् भगवता कणादेनापि तदभ्युपगम्यत इति ब्रूमः।
एतेषामाजन्मतः प्रथमव्यवहारभूमावुपस्थितत्वादेतद्विज्ञा-
नस्य परतत्त्वविज्ञानानुकूलत्वात् स्वदेहान्तर्गत स्थूलस्वरूपादि-

भूततत्त्वसंयमे तदुपरितनतत्त्वसंयमे च यथायथसंयमानुष्ठानासम्भवाच्च क्रियागुणधर्म्मादिभिः प्रदर्शनमत्यन्तमावश्यकमिति भगवता कणादेनैतानि प्रदर्शितानि, एतच्चाग्रे स्फुटीभविष्यति। आधुनिकटीकादिकर्त्तृणां व्याख्यानेन विरोधनादवस्थ्यमिति चेदस्तु तथा, न तेन कणादादीनामपराधोऽस्माकं वा। तस्मात् परमाणूनां चरमनित्यता न भगवतः कणादस्याभिमतेति मन्यामहे, तथाकाशस्यापि। अन्येषां च मनआदीनां द्रव्याणामापेक्षिकनित्यत्वमग्रतोऽध्यात्मप्रकरणेऽभिधास्यते। इत्थं न्यायवैशेषिकयोः परमाण्वादिनित्यत्वानित्यत्वविषयेऽस्मदीयैः श्रुत्यादिसर्वशास्त्रैरविरोधो व्यवस्थाप्यते। अनेनैव परदेशीयैरपि विरोधः परिहृतः।

अथेदानीं जलादिपरमाणुषु परदेशीयैः सह विरोधः परिह्रियते। अणूनां नित्यानित्यत्वत्वादयोर्विरोधे परिहृतेऽपि जलाग्निवायूनां परमाणव एव विप्रतिपन्ना इति तन्निराकरणेन विरोधः परिहार्यः। विदेशीयास्तावत् पण्डिता जलजनकाम्लजनकाख्यवायुद्वययोगेन तयोर्जलत्वप्राप्तिं परीक्ष्य जलानामणुमेव न पश्यन्ति। द्वौ हि जलजनकाणू एकमम्लजनकाणुं परितो भ्रमन्तौ तेन सम्भू जलरूपेण परिणमतः। तस्माज्जलानां न परमाणवः सन्तीति तेषां दृष्टिः। तथाग्नेश्च संहतानामन्यपदार्थानां रूपविशेषत्वादणुत्वं वाधते। तैलादिपदार्थेषु हि व्यापारविशेषेण यथायोग्यतापोत्पत्तौ दीपकलिकाद्याकाराः समुच्चीयन्ते। न तु तेभ्यो भिन्नोऽग्निर्नाम

वस्त्वस्ति । तापश्च शैत्यविरोधी सर्वभूतानां धर्म्मविशेष इति न तापस्यापि परमाणुः सम्भवतीति ते वदन्ति तथा वायोश्च परस्परविरुद्धचतुरात्मकस्य काष्ठादिरूपदर्शनान्न क्षितेः पदार्थान्तरत्वम् । सर्व एव हि पदार्थाः प्रक्रियाविशेषेण चतस्रोऽवस्था भजन्ते । ताश्च कठिनता तरलता वायुताकाशता चेति तेषां नास्ति वस्तुतो भेद इति च ब्रुवन्ति । तस्माज्जला-दीनां परमाणुवादे महानयमनर्थ आपतितः । अस्मदीयास्तु कणादादयः सर्व एवाचार्याः क्षित्यादिचतुर्णां परस्परपृथग्-जातीयान् परमाणून् मन्यन्ते । तस्मादत्रापरिहार्य इव विरोध आभाति । अत्रोच्यते, परमाणुवादिनस्तावद् यथानिर्द्दिष्ट-जलादिगुणवतामेव स्थूलसूक्ष्मपरिमाणभेदेन महत्त्वमणुत्वं च निर्द्दिशन्ति । यत्र स्थूलत्वं तन्महत्, यत्र तु सूक्ष्मतापराकाष्ठा-स्ते अणव इति । असत्सु च जलादिनिर्दिष्टेषु गुणेषु तद्गुण-वत् सूक्ष्मपिण्डापेक्षया सूक्ष्मत्वेऽपि सूक्ष्मतरतया चाणुत्वेऽपि न ते जलादिपरमाणुसंज्ञामर्हन्ति, जलादीनामभावात् । तस्माज्जल-त्वाद्यवस्थायामेव सत्यां तत्र स्थूलसूक्ष्मव्यवहारः शास्त्राभिमत इति मन्तव्यम् । स्नेहद्रवत्वादिषु च विशेषगुणेषु सत्सु तद्-योग्यतायां वा जलव्यवहारो भवति । अम्लजलजनकेषु च वायु-विशेषेषु न तद्वत्ता तद्योग्यतावत्ता वा स्वीकर्त्तुं शक्यते । यथोक्ततत्त्रिकपिण्डेषु तु तद्योग्यत्वमनुमातुं शक्यते । तस्मात् पदार्थान्तरत्रयारब्धेष्वपि पिण्डेष्वपेक्षातो बृहत्स्वपि जलव्यवहारचरमरूपतया जलीयपरमाणुत्वव्यवहारो न्याय्य इति न कश्चिद् विरोधः ।

अथ तेजः परमाणुविप्रतिपत्तिश्चिन्त्यते । तथाहि परदेशीयै र्यद् वह्निस्वरूपमुक्तं तदस्माभिरपि अभ्युपेयते । यथा तप्ताङ्गारादिमूर्त्तिरग्निशब्देन व्यवह्रियमाणापि पृथिव्यात्मकाङ्गारस्यैव सा न तु तेजसः तथा दीपकलिकाद्या वह्निशब्देनाभिधीयमाना अपि निर्द्दिष्टमात्रया तापविशिष्टानां तैलादीनामेव रूपान्तराणि, न तु तेजःपदार्थस्य । तेजःपदार्थालिंगितत्वेन तेजोधर्माक्रमणात् तेजःशब्दोऽपि तेषु प्रवर्त्तते । वह्न्यग्न्यादीनि तु तथाभूततेजोविशिष्टानामेव वस्तूनां नामानि, न तु तेजसः, तस्मात् तेषां व्यवहारे नास्ति विवादप्रसंगः । श्रुतिर्हि तेजःपदार्थमग्निनः पृथक्त्वेन दर्शयित्वा विद्युतं तेजस्त्वेन दर्शयति । तथाच, "अयमग्निः सर्वेषां भूतानां मधु, अस्याग्नेः सर्वाणि भूतानि मधु । यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषः । अयमेव स" इत्याद्युक्त्वा पुनः "इयं विद्युत् सर्वेषां भूतानां मधु अस्या विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स" इत्यादि । अनया हि नाग्निविद्युत्तेजसां पार्थक्यं प्रदर्शितं, तथा, "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत् कृष्णं तदन्नस्य अपागादग्नेरग्नित्वं त्रीणि रूपाणि इत्येव सत्यम्" इत्यादिना अग्नितेजसो भेदोऽभिहितः । एवं च सति सर्वपदार्थालिंगिता विद्युदेव तेजो नाम भूतपदार्थ इति मन्तव्यम् ।

तस्या अतिसूक्ष्मावस्थायामग्रेऽभिधास्यमानमस्ति नामान्तरम् स्थूलावस्थायान्तु उष्णत्वरूपादीनामुद्भूतत्वे परिस्फुरन्ती सैव बहुसंख्या भजमाना तेजःपरमाणुनाम्ना अभिधीयते। तस्य च तेजसोऽग्निसूर्य्यादीनां लोहितादिवर्ण आलोकश्च दृष्टिविषयः स्थूला मूर्त्तिः, दृष्ट्यविषयश्च सूक्ष्मा परमाणुरूपेति। तादृशाणूनां बहूनां संयोगे सत्यनुभूयमानेषु चोष्णत्वादिगुणेषु तन्मूर्त्तयः स्थूलतेजोनाम्नाख्यायन्ते। तद्गुणसंक्रमणाच्च तप्ताः पिण्डाद्याः प्रदीपकलिकाद्याश्च लक्षणया तेज इत्युच्यन्ते। न तु ते स्वरूपतस्तेजःपदार्थ इत्यस्मदीयानामभिमतं बोद्धव्यम्। तस्मान्नात्र परदेशीयैः कश्चिद्विरोधः। यत्तु भाषापरिच्छेदादिष्वाधुनिकेषु ग्रन्थेष्वेकादशगुणवत्तया तेजःपदार्थः प्रदर्शितस्तच्चिन्त्यम्। तत्रांशेन सत्यपि विरोधे न भगवतां कणादादीनामृषीणां काचित् क्षतिः। अथेदानीं वायुपरमाणुविरोधः परिहार्यः। तत्र रूपरसगन्धविहीनो नानात्ववत्स्पर्शमात्रविज्ञेयं वस्तु वायुरिति वायोः संक्षिप्तः परिचयः। "स्पर्शश्च वायोः" "वायोर्वायुः संमूर्च्छनं नानात्वे हेतु" रिति वैशेषिकदर्शनम्। अत्र नानाव्याख्याकृद्भिर्नानार्थैर्वायोर्नानात्वं व्याख्यातम्। वयन्तु नानाविधत्वमेव नानात्वं मन्यामहे। न तु बहुत्वसंख्यामात्रम्। तथाच स्पर्शलिंगेनानुमीयमानं त्वगिन्द्रियेण वा प्रत्यक्षीभूतमेकत्वद्वित्वादिसंख्याणुमहत्त्वादिपरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्ववेगस्पर्शादिमन्नानाप्रकारविशिष्टं वस्तु वायुरिति विशेषपरिचयः। एवंसति

त्रिदेशीयविपश्चिद्गणाभिमताम्लजनकजलजनकयवक्षारजनकांगारजनकग्यासेतिविदेशीयनाम्ना परिचिता विभिन्नलक्षणविशिष्टाश्चत्वारोऽस्माकं वायुशब्दाभिधेया इति प्रतिभाति। तेषामणव एव वायोरणवः, नित्यता च सर्वेषामणूनामापेक्षिकी प्राग्दर्शितनियमेन बोद्धव्या। ननु यत्र ते चत्वारो वायुत्वेनाभिमताः परस्परसंयोगेन भागन्यूनाधिक्यं भजन्ते तत्र सर्वेषामेवैतेषां गन्धरसरूपस्पर्शादिस्फुरणेन क्षितित्वमनुभूयते। यथा जलजनकाङ्गारजनकौ विशिष्टसंयोगेनाभिसम्बद्धौ शर्करारूपेण परिणमतः। यथा वा विदेशीयभाषया पटासियमित्याख्यः क्षारविशेषेण संयुक्तश्चूर्णरूपेण परिणमति यथा वाङ्गारजनकादयः संयोगविशेषेण दारुशरीरमापद्यन्ते सर्वे चैते क्षितिपदार्थान्तर्वर्त्तिनः। एवमन्यान्यपि बहूनि क्षितित्वेनानुभूयमानानि वस्तूनि संयोगविशेषेणाभिनिबद्धानामेतेषां रूपाणि प्रत्यक्षसिद्धानि। तस्मात् क्षितित्वमेवैषामुपपद्यते, न त्वन्यतत्त्वता। अन्ये च सर्व एव क्षित्यन्तर्गताः सिकतादयः पदार्था अम्लजनकादिरूपेण, अन्यरूपेण तु वायुलक्षणविशिष्टेन विदेशीयभाषया ग्यासाख्येन परिणमन्ति। त एव पुनः संयोगविशेषेणाभिसम्बद्धाः क्षित्यन्तर्वर्त्तिसिकतादिरूपमापद्यन्त इत्यतः क्षितेरेव रूपान्तरं वायुरिति चेन्न, क्षितित्वव्यवहारयोग्यत्वाभावात्। व्यवहाराधीनानि हि जलनामवत् क्षित्यादिनामानि, विशिष्टगुणाधीनानि च। एकस्मिन्नेव हि वस्तुनि तत्तद्गुणवत्ताप्रकाशाप्रकाशेन व्यवहारभेदाद् भिन्नानि ना-

मानि निरूप्य बहवो भेदाः परिकल्प्यन्ते । एकस्मिन्नेव वस्तुनि यावत् क्षित्यादीनां चतुर्णां धर्मा न प्रकाशन्ते, आकाशधर्मा श्चानुभूयन्ते तावदाकाशनाम्ना व्यवहारः । तस्मिन्नेव पुनर्यदा समीरणगुणा उद्भवन्ति, तदा समीरणनाम्ना, यदा च तेजो-गुणास्तदा तेजोनाम्ना, जलगुणाश्च यदा तदा जलनाम्ना, यदा च क्षितिगुणास्तदा क्षितिनाम्नेति । तथा च स्वरूपतः क्षित्या-दीनामेकत्वेऽप्यवस्थाभेदेन भिन्नत्वं कल्प्यते । तत्र यज्जगतो मूलकारणं स्वयं चामूलं तद् योग्यतामात्ररूपशक्तिविशेषपदार्थः यदलिंगमित्यभिधीयते । यस्य व्याख्यानमुपरिष्टात् यथास्थानं भविष्यति । तदेवावस्थान्तरद्वयेन परिणम्य पूर्वापरभेदेन लिंग-मात्राविशेषनामनी समाश्लिष्य भूतत्वक्षेत्रावतीर्णं सद् विभि-न्नावस्थामापद्यमानं विभिन्नव्यवहारेणाधिक्रियमाणत्वाका-शादिनामानि भजन्ते । तत्र यदा परिव्याप्त्यादयस्त्रयो गुणाः प्रकाशन्ते तदाकाशनामभाग् भवति । यदा च तिर्यग्यान-पवित्रादयो धर्मा विकशन्ति, तदा समीरणादिनामधेयवाच्यं भवति । तथा च—सर्वतोगतिरव्यूहोऽविष्टम्भश्चेति ते त्रयः । आकाशधर्मा व्याख्याताः पूर्वधर्मविलक्षणाः । तिर्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम् । चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः । ऊर्द्ध्वभाक् पाचकं दग्धृ पावकं लघु भास्वरम् । प्रध्वंस्योजस्वि वै तेजः पूर्वाभ्यां भिन्नलक्षणम् । स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत् । शैत्यं रक्षा पवित्रत्वं संधानं चौदका गुणाः । आकारो गौरवं रौक्ष्यं वरणं स्थैर्य्यमेव

च। वृत्तिभेदः क्षमा काष्ण्यं काठिन्यं सर्वभोग्यतेति पातञ्जले वाचस्पतिमिश्रधृताः श्लोकाः।

किंच, प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यमिति पातञ्जलसूत्रम्। प्रकाशशीलं सत्त्वम्। क्रियाशीलं रजः। स्थितिशीलं तम इति। एते गुणाः परस्परोपरक्तप्रविभागाः परिणामिनः संयोगविभागधर्माण इतरेतरोपाश्रयेणोपार्जितमूर्त्तयः परस्पराङ्गाङ्गित्वेऽप्यसंभिन्नशक्तिप्रविभागा स्तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनः प्रधानवेलायामुपदर्शितसन्निधाना गुणत्वेऽपि च व्यापारमात्रेण प्रधानान्तर्णीतानुमितास्तिताः पुरुषार्थकर्त्तव्यतया प्रयुक्तसामर्थ्याः सन्निधिमात्रोपकारिणोऽयस्कान्तमणिकल्पाः प्रत्ययमन्तरेणैकतमस्य वृत्तिमनुवर्तमानाः प्रधानशब्दवाच्या भवन्ति। एतद्दृश्यमित्युच्यते। तदेतद् भूतेन्द्रियात्मकं भूतभावेन पृथिव्यादिना सूक्ष्मस्थूलेन परिणमते। तथेन्द्रियभावेन श्रोत्रादिना सूक्ष्मस्थूलेन परिणमत इत्यस्य भाष्यम्।

किंच प्रलयस्यानु तेनेदं व्याप्तमासीदशेषतः। गुणसाम्यात् ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने। गुणभावात् सृज्यमानात् सर्गकाले ततः पुनः। प्रधानं तत्त्वमद्भूतं महान्तं तत् समावृणोत्। यथा बीजं त्वचा तद्वदव्यक्तेनावृतो महान्। सात्त्विको राजसश्चैव तामसश्च त्रिधोदितः॥ ततस्तस्मादहंकार स्त्रिविधो वै व्यजायत। वैकारिकस्तैजसश्च भूतादिश्च स तामसः॥ महता चावृतः सोऽपि

यथा व्यक्तेन वै महान्। भूतादिंतु विकुर्वाणः शब्दतन्मात्रकं ततः। ससर्ज शब्दतन्मात्रादाकाशं शब्दलक्षणम्। आकाशं शब्दमात्रन्तु भूतादिश्चावृणोत् ततः॥ स्पर्शतन्मात्रमेवेह जायते नात्र संशयः। बलवान् जायते वायुस्तस्य स्पर्शो गुणो मतः॥ आकाशं शब्दमात्रन्तु स्पर्शमात्रं समावृणोत्। वायुश्चापि विकुर्वाणो रूपमात्रं ससर्ज ह॥ सम्भवन्ति ततो ह्यापश्चासन् वै ता रसात्मिकाः। रसमात्रास्तु ता ह्यापो रूपमात्रं समावृणोत्॥ आपश्चापि विकुर्वन्त्यो गन्धमात्रं ससर्जिरे। सङ्घातो जायते तस्मात् तस्य गन्धो गुणो मतः। तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता॥ अविशेषवाचकत्वादविशेष स्ततश्च ते। न शान्ता नापि घोरास्ते न मूढाश्चाविशेषतः॥ भूततन्मात्र-सर्गोऽयमहंकारात्तु तामसात्। इति मार्कण्डेयपुराणम्।

श्रुतिश्च "तस्माद्वा एतस्मादात्मनाकाशः सम्भूतः आकाशाद् वायुः, वायोस्तेजः, तेजस आपः, अद्भ्यः पृथिवी-त्याद्याः।"

तथा "तदैक्षत बहु स्याम् प्रजायेयेति। तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति। तदपोऽसृजत। तस्माद् यत्र क्वच शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते, इति च। ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नम-सृजन्त तस्माद् यत्र क्वच वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते" इति। एवं सर्वाण्येवास्माकं शास्त्रा-ण्येकस्माद्वस्तुनः सर्वेषां भूतानामुत्पत्तिं दर्शयन्ति। तथाच

पार्थिवपरमाणवोऽपि जलीयपरमाणुवद् बोद्धव्याः। यावत् पार्थिवगुणानां कठिनत्वादीनामस्तित्वमनुभूयते, तावत्तेषां पृथिवीत्वं विज्ञेयम् । यत्र च तत्सूक्ष्मत्वस्य काष्ठाप्राप्तिः, ते पार्थिवपरमाणवः । तेषां परस्परयोगेनापेक्षिकस्थूलत्वे च सति यथासम्भवं द्व्यणुकादिसंज्ञाः प्रवर्त्तन्ते । अस्तमिते पुनः पृथिवीत्वे वायोरन्यस्य वा गुणेषु प्रकाशमानेषु यथासम्भवं तदेव वाय्वादिसंज्ञां भजते । तस्माद्वायूनां काठिन्यादिक्षितिगुणप्रकाशेऽपि न वायुत्ववाधः, न वा क्षितेर्वायुपरिणामत्वेऽपि क्षितित्वस्य । एवमन्यगुणप्रकाशेऽपि वेदितव्यम् । तस्य वायोर्गुणानां स्पर्शादीनां सूक्ष्मत्वस्य यत्र काष्ठाप्राप्तिस्ते तत्परमाणवः । नित्यत्वादिकं चैतेषां जलपरमाणुवद् बोध्यम् । अत एतद्विषये नास्त्यस्मदीयानां शास्त्राणां कश्चिद्विरोध इति ।

आकाशस्य तु व्याप्तव्यूहादिस्वभावान्न परमाण्वादिसम्भवः । स्वरूपं च तस्य बहुविप्रतिपत्तिसमाकुलं, तस्माद् दुर्निर्णेयम् । तथाप्यनुपेक्षणीयतया किंचिदावेद्यते ।

अथ किमाकाशस्य स्वरूपम् ? का क्रिया ? को वा गुणः ? क्षित्यादिवाय्वन्तानां चतुर्णां सर्वलक्षणेषु प्रत्यस्तमितेषु परमाणुनामधेये चान्तर्हिते भूतानां यऽवस्थाऽवतिष्ठते सैवाकाशस्य रूपमिति ब्रूमः । आकाशादेव हि वाय्वादिक्रमेण चतुर्णां भूतानां प्रकाशाद् यथासम्भवं साक्षात्त्वेन परम्परया वाकाशमेवेतरेषामुपादानम् । तस्मात् सर्वेषामन्तर्वर्त्तितया व्यापकं ; तादृशव्याप्तिरेवास्य स्वरूपलक्षणम् । स्वात्मनः प्रकाशितानां

स्फुलिङ्गकणानां विद्युदिव, तस्मादेव चास्याव्यूढताऽविष्टम्भश्च। व्यूढत्वे हि परमाण्वादिरूपं स्यात्, विष्टम्भश्चान्याधिकरणताविरोधित्वरूपः। तेनैकस्य पिण्डस्याश्रयेण पिण्डान्तरमाधीयेत। यत् खलूपादानतया सर्वेषामन्तर्वर्त्ति तस्य तेष्वाधेयत्वाभावात् तत् कथङ्कारं कस्य च नाधिकरणत्वं बाधेत। नितरां तस्य लक्षणमन्यभूतानामविष्टम्भः, अवकाशदानं चास्य क्रिया, येनेतराणि भूतानि परस्परसन्निपातेन यदृच्छमुत्क्षेपणावक्षेपणाकुंचनप्रसारणगमनानि कर्माणि सन्ततमनुतिष्ठन्ति। असति त्ववकाशे नैवं स्वैरगतिः सम्भवति, पिण्डरूपं च जगत आपतति। अवकाशो हि सर्वाणि वस्तूनि पृथक्त्वेनावस्थापयति। तदेतदसङ्कीकरणं आकाशस्य क्रिया, शब्दानां च स्वतः सम्भावनं, शब्द एव चास्य विशेषो गुण इति।

अथ कथमाकाशाद् वायोरुत्पत्तिः? वाय्वादितश्च यथाक्रमं तेजःप्रभृतीनाम्? कथं वाकाशस्य शब्दाश्रयत्वं विज्ञायते? अत्र शास्त्रानुमाने द्वे एव प्रमाणे स्त इति ब्रूमः। तत्र शास्त्रमाकाशाद्वायुरित्यादिकं प्रदर्शितं, द्वितीयमिदानीं यथासम्भवं प्रदर्श्यते। उपादाननियमास्त्वन्यथानुपपत्त्या नभसो वायूत्पत्तिरवधार्य्यते। इह तावत् पारिमाण्डल्यपरिमाणादिभ्यो वायुपरमाणूनां जन्यत्वमभ्युपेयते। पारिमाण्डल्यं हि सर्वतो गोलत्वम्। तच्च सर्वैरेव तदणूनां निर्विरोधेनेष्यते। सति च गोलत्वे तस्य द्रव्यस्य यथेच्छं सूक्ष्मतमत्वं कल्पयद्भिरप्यन्यथानुपपत्त्या व्यासोऽभ्युपेयः। सति च व्यासे तस्याप्यगत्या

परिमाणमङ्गीकुर्वद्भि स्तत्परिमाणस्यार्द्धपादादिकमप्यभ्युपेयम् । तथा च सत्यनिच्छद्भिरपि तद्व्यासन्यूनव्यासपरिमितं रूपान्तरमभ्युपगन्तव्यम् । ततश्चासन्तुष्टेनापि मनसा तस्य रूपस्य परमाण्ववयवत्वं स्वीकार्य्यम् । सावयवत्वे च परमाणूनां जन्यत्वमायातम् । ननु व्यासे सत्येव तेन वस्तुना सावयवेन भवितव्यमिति नोपपद्यते । अशेषसूक्ष्मत्वानुपपत्त्या यत्र सूक्ष्मतायाः काष्ठाप्राप्तिस्तत्र च व्यासोऽभ्युपेयः । सति च व्यासे निरवयवत्वमभ्युपेयम् । अन्यथा व्यासस्य हेतोस्तस्यापि सावयवत्वेऽभ्युपगते चरमसूक्ष्मत्वं बाध्येत, अनवस्थापातश्च सूक्ष्मताया भवति । तस्माच्चरमसूक्ष्मं वस्तु परिमण्डलं दीर्घत्रिकोणादिकं वा भवतु, भवतु वा व्यासवद् निरवयवत्वन्त्वस्यावश्यमंगीकार्यम् । यत्र च सूक्ष्मतायाः काष्ठाप्राप्तिस्ते परमाणवः । ते च निरवयवा नित्याश्चेति चेन्न, चरमसूक्ष्मत्वस्य मध्यरेखावत् कल्पनामात्रत्वात् । मध्यरेखा हि यथेच्छं सूक्ष्मत्वेनाङ्किताऽपि न पार्श्वद्वयविमुक्ता भवति । सति च पार्श्वद्वये मध्यत्वं बाध्यते, पार्श्वद्वयशून्यत्वे च रेखात्वं, तस्मान्मध्यरेखाया वस्तुत्वं नास्ति, भूरिव्यवहारसिद्धये च सा परिकल्प्यत इत्यवास्तविकी सा । एवं चरमसूक्ष्मत्वं चावयवस्य कल्पनामात्रम् । सति व्यासे व्यासार्द्धादिसद्भावात् सावयवत्वम् । सावयवत्वे च न चरमसूक्ष्मत्वं सम्भवति । पारिमाण्डल्यवताञ्च व्यासादिमत्ता नियतो धर्मः, तस्मात् पारिमाण्डल्यादिमतां न चरमसूक्ष्मत्वसम्भव इति कल्पना-

मात्रमवसीयत इत्यतो नास्माकं सिद्धान्तबाधः । कल्पना तु मूलं कार्यकारणव्यवहारसिद्धेः ।

वृत्तिनियामकसंयोगसद्भावश्चाणूनां सावयवत्वानित्यत्वे विनिगमयति । द्व्यणुकादिनिर्माणसिद्धये हि परमाणूनां परस्परसंयोगोऽवश्यमभ्युपेयः । तस्य चाव्याप्यवृत्तितया परितो वृत्त्यसद्भावाच्चानिच्छतापि परमाणूनां सावयवत्वमनित्यत्वं चाभ्युपेयम् ।

दिगुपाधित्वं चाणूनां सावयवत्वे लिङ्गम् । अयमस्मात् पूर्वः, अयमस्मात् पश्चिम इत्यादिव्यवहारसिद्धये दीर्घत्रिकोणादिमूर्त्तिनिर्माणोपपत्तये च परमाणूनां दिगुपाधित्वमभ्युपगन्तव्यम् । ततश्च प्रत्येकं परमाणूनां प्राच्यादीनि दशैव रूपाणि वक्तव्यानि । न हि परमाणुः कस्यचित् परमाणोः पूर्वः, नासौ ततः पश्चिमो दक्षिणो वा सम्भवति । तथा दक्षिणोऽपि न पूर्वः पश्चिमो वा । न चैतन्निरवयवस्य वस्तुन उपपद्यते । सत्स्वेवावयवेषु तस्य पश्चिमावयवसमसूत्रपाती पश्चिमः, पूर्वावयवसमसूत्रपाती पूर्वः, तथा दक्षिणावयवसमसूत्रपाती दक्षिणः सम्भवति । तदभावे च तदभाव इति दिगुपाधित्वेनाणूनां सावयवत्वादिकं च आगच्छति । एवमन्यान्यपि लिङ्गान्युत्थापयितुं शक्यन्ते, तस्मान्नाणूनां निरवयवत्वं नित्यत्वं चेति ।

ननु नित्यानां चरमावयवानामनङ्गीकारे भवद्भिरवयवित्वेन मन्यमानानामणूनामनुत्पत्तिप्रसङ्गः । तदसद्भावे चाण्वादीनामपि तथात्वं स्यादिति जगत एव वस्तुत्वलोपः प्रसज्यते ।

न च दोषरहितसर्वेन्द्रियप्रत्यक्षगोचरस्य जगतः सत्ताऽपह्नोतुं शक्यत इति गत्यन्तराभावाच्चरमावयवानां वास्तविकी सत्ताऽभ्युपेया नित्यता च । अनित्यत्वे पुनस्तेषामप्युत्पत्तिप्रसङ्गाच्चरमावयवत्वहानिः । उत्पन्नेन हि पिण्डादिरूपेणावयविना अवश्यं भवितव्यम् । चरमश्चावयवो निरवयव स्तस्मान्नित्यश्चेति चेन्न, प्रमाणान्तरविरोधात् । प्रमाणान्तरेण ह्ययं पक्षो विरुध्यत इत्यवोचाम । श्रुत्यादिसिद्धान्तानुसारेण च रूपादीनां शक्तेः स्फुरणविशेषरूपतया आपरमाणुभ्यो ब्रह्माण्डान्तानां च जगतां रूपाद्यव्यतिरेकान्मूलभूतानां परमाणूनां तत्प्रकृतीनां वा चरमावयवत्वेऽपि सावयवत्वस्याप्यभावे नित्यत्वाप्रसंगाच्च । तच्चैतदुपरिष्टाद् विस्तरतः प्रवेदयिष्यामः । एवं परमाणूनां सामान्यतो जन्यत्वसिद्धेः वायवीयानामपि तथात्वमवधार्यते ।

अथेदानीमाकाशादिक्रमेण मारुताद्युत्पत्तावुपपत्तिं चिन्तयामहे ।

तत्र प्रथममुपयोगितया भूतानां स्वरूपं विचिन्त्यते । न हि वस्तुस्वरूपाविज्ञाने तदुपादानपरिचयः शक्यते कर्त्तुम् । तत्राधस्तात् स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमादित्यादिपातञ्जलसूत्रतन्त्राभ्याभ्यां भूतानां स्थूलादिसूक्ष्मपर्यन्तानि स्वरूपाणि शब्दमात्रेण कीर्त्तितानि । तान्येवेदानीमुपपत्त्या सम्भावयितुं प्रयतामहे । तत्र भूततत्त्वनिर्णये किं प्रमाणमादेयमिति प्रथमं विचार्यते । प्रतिवचने त्वस्य यथासम्भवं

सर्वाण्येवाक्षतानि प्रमाणान्याद्रर्तव्यानीत्यातिष्ठामहे। तत्र सर्वप्रमाणस्तम्भरूपत्वात् सर्ववाद्यभिमतत्वाच्च प्रत्यक्षमेव प्रमाणं भूततत्त्वविषये संचिन्तयामहे। सर्वे च वादिनो भूततत्त्वविषये प्रत्यक्षमेव प्रमाणमालम्ब्य विचारभूमौ समवतरन्ति। तत्र चानेके गुणक्रियादीनां समवायित्वेन तेभ्य एकान्तभिन्नानि भूतानि मन्यन्ते। केचन पुनस्तेभ्यः कथंचिदभिन्नानि कथंचिद् भिन्नानीति चाचक्षते। अन्ये पुनस्तेषां समुदायरूपाणि भूतानीत्यातिष्ठन्ते। अपरे चानिर्वचनीयरूपाणीति बहवः सिद्धान्तभेदास्तत्त्वजिज्ञासुं व्याकुलीकुर्वन्तीत्यतो महतीयं विचिकित्सा, कतम एषां पक्षश्चरमसिद्धान्तत्वेनादरणीय इति तन्निरसनाय च यथामति प्रयतामहे।

वयन्तावत् परितो दृश्यमानेष्वेषु क्षित्यादिनामधेयेषु व्यवहारभूमौ वस्तुत्वेनाभिमतेषु धर्मधर्मिभेदं न पश्यामः, न वा द्वैतम्। भवतु धर्मो धर्मी वा तत्त्वमत्र ये यथा प्रतिपाद्य सन्तुष्यन्ति, तुष्यन्तु, वयन्तु शिलापुत्रशरीरादिवत् सम्बन्धितया भेदव्यपदेशेऽपि धर्मधर्मिरूपमेकैकमेव वस्तु पश्यामः। न हि गन्धरसरूपस्पर्शशब्देभ्योऽतिरिक्तं किमपि वस्तु इन्द्रियेण कदाचित् केनचिद् गृह्यते, येन तदाश्रयभूतः कश्चिद् धर्मी साध्येत। रूपमात्रं हि नयनेन गृह्यते, तथा शब्दमात्रं श्रवणेन, स्पर्शमात्रं त्वचा, तथा रसमात्रं रसनया, गन्धमात्रं नसेति। आकृतिभेदाश्च रूपादीनामेव संस्थानभेदास्तथा मार्दवकाठिन्यादयश्च यथासम्भवं तेषामेवावस्थाभेदा इति मन्यामहे।

तस्माद्भवत्वयं देहो भवन्तु वा शय्यासनादीन्येतानि गृहं वैतद् भवतु, भवन्तु वैते गवादयो वृक्षादयो वा अन्यान्यपि वा यानि परितः प्रत्यक्षेण परिगृह्यन्ते, सर्वाण्येवैतानि गन्धरसरूपस्पर्शशब्दात्मकानि । न तु तेषामाधारतया किंचिद्वस्त्वस्ति, आधाराधेयभावस्तु तेषां समूहतदंशयोर्भेदेनाप्युपपद्यते । न हि रूपादीन्यपहाय प्रत्यक्षेणैतेषां किंचन परिलक्ष्यते । यदि च निर्बन्धातिशयाद् रूपादिव्यतिरिक्तो वस्तुविशेषः स्वीक्रियेतैव न तस्य प्रत्यक्षविषयत्वं शक्यमुपपादयितुम् । प्राप्यकारीणि हि इन्द्रियाणि सर्ववादिसम्मतानि । विषयप्राप्तिश्चेन्द्रियाणां तत्तद्देहीययन्त्रेषु सतामेव प्रत्यक्षतोऽवगम्यते न तु देहाद् विनिःसृत्य कस्यचिदिन्द्रियस्य विषयाभिसंकलनं विज्ञायते । यथा हि शब्दस्पर्शरसगन्धश्रवणत्वग्रसनानासिकाख्ययन्त्राणि बहिस्तु उपगम्यैव इन्द्रियैः प्राप्यन्ते, तथा रूपाण्यपि परितः प्रसृत्यास्माकं नयनयन्त्राणि समाश्लिष्यन्ति, दर्शनेन्द्रियेण प्राप्यन्ते, न तु रूपभिन्नानि रूपवत्तया परिकल्पितानि वृक्षादिवस्तूनि तत्तत्स्थानेभ्य उत्प्लुत्य नयनगोलकमुपेत्य नयनेन्द्रियेण प्राप्यन्त इति सरसोऽयं सिद्धान्तः । रूपमालोकस्ताप इति ह्यनर्थान्तरम् । एकमेव वस्तु मृदुतीव्रत्वाद्यवस्थाभेदेन क्रियाभेदाद् रूपादिनामत्रयं भजते । तद्धि यदा नयनगोचरीभवति तदा रूपमित्याख्यायते, यदा पुनस्तदन्यस्य रूपमुद्बोधयति तदाऽऽलोकः । पूर्वस्माच्चास्य तीव्रत्वम् । यदा त्वस्य तीव्रतरावस्था परिस्फुरति तदा पुनर-

यमेव ताप इत्युच्यत इत्येवं त्रयाणामन्योन्यत्वं वैज्ञानिकैः परीक्ष्य निरूप्यते, बाधादर्शनाद् वयमपि तदेवाद्रियामहे। तथाहि यद्यग्निसौराद्यालोकानां तापस्य वा अस्माकं नयनप्राप्तिः प्रतिपत्तुमिष्यते, नितरां तर्हि रूपस्यापि तथा वक्तव्यम्। यथा शब्दादयश्चत्वारो गतिमन्तः केन्द्रविशेषादवसृप्य कदम्बगोलकादिन्यायेन परितो व्याप्नुवन्ति, तथा रूपमपि दीपकलिकाद्यग्निपिण्डरूपकेन्द्रेभ्योऽन्येभ्यो वा दृश्यमूर्त्तिरूपेभ्यो यथान्यायमवसृप्य परितो दश हरितो व्याप्नोति। तच्च यथा शरीरस्यान्याङ्गानां त्वच आमृश्य यथान्यायमभ्यन्तरं गच्छति, तथा नयनयोरपि त्वच आमृश्य वक्ष्यमाणरीत्या अभ्यन्तरगतं सत् नयनेन्द्रियं समाश्लिष्य तेनैकीभूय मस्तिष्कस्थदर्शनोपयोगिमानसक्षेत्रमारुह्य विज्ञायते। एवं नयनेन्द्रियेण रूपाणि प्राप्यन्ते, इत्ययं प्रत्यक्षगोचरः सिद्धान्तः। ये त्वनेन न तुष्यन्ति प्राकृततत्त्वे चैकान्ततोऽन्धास्ते मुकुरजलादीनि लक्षयन्तु, तेन यदि सन्तुष्येयुरित्याशास्महे। तेषु यास्तेषां मूर्त्तयो दृश्येरन् ताः साकारा निराकारा वा? तत्र हस्तपदमुखनासिकानयनाद्यवयवा दृश्येरन् न वा? यदि दृश्येरंस्तदा ताः किं नीलपीतादिवर्णमात्ररूपाः, आहोस्विद् वर्णवद् भूतरूपाः किंवा प्रतिबिम्बत्वान्मिथ्याभूता वक्तव्याः। तदपि चिन्तनीयम्। तत्र तासां साकारत्वादिविषये न ते विवदेयुरिति मन्यामहे। रूपादिमात्रताविषये तत्र रूपाश्रयद्रव्यत्वप्रतिवादिनामपि तेषां नादितो भिन्नत्वं लप्स्यामह इति शङ्का-

मह इति मित्रत्वाकांक्षयैव तैः संलापे प्रयतामहे । ये तावत् प्रतिबिम्बं मिथ्यात्वेन मन्यन्ते, तान् पृच्छामः, किं प्रतिबिम्बो गगनकुसुमादिवन्मिथ्या, उत छायावन्मिथ्याभूतः ? आहोस्वित् सदेव वस्तु भवन् बिम्बत्वेन मिथ्याभूत इति ? तत्र नाद्यः कल्पयितुं शक्यते, अर्थक्रियाकारित्वात् । प्रतिबिम्बो हि स्वयं नयनमुपगम्य नयनेन वा उपगतोऽभिसम्बध्यते । सम्बद्धश्चात्ममनःसंयोगादिभि र्गृह्यते ; मृदुतीव्रत्वादिना च तत्र नयनप्रसादनविक्षेपणादिक्रिया दृश्यन्ते । चन्द्रादिबिम्बा हि जलादिषु दृष्टा मृदुत्वान्नयने प्रसादयन्ति । सौरबिम्बस्तु तीव्रत्वाद् विक्षेपयतीति सर्वेषां प्रत्यक्षसिद्धम् । आकृतिग्रहणयन्त्रेण च यदा द्रव्यविशेषलिप्तेन काचपट्टकेनाकृतिर्गृह्यते, तदा मुखादिप्रतिबिम्ब एव तत्र गत्वा संलिप्तान् द्रव्यविशेषान् सावयवसंस्थानतारतम्येनापसारयति ततश्चाकृतिर्व्यज्यते । तदेतदर्थक्रियाकारित्वं नावस्तुनोपपद्यते । अर्थक्रियाकारित्वं हि वस्तूनां सत्त्वमुपपादयति । यदि तावत् प्रत्यक्षतोऽर्थक्रियाकारित्वे उपलभ्यमानेऽपि वस्तुनो मिथ्यात्वमभ्युपेयते, तर्हि सर्वेषामेव वस्तूनां मिथ्यात्वप्रसङ्गः । तस्मात् प्रतिबिम्बो न गगनकुसुमादिवदवस्तु ।

अथ माभूदर्थक्रियाकारित्वात् सर्वथा मिथ्यात्वं प्रतिबिम्बस्य, वस्तुधर्मत्वाच्चास्य छायावत् सत्यत्वमभ्युपेतव्यम् । छाया हि बिम्बरूपस्य सूर्यादेः प्रतिबिम्बाश्रयाणां वा जलकाचादीनां धर्मविशेषो बिम्बाद्वा जलादितो वा स्फुरित्वा

त्रावभासते। न हि सर्वेषु वस्तुषु छाया परिस्फुरति, किन्तु जलादिष्वेव, न वा वाय्वादीनां छाया दृश्यते। तस्माद्वस्तुविशेषनिष्पत्तौ सत्यां तदीयधर्मविशेषश्छायेत्यवगम्यते। तच्च प्रतिबिम्बतोऽनर्थान्तरमित्यतो नावस्तु प्रतिबिम्बः। जलादिधर्मव्यतिरेकेण तु तस्य वस्तुत्वं नाङ्गीक्रियत इति तद्रूपेणासावसन् इति चेदत्र पृच्छयते, छायाप्रतिबिम्बयोरनर्थान्तरत्वमभ्युपगच्छद्भि र्भवद्भिर्यत् पृथिव्यादिष्वस्मदादीनां कृष्णवर्णा इव छाया दृश्यन्ते, ता अपि प्रतिबिम्बरूपा एवेति वक्तव्यं न वेति। तत्र यदि प्रतिबिम्बरूपताभ्युपेयते, तर्हि परस्परविरुद्धयोरालोकतमसोरेकत्वमभ्युपेतं स्यात्। प्रतिबिम्बस्तावन्मा भूदालोको रूपविशेषो वा, अस्तु वा तदाश्रयाणां बिम्बानां धर्मविशेषः प्रकाशरूपत्वन्तु सूर्य्यादिप्रतिबिम्बानां हालिकपालिकादिभ्योऽप्युपालम्भभयात् न कश्चिन्निराकरिष्णुः स्यात्। छायाश्चास्माकं प्रदीपादिसम्मुखानां यद्रात्रौ पश्चात्तो भित्त्यादिष्वापतन्ति, ता आलोकाभावरूपास्तमांस्येव। एतदप्याशिशुभ्यः सर्वैरुपलभ्यते। तस्माद् यदि प्रतिबिम्बाश्छायारूपाः स्युस्तदा तमोरूपाः। यत्तु दिवाप्यस्माकं भास्करसम्मुखानां पश्चात्तश्छायाः सम्पतन्ति, ता मन्दालोकसंश्लेषाद् रात्रिच्छायावन्नान्धतमसरूपा अपि न तमोरूपत्वं विजहति। तस्मान्न छाया प्रतिबिम्बश्चेत्यनर्थान्तरम्।

यस्तु जलादिषु वृक्षादिप्रतिबिम्बे छायाव्यवहारः स छायासादृश्याद्वेदितव्यः। छाया हि तमोरूपापि कथंचिच्छिरः-

पाण्याद्यवयवपरिच्छिन्नतया स्वप्रतियोगिनोऽवयवान् परिचाययति । एवं प्रतिबिम्बोऽपि प्रतियोगिरूपवृक्षादीनामवयवपरिच्छित्तिं परिचाययतीति सादृश्यम् ।

न चेयं छाया प्रतियोगिनामधिकरणानां वा पृथिव्यादीनां धर्मः, आलोकाभावरूपा हि सेत्यवोचाम । तस्मान्न छायैव प्रतिबिम्बः ।

अथेदानीं तृतीयपक्षश्चिन्त्यते । यदि तावदर्थक्रियाकारितया स्वेन रूपेण प्रतिबिम्बस्य वस्तुत्वं स्वप्रतियोगिबिम्बरूपेण चावस्तुत्वं स्वीक्रियेत, तदा पृच्छ्यते भवान् किं धर्मत्वेन तर्हि वस्तुत्वं मन्यत इति ? अत्राधिकरणानां धर्मविशेषरूपेण तथात्वं स्यात् । प्रतिबिम्बा हि मसृणेष्वेव वस्तुषु प्रतिभासन्ते, न तु कर्कशेषु काष्ठलोष्ठादिषु । तस्मादस्ति मसृणानां द्रव्याणां धर्मविशेषः, येन प्रतिबिम्बाः सम्भवन्ति । काष्ठलोष्ठादिषु तु नासौ धर्मो विद्यत इति न प्रतिबिम्बा आभान्ति । प्रतिबिम्बाश्रयाणां धर्मः प्रतिबिम्बजनकः, तस्य च कार्येणाभेदात् प्रतिबिम्बोऽप्याश्रयधर्मत्वेनाभिधीयते, इति चेद् ब्रवीति, तदनुपपन्नं, बिम्बीयाकारत्वात् प्रतिबिम्बस्य । न हि बिम्बीयाकारः प्रतिबिम्बाश्रयस्य धर्मो भवितुमर्हति, तदीयाकारो हि तस्य धर्मः । बिम्बाकारो हि स दीर्घत्रिकोणत्वादिपरिमाणलोहितपीतवर्णादिरूपः । स यदि प्रतिबिम्बाश्रयस्य धर्मः स्यात्, स्याच्च तदा विरुद्धधर्मसंकरः ।

अरुणादयो हि वर्णाः सूर्य्यमण्डलादीनामेव गुणरूपा धर्म्माः न तु जलस्य, न वा मुकुरादीनाम् । शुक्लो हि वर्णोऽप्सु भवतामभिमतः, तथा मुकुरादिषु च । तस्मादरुणादयो वर्णा जलत्वस्य विरुद्धाः । तथा मुकुरादिष्वपि । सूर्य्यादिप्रतिबिम्बानां चारुणादयो वर्णाः प्रत्यक्षसिद्धाः । तस्माज्जलत्वादिभिर्लोहितपीतादिवर्णानां विरुद्धधर्माणां संकरः स्यात् ।

यत्तु जलेषु लोहितादिवर्णविशिष्टद्रव्यान्तराणां संयोगेन लोहितादिवर्णा दृश्यन्ते स भ्रमो मन्तव्यः । यदा हि जलेषु लोहितादयो वर्णा दृश्यन्ते, तदा द्रव्यान्तराण्येव लोहितादीनामाश्रयाः, न तु जलं, न वा लोहितादिभिर्जलानां शुक्लत्वं व्याहन्यते, अत्यन्तसंयोगात्तु द्रव्यान्तराणां जलस्य च वर्णभेदा विविक्ततया न गृह्यन्ते । तस्माद् विरुद्धा अपि वर्णा जलेष्वारोप्यन्ते । आरोपाच्च जलेषु लोहितादिव्यवहार इति नास्ति संकरसम्भवः । प्रतिबिम्बोद्भासनदशायां च न कस्यचित् द्रव्यान्तरस्य जलादिषु संयोगो भवद्भिरभ्युपेयते ; जलादीनान्तु धर्मत्वेन प्रतिबिम्ब इष्यते, तस्मादशक्यप्रतिकारः संकरः ।

गोलत्रिकोणत्वादयश्च बिम्बानामेव धर्म्माः प्रतिबिम्बेषु दृश्यन्ते ; न तु तदाश्रयाणां दीर्घत्रिकोणत्वादयः । न हि दीर्घजलाशयेषूद्भासितः सूर्य्यप्रतिबिम्बो दीर्घाकारेणाभाति, किन्तु सुगोलसूर्य्यबिम्बाकारेण । स च बिम्बस्यैव धर्मः, न तु तज्जलाशयस्येति विरुद्धधर्मसंकरः, एवमन्यत्रापि । तस्मान्न

प्रतिबिम्बस्तदाश्रयाणां धर्मः । मसृणत्वादिकन्तु भवतु द्रष्टॄणां नयनादिषु प्रतिबिम्बोद्भासने हेतुः, भवतु वा तन्मुकुरादीनां धर्मः, न तु घटादीनां मृदादिरिव तत् प्रतिबिम्बानामुपादानकारणं समवायिकारणं वा, येन तत्सादृश्येन तत्कार्यप्रतिबिम्बैः सहाभेदः परिकल्प्येत । न हि दण्डादिकारणेन घटादिकार्याणां कैश्चिदभेदो व्यवह्रियते इत्यतोऽनुपपन्नस्तृतीयः पक्षः ।

अथ किं तर्हि प्रतिबिम्बो नाम वस्तु । यत्र सव्यवच्छेदा बिम्बस्यावयवा यथायथमुद्भासन्ते ? तथा गोलत्रिकोणत्वादिमानं लोहितादिवर्णाश्च ? न हि सूर्यादयो बिम्बभूताः पिण्डा गगनादितोऽवप्लुत्य जलमुकुरादिभिः संयुज्यन्ते, येन तदाकारास्तेषु दृश्येरन् । दृश्यन्ते तु जलादिषु सूर्यादिबिम्बानां रूपाणि, सव्यवच्छेदमवयवानां यथायथं संस्थानं, गोलत्वादीनि च परिमाणानि । तस्माद् गत्यन्तराभावेनाकामैरप्याश्रयशून्यानां लोहितादिवर्णानां जलादिषु गतिरभ्युपेया । ततश्चास्माभिर्मित्रत्वं निबध्येत, निराश्रया हि वर्णाः कदम्बगोलकादिन्यायेन परितो गच्छन्तीत्यवोचाम ।

यत्तु प्रतिबिम्बेषु गोलत्वादिमानानि समुद्भासन्ते तद्वर्णानामेव विस्तृतेः परिच्छित्तिभंगी । तेनैव च बिम्बानामवयवसंस्थानवत् संस्थानपरिपाटी । न हि नीलपीतादिरूप एक एव वर्ण आकेशाद् आ च पादतलात् मनुष्यादिमूर्त्तिषु सर्वत्र समतया विराजते । गण्डललाटादिषु चेदाश्वेत आपीनो वा

स्यात्, अधरोष्ठरसनासु त्वालोहित एव भवेत्। दशननयनक्षेत्रेषु पुनः श्वेतः, पक्ष्मसु केशलोमसु नयनगोलके च नीलः कृष्णो वा करपदतलादिषु त्वन्योन्यश्च भवेत्। इत्येवं बिम्बानां वर्णसंस्थानभेदात् प्रतिबिम्बानामपि तद्भेदो भवति। एवं विस्तृतिपरिच्छेदभंगी च। सेयं विस्तृतिपरिच्छेदभङ्गी वर्णानुगतत्वाद्वर्णानामेव विशेषणं समावेशभेदश्च। तस्मात् प्रतिबिम्बानां दृश्यमान आकारो वर्णानामेव प्रकारभेदः ततश्च तेषां वर्णा एव साकाराः, वर्णमात्ररूपा एव च प्रतिबिम्बा इत्यवश्यमभ्युपेयम्। ते च बिम्बा वर्णेभ्योऽनतिरिक्ताः, बिम्बेभ्यो हि नीलपीतादयो वर्णा निःसरन्तः परितो व्याप्नुवन्तः सर्वाण्येव वस्तून्युपगच्छन्ति। वस्तूनां च मध्ये केषांचिद् वर्णगतेरबाधकत्वमनुकूलत्वं वा स्वाभाविको धर्मः। केषांचिद् वर्णविनाशकत्वं केषांचिन्नदीतटादीनां प्रतिध्वनिप्रत्यर्पकत्ववत् सोपानगतवर्णप्रत्यर्पकत्वं केषांचिच्च वस्तूनां वर्णभेदक्रमेण नाशकत्वप्रत्यर्पकत्वे उभे एव स्वाभाविकधर्मेण वस्त्वन्तरसमाश्लेषाच्च केषांचित् तथाभूतौ धर्म्मौ वर्त्तेते। तत्र विशुद्धकाचपट्टादिषु वर्णप्रवाहस्याबाधकत्वं धर्मः। तदन्तरालस्थोऽपि हि पुरुषः तन्मुखस्थानि सूर्यबिम्बादीनि सुस्पष्टं प्रपश्यति, तदालोकेन च पीड्यते। काचपट्टश्च पुनः पारदपृष्टः सन् तद्वर्णप्रवाहमवरुणद्धि प्रत्यर्पयति च सम्मुखतः। स एव नीललोहितादिवर्णकलापः प्रतिबिम्बाख्यां भजमानः सम्मुखतः प्रतिप्रसर्पन् द्रष्टृनयनमुपागतः, तद्गतदर्शनेन्द्रियेण संप्राप्य

द्रष्टृभिर्यथानियमं गृह्यते, सलिलमपि मुकुरवत् कर्मानुतिष्ठति। तथा मसृणाः कांस्यपट्टादयश्च। कर्कशाः पुनः काष्ठलोष्ट्रादयो न स्वगतान् मुखादिबिम्बवर्णान् काचादिवत् पश्चात्तः प्रवाहयन्ति न वावरुध्य सम्मुखतः प्रतिप्रसारयन्ति, किन्तु स्वशरीर एव विलापयन्ति। तस्मान्न तेषु प्रतिबिम्ब उद्भासते, न वा दृश्यते। तस्मात् प्रतिबिम्बो नावस्तु न छाया, न वा आश्रयधर्मः, बिम्बस्यैव तु सत्यं रूपं प्रतिबिम्ब इति वक्तव्यम्। बहुलक्षप्राकृततत्त्वकोविदैर्बहुविधपरीक्षाभि र्निर्णीतमेतत् तत्त्वमिदानीमेवं पृथिव्यां सर्वत्र जाज्वल्यते। विदेशीयविद्याध्यापकैश्च परीक्ष्य प्रदर्श्यते, यत् तद्विद्यामधीयानानां सर्वेषामेव हृदयान्यालोकयति। बहुविधयन्त्रसहायैरस्माभिरपि एतत् सम्यक् परीक्ष्यानुमोदितम्। तस्मादस्मद्देशे संस्कृतभाषामात्राभिज्ञानां न्यायशास्त्राद्युपाध्यायानां मध्ये यदेतत् तत्त्वं कस्यापि हृदयं न स्पृशति, तद् विचिन्त्य लज्जामहे। यः पुनस्तेषां प्रत्यक्षपरीक्षाविरुद्धः सारशून्यप्रतिबिम्बमिथ्यात्वादिविषयस्तर्कः स ततोऽप्यधिकं लज्जयतीत्यतो मा भूत् तेषामेव जिगीषामूलस्तर्क इति प्रार्थयामहे।

इत्थं प्रतिबिम्बतत्त्वं चेद् भवन्तः सत्यतया मन्येरन्, अभ्युपगच्छेयुस्तर्ह्यनेन साकं नीललोहितादिवर्णानां गतिं दीर्घत्रिकोणत्वाद्याकारसंस्थानसमावेशपरिच्छित्तिभंग्यादिरूपविशेषणानि चावयवभेदव्यंजकानि। तथाहि यथेयं बिम्बेभ्यः प्रसृता नीललोहितादिवर्णमाला बहुविशेषणभेदा प्रतिबिम्बा-

ख्यां भजमाना मुकुरजलादिषूद्भासिता पुनस्तेभ्यः प्रतिप्रसारिता नयनगोलकवासिनीव नयनेन्द्रियेण प्राप्य गृह्यते बिम्बदर्शनकालेऽपि तथैव सर्वेभ्यो बिम्बेभ्यः परितः प्रसृता बहुविशेषणभेदा वर्णमाला मुकुरजलादिवदस्माकं गात्राणि नयनानि चोपगच्छति । ततो नयनगोलकाभ्यन्तरेऽपि जलकाचवत् स्वच्छपदार्थसद्भावादन्तर्नीयमाना सा तद्वासिना नयनेन्द्रियेण संप्राप्य यथानियमं गृह्यते । तादृशपदार्थसद्भावाच्च चक्षुषि मुकुरादिष्विव द्रष्टॄणां प्रतिबिम्बा दृश्यन्ते, न तु नयनेन्द्रियं चक्षुषोऽवप्लुत्य किंचिद्वस्तु प्राप्नोति । आलोकमयपदार्थविशेषस्तु चक्षुषो विनिःसृत्य दृश्यवस्तूनि संस्पृशति । तेन सूर्याद्यालोकवद्वस्तूनां रूपाभिसर्पणेऽनुकूलतामात्रं भवति, न तु तन्नयनेन्द्रियम् । स्नायुविशेषाश्रितत्वादिन्द्रियाणाम्, तच्च परिष्टात् प्रवेदयिष्यते ।

वर्णमालावसर्पणविधौ तवस्माकं विदेशीयैरस्ति कश्चिदसमन्वयः । ते तावत् प्रायेण दृश्यवस्तूनां स्वीयरूपावसर्पणं नैवाभ्युपगच्छन्ति । सूर्याग्न्यादितैजसपिण्डव्यतिरिक्तानि च सर्वाण्येव वस्तूनि ते अदृश्यानीति मन्यन्ते । या तु परितो दशदिक्षु गृहभित्तिमानववृक्षादिभ्यः प्रसृता वर्णमाला दृश्यते, सा न तेषां स्वकीया, किन्तु सूर्याग्न्यादिरूपपरकीया । तथाहि,—सूर्यबिम्बप्रसृतान् पुनर्वर्णानग्निबिम्बादिप्रसृतांश्च परितः सर्वाण्येव क्षित्यादिपार्थिवद्रव्याणि काचादिभिन्नानि न पश्चात्तः प्रवाहयन्ति न वा मुखादिबिम्बप्रसृतवर्णवत् सर्वान्

वर्णान् स्वशरीरे विलापयन्ति । न वा पारदपृष्ठकाचादिवत् प्रतिबिम्बापरनामकान् सर्वान् वर्णानवरुध्य प्रतिप्रसारयन्ति । कांश्चित्तु वर्णान् तेषां स्वशरीरे विलापयन्ति, कांश्चित् पुनः प्रतिप्रसारयन्ति । ते च नयनमुपागता स्तद्गतदर्शनेन्द्रियेण यथायथं गृह्यन्ते । अतएव वर्णा बिम्बवर्णानामेवांशभूता अपि न प्रतिबिम्बत्वेनाख्यायन्ते, किन्तु गृहभित्तिवृक्षादीनां पार्थिव-द्रव्याणां रूपत्वेन । वस्तुतस्तेषां किंचिद् रूपमस्ति न वा तद्दुर्वचम् । यद्यस्तीति निर्णीयेत तर्ह्यस्तु किन्तु न तत् प्रत्यक्ष-गोचरः प्रत्यक्षगोचरस्तु सूर्यस्याग्नेर्वा वर्णमालैव । अपरिसं-ख्येयाः किल सूर्यात् प्रसृतवर्णाः समानतयैव परितः सर्व-वस्तुषु संगताः, तत्तद्वस्त्वारम्भकपदार्थभेदेन वर्णभेदग्रहण-प्रत्यर्पणनियमः प्रवृत्तः । स यथा वृक्षाणां पत्राणि सूर्यप्रसृता-नन्यान् सर्वान् वर्णान् स्वशरीरे विलाप्य हरिद्वर्णमेव प्रतिप्रसा-रयन्ति, फलानि चापक्वावस्थायां, तथैव पक्वानि पुनः पीतवर्णं लोहितं वा कुसुमानि च यथासम्भवं नीललोहितपी-तादिवर्णान् प्रतिप्रसारयन्ति । एवमन्येऽप्यवयवाः कांश्चन वर्णान् विलाप्य कांश्चन वर्णान् प्रतिप्रसारयन्ति । इत्थं विलापन-प्रतिप्रसारणभेदादेकस्मिन्नेव वृक्षेऽवयवभेदेन बहवो वर्णभेदा दृश्यन्ते । तथैव सर्वेष्वेव दृश्येषु वस्तुषु वर्णविलापनप्रतिप्रसारण-प्रक्रियाभेदाद् दृश्यमाना वर्णभेदा वस्तूनां भेदं विनिगमयन्ति । न च तेषां वस्तूनां स्वानि रूपाणि केनचिद् दृश्यन्ते । तस्माद-दृश्यानि सर्वाणि वस्तूनीत्याहुः । वयन्तु नैतेन सन्तुष्यामः,

किन्तर्हि सूर्याद्यालोकं यत्तद्द्रव्यगतानामेव वर्णानां समुद्भासकतया मन्यामहेस्तुष्यामः । तथाहि—येन हेतुना येन च प्रकारेण पृथिव्यादिपिण्डसदृशात् सूर्यपिण्डादुत्तप्तात् तदीया एव विविधा वर्णाः परितो निःसरन्ति, तेनैव हेतुना तेनैव प्रकारेण तत्किरणसंयुक्तेभ्यः तत्तापेन नयनकिरणतापेन च ईषत्तप्तेभ्यो वृक्षादिवस्तुभ्यो विविधा वर्णभेदाः परितो निःसरन्ति । निःसृत्य च यथानियमं नयनेन्द्रियेण प्राप्ता गृह्यन्ते, अमानिशायां सम्यगवरुद्धेषु तु गृहादिषु मार्ज्जारादीनां नयनज्योतिषैवातप्तेभ्यस्तत्तद्गृहभित्तिसज्जादिभ्यस्तदीया वर्णा निःसृत्य यथानियमं मार्ज्जारादिनयनेन गृह्यन्ते । विद्युदग्न्यादीनान्तु सूर्य्यसमानत्वात् तत्किरणयोगे वस्तूनां वर्णप्रकाशोऽपि समः । इत्येवं सौरकिरणेन दृश्यानामेव वर्णा अस्माकं नयनैर्गृह्यन्ते, न तु ते सूर्यकिरणवर्णाः ये तु सूर्यकिरणसंयुक्तेभ्यो विशिष्टकाचेभ्यो नीलपीतादयो वर्णा निर्गम्य संदृश्यन्ते, ते सूर्यप्रतिबिम्बस्यैवांशाः, तस्मात्ते सौरा एव सन्तस्तत्किरणसन्तप्तकाचादिनिःसृततत्तद्वर्णैः सममविविक्तभावेन गृह्यन्ते । तस्माच्च ते केवलाः सौराः, न च केवलास्तत्तद्द्रव्यीयाः, किन्तूभयमिलिताः, यच्च तन्मिलनं तन्नानावर्णसंकलितपाटलादिवर्णानामिव बोद्धव्यं, न तु रासायनसंयोगेनेति मन्यामहे । आस्तामत्रायं विचारः, वर्णा एव द्रव्येभ्यो विनिःसृत्य द्रष्टृनयनैः प्राप्यन्ते, गतिमन्तः साकाराश्च त एव ; न तु तदतिरिक्तं तदाश्रयभूतं द्रव्यं कश्चन पश्यतीत्येतस्मिन्

सिद्धान्ते नास्माभिस्तेषामस्ति कश्चिद्विरोधः । प्रत्यक्षपरीक्षा-मूलो ह्ययं सिद्धान्तः ।

वर्णानाञ्च तथाविधविशेषणानि वर्णमात्रस्य चक्षु-र्ग्राह्यत्वं च शास्त्रमप्याह—

यथा—ज्योतिः पश्यति रूपाणि रूपञ्च बहुधा स्मृतम् ।
ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽनुवृत्तवान् ॥
शुक्लः कृष्णस्तथा रक्तः पीतो नीलारुणस्तथा ।
कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो मृदुदारुणः ॥

इति महाभारते शान्तिपर्वणि चतुरशीत्यधिकशततमाध्याये ।

न्यायदर्शनमपि "गन्धरसरूपस्पर्शशब्दास्तदर्थाः" इत्यनेन रूपमेव नयनग्राह्यत्वेन निश्चिनोति । श्रुतिश्च "चक्षुषा हि रूपं पश्यतीत्याद्याः" ।

यथा च वादिभीरूपाद्याधारत्वेन कल्पितानां रूपादि-भिन्नानां गृहभित्त्यादिवस्तूनां धर्मत्वेन कल्पितानि दीर्घत्रिकोण-त्वादीनि वस्तुतो रूपाणां विशेषणानि । तथा मृदुस्वरत्वादीनि शब्दानां, स्निग्धरूक्षविशदत्वानि च गन्धानां रसानाञ्च विशेषणानि मधुराद्यपरनामधेयानि मृदुतीक्ष्णत्वादीनि न तु तदतिरिक्तत्वेन कल्पितानां वस्तूनां विशेषणानि । एतदपि शास्त्रेण चाभिहितम् । तथाहि,

उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ।
तथा खरो मृदूरूक्षो लघुर्गुरुतरोऽपि च ।

एवं द्वादशधा स्पर्शो वायव्यो गुण उच्यते ॥
षड्ज ऋषभगान्धारौ मध्यमो धैवतस्तथा ।
पंचमश्चापि विज्ञेय स्तथा चापि निषादवान् ।
एष सप्तविधः प्रोक्तो गुण आकाशसम्भवः ॥
इष्टश्चानिष्टगन्धश्च मधुरः कटुरेव च ।
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ।
एवं नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः ॥
मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ।
एष षड्विधविस्तारो रसो वारिमयः स्मृतः ॥

इति महाभारतम् (शान्तिपर्वणि चतुरशीत्यधिकशततमाध्याये) ।

इत्थम्भूता गन्धरसस्पर्शशब्दा एव घ्राणरसनत्वक्श्रोत्रैर्गृह्यन्ते, न तु तद्भिन्नतया तदाधारत्वेन कल्पितानि वस्तूनि । न्यायसूत्रं चात्र गन्धरसेत्यादिकं प्रदर्शितमेव । श्रुतिरपि चक्षुषा हि रूपं पश्यतीत्यादिवद् घ्राणेन हि गन्धमित्यादिना घ्राणादीन्द्रियाणामपि गन्धादय एव विषया इति वदति । तस्मादप्रत्यक्षमाधारभूतमेतेषां वस्त्वन्तरम् ।

केचित्तु वाय्वाकाशगतयोः स्पर्शशब्दयोराधारव्यतिरेकेणैव त्वक्श्रवणेन्द्रिययोः प्रत्यक्षविषयत्वमङ्गीकुर्वन्तोऽपि शिष्टानां गन्धादित्रयाणां तयोश्च क्षित्यादिगतयोर्निराधारप्रत्यक्षे विवदन्ते । एवं हि तेषामभिलाषो यत् स्पर्शाधारप्रत्यक्षे तस्य रूपवत्त्वं कारणम् । तस्मात् स्पर्शवतां मध्ये यत्र यत्र रूपं विद्यते, तस्यैव स्पर्शः सह तेन त्वचा विज्ञायते। यत्र तु रूपं नास्ति तस्य

स्पर्शमात्रमेव विज्ञायते, स्पर्शलिङ्गेन पुनः सोऽनुमीयते। रूपवन्ति च क्षित्यप्तेजांसीत्यतस्तान्येव त्रीणि स्पर्शेन समं त्वगिन्द्रियेण विज्ञायन्ते। वायुश्च रूपाभावात् त्वचोऽविषयः, अन्यथा दिक्कालाकाशात्मनामपि सर्वमूर्त्तसंयोगितया सह सर्वैः स्पर्शसद्भावात् त्वाचप्रत्यक्षापत्तिः। न ह्यात्मा कालो दिशो वा, आकाशं वा केनचित् त्वचा विज्ञायते। तस्माद् द्रव्याणां त्वाचप्रत्यक्षे रूपं कारणम्। तथा श्रावणप्रत्यक्षेऽपि शब्दवतां रूपं कारणमिति मारुताकाशयो रूपाभावान्न श्रावणप्रत्यक्षविषयता भवतीति। अत्र दिक्कालादीनां त्वाचप्रत्यक्षे वायुगगनयोश्च श्रावणे ज्ञानेऽन्यकारणाभावे सत्यपि यत्र रूपाभावस्य कारणत्वं कल्पयन्ति, तत्र मौनमेवावलम्ब्य तान् पृच्छामः, यदि तावद् वाय्वादीनां स्पर्शः शब्दश्च वाय्वाकाशयोस्तद्व्यतिरेकेणैव त्वक्श्रवणाभ्यां गृह्येते, स्पर्शशब्दाभ्यान्तु ते अनुमीयन्ते, किमपराद्धन्तर्हि शिष्टैस्त्रिभिर्गन्धरसरूपैः, येन स्पर्शशब्दावन्तरेणाधारं त्वक्श्रवणाभ्यां विज्ञातुं शक्येते। गन्धादीनि तु त्रीणि न शक्यन्त इति प्रत्यक्षमेवैतद् विनिगमयतीति चेन्न, आत्मादिप्रत्यक्षापत्त्या यदि वायोस्त्वाचप्रत्यक्षमपह्नूयेत नयनसंयोगानुपपत्त्या तर्हि रूपवतामपि नयनेन्द्रियप्रत्यक्षमपह्नोतुं शक्यते। संशयविषयं च प्रत्यक्षं नाभ्युपगच्छामः। तस्मान्न प्रत्यक्षेण प्रमाणेन क्षितिजलतेजसां घ्राणादीन्द्रियविषयत्वं कल्पयितुं शक्यत इति निरस्तः साधाराणां गन्धादीनां प्रत्यक्षबाधः। माभूत् रूपाद्यधिकरणानां सत्वे

प्रत्यक्षं प्रमाणमनुमानन्तु भवत्येव। तत्र गुरुलघुत्वादीनि लिङ्गानि, रूप आलोकस्ताप इति ह्यनर्थान्तरं यूयं ब्रूथ। तत्रालोके वर्णे तापे वा न कदाचित् केनचिद् गुरुत्वमनुभूयते लघुत्वं वा। सति च गुरुत्वे लोष्ट्रादिनेव तेन संयुज्यमानेन नयनमाहनिष्यत, न च तथा व्याहन्यते। तस्मात् प्रत्यक्षतोऽनुमानेन वा वर्णस्य गुरुत्वाद्यनुपलम्भात् तद्भिन्नस्यैव तदधिकरणस्य गुरुत्वादयो धर्मा इति निश्चयाद् गुरुत्वादिना रूपव्यतिरिक्तं तदधिकरणमनुमीयते। गुरुत्वादयश्च सर्वेषां प्रत्यक्षसिद्धा इति चेदत्र पृच्छ्यते, गुरुत्वादयश्चेत् प्रत्यक्षसिद्धतयाभ्युपगम्येरन् षड्विधानां तर्हि कतमत् तत् प्रत्यक्षं, किं तच्चाक्षुषं श्रावणं वा, अथ रासनमाहोस्वित् नासिकं मानसं वेति? तत्र नयनेन चेद् गुरुत्वं गृह्येत, तदा सविशेषणस्य रूपमात्रस्यैव नयनविषयत्वाद् गुरुत्वादीनि रूपस्यैव विशेषणानि स्युः, स्युश्च तदा तस्यैव धर्म्मा इति न तानि रूपव्यतिरिक्तनदाधारलिङ्गानि स्युः। श्रोत्रादीन्द्रियग्राह्यत्वेऽपि गुरुत्वादीनां तत्तन्निर्द्दिष्टविषयशब्दादिविशेषणतया तद्धर्म्मत्वेनाभ्युपेयत्वाल्लिङ्गत्वानुपपत्तिः।

अथ मानसप्रत्यक्षविषयत्वमिच्छेयु गुरुत्वादीनाम्, अस्त्वेवं तर्ह्यतीन्द्रियत्वमायातं भवद्भिर्मनस इन्द्रियत्वानभ्युपगमात्। घ्राणादीनि पञ्चेन्द्रियाणि मनस्त्वन्तःकरणमिति हि भवन्तो मन्यन्ते, सुखदुःखेच्छाद्वेषप्रयत्नज्ञानानि च मनोग्राह्यत्वेन निश्चिन्वन्ति। तस्माद् गुरुत्वादीनां पुनर्मनोग्राह्यत्वमङ्गीकुर्व-

द्भिर्भवद्भिः स्वसिद्धान्तबाधश्च स्यात्। अथ यदि मनसोऽपीन्द्रियत्वमभ्युपगच्छेयुः, मनोविषयनिरूपणमनादृत्य वा मनोग्राह्यत्वं गुरुत्वादीनामिच्छेयुः तर्हि किं बाह्यानि गुरुत्वादीनि मनोमात्रेण गृह्येरन् उत वा देहीयगुरुत्वादीनीति निर्णेयम्। तत्र मनसो बाह्यवस्तुग्रहणे बहिरिन्द्रियद्वारकतया गुरुत्वादीनां च बहिरिन्द्रियैर्ग्रहणनिष्पत्तियोग्यसम्बन्धाभावात् तद्द्वारकत्वानुपपत्त्या मनसा बाह्यगुरुत्वादिज्ञानमनुपपन्नम्। यदि हि बाह्यकरणव्यापारमन्तरेणापि गुरुत्वादिज्ञानं जायत इति वक्तुमिच्छेयुः, समानन्यायेन तर्हि रूपादिज्ञानेऽपि नयनादीन्युपेक्ष्यन्ताम्। न च तत् कर्तुं भवन्त उत्सहेरन्। तस्माद् बाह्यगुरुत्वादीनि मनसोऽग्राह्याणि, आभ्यन्तरगुरुत्वादीन्यपि तथैव। आभ्यन्तराणि तानि देहसंसृष्टशक्तिविशेषद्वारेणैव मनसा ग्रहीतुं शक्यन्ते, न तु तत्सहायतामन्तरेण। पक्षाघाते हि सति तथाविधशक्तावन्तर्हितायामवशीकृतानामङ्गानां गुरुत्वं लघुत्वं तापशैत्यादीनि वा न मनसा गृह्यन्ते। सत्येव तु शक्तीनां देहप्रचारे मनसा सर्वमुपलभ्यते। तस्माद् यच्छक्तिप्रचारे सति सर्वे दैहिकधर्मा मनसा गृह्यन्ते तस्याः करणत्वमपहाय मनोमात्रस्य करणत्वेऽभ्युपगते पक्षाघातेनावसन्नानामप्यङ्गानां मनसा गुरुत्वादिधर्मज्ञानप्रसङ्ग इत्यतो न गुरुत्वादीनि मनोमात्रग्राह्याणीत्यतोऽनुपपन्नं गुरुत्वादीनां प्रत्यक्षम्।

अथानुमानेनैव गृह्यन्त इति ब्रूमः। तथा च सति रूपादिव्यतिरिक्तानि तदधिकरणानि वक्तव्यानि। न हि रूपादिषु

कथचिद् गुरुत्वादीनि केनचिद् दृष्टानि, न वानुमीयन्त इति चेन्न, गुणधर्मयोरन्यारम्भकत्वासम्भवेनातात्त्विकतया गुरुत्वादीनां वाङ्मात्रत्वात् । न हि गुरुत्वं लघुत्वं वा कस्मिंश्चिद्वस्तुनि कश्चिद् गुणो धर्मो वा वक्तुं शक्यते । पृथिव्या हि प्रणयप्रणोदिताकर्षणक्रियया सन्निहितवस्तूनि क्रोडे क्रियन्ते । तेन च तानि वस्तूनि पृथिव्यां पतन्तीति व्यवह्रियते । सा चाकर्षणक्रिया परमाणूनां तत्तत्कारणभूतानां चाणुविशेषाणां प्रत्येकं प्रभवति । ततो यस्मिन् द्रव्ये परमाणूनां तत्कारणभूतानां वाणुविशेषाणां संख्याधिक्यं नितरां तत्राधिक्येनाकर्षणक्रियायाः प्रचारः । यथा समव्यासादिविशिष्टमृल्लौहपिण्डयोः मृत्पिण्डापेक्षया लौहपिण्डे परमाणूनामाधिक्यादाधिक्येनाकर्षणप्रचारः, तथा लौहसुवर्णपिण्डयोः । लौहसुवर्णयोः परमाणूनामपि तदारम्भकाणुविशेषन्यूनाधिक्येन लौहपरमाण्वपेक्षया सुवर्णपरमाण्वाधिक्येनाकर्षणप्रचारः । एवं द्रव्याणां प्रत्येकं परमाणुसंख्याभेदेनाकर्षणप्रचारः । इत्थम्भूतेनाकर्षणप्रचारेण धरित्र्या सर्वाणि वस्तूनि समाश्लिष्यन्ते । स चाकर्षणव्यापारः कर्मपदार्थः । स एव स्वपरिमाणन्यूनाधिक्येन गुरुत्वलघुत्वनामभ्यामभिधीयते व्यवहारिकैर्न तु तदतिरिक्तं गुरुत्वं नाम कश्चिद् गुणो वा धर्मो वास्ति ।

अधऊर्ध्वयोश्चात्र जगत्यनियतत्वादधःपतनहेतुर्धर्मविशेषो गुणविशेषो वा गुरुत्वमिति नाभ्युपेतुं शक्यते । या दिगस्माभिरूर्ध्वतया व्यवह्रियते, सैव पुना रात्रावधो भवति या

चाधः सा पुनरूर्ध्वं, धरित्र्या रथचक्रवद् भ्रमणात्। तस्माद् यदा यस्यां शिरः प्रदेशस्तिष्ठति सैवोर्ध्वदिक् यस्यां पुनः पादौ साधः। तस्य चाधारभूताया धरण्याः परिवर्त्तनात् परिवर्त्तनं भवतीति नास्ति नियतमूर्ध्वमधो वा किञ्चित्। यदि नामाध ऊर्ध्वं वा नियतमभविष्यत्, अधःपतनकारणगुरुत्ववन्ति च पार्थिवादीनि सर्वाणि द्रव्याण्यभविष्यन् तर्हि चन्द्रपृथिवीसूर्य्यादयः सर्वे एव पिण्डा न स्वस्वकक्षेषु स्थातुं प्राभविष्यन्। अपतिष्यंश्च निरन्तरमधोदिशि अधःपिण्डेषु वा निपतन्ति परस्परेण व्याहनिष्यन्त, व्याहन्यमानानि च समचूर्णयिष्यन्त, तथा च जगल्लोपः प्रासक्ष्यत। तस्मान्नास्त्यध ऊर्ध्वं वा नियतं, नास्त्यधःपतनकारणं धर्मविशेषो गुणविशेषो वा गुरुत्वं नाम वस्त्वन्तरम्। तदेतदाह,—महामहोपाध्यायो भास्कराचार्य्यः—"आकृष्टशक्तिश्च मही तया यदाकृष्यते, तत् पततीव भातीति।" तथा आचार्य्यभट्टोऽपि—भपञ्जरस्थिरा भूरेवावृत्यावृत्योदयास्तमयौ सम्पादयति प्रतिदैवसिकाविति।"

ननु यदि सर्वाण्येव पार्थिवादीनि वस्तूनि पृथिव्या आकृष्यन्त इति वक्तव्यं तथा च सति यथा लोष्ट्रादीनि पृथिव्या समाकृष्य समाश्लिष्यन्ते, तथा चन्द्रादिपिण्डानामपि समाश्लेषः प्रसज्यते। एवमपि परस्परसंघर्षणेन जगल्लोपप्रसंग इति चेन्न, अन्यग्रहाणां प्रत्याकर्षणसद्भावात् निजानामपि

नेषां विक्षेपशक्तिप्रभावाच्च । सत्यं यथा लोष्ट्रादीनि पृथिव्या समाकृष्यन्ते, तथा चन्द्रादिपिण्डा अपि, तथा बुधशुक्रादयो ग्रहाश्च । तथापि तानि न पृथिवी समाश्लेष्टुं शक्नोति, सूर्य्य-नक्षत्रादिभिरप्याकृष्यमाणत्वात् । यथा हि पृथिवी चन्द्रादि-पिण्डानाकर्षति, तथाऽन्येऽपि ग्रहाः, तथा सूर्य्यश्च, नक्षत्रा-णि च । तानपि पुनः पृथिवी च । एवं परस्पराकर्षणसद्भा-वेऽपि बहूनां प्रतिकूलाकर्षणसद्भावान्न परस्परसमाश्लेषः सम्भवति । विक्षेपशक्तिश्च चन्द्रपृथिव्यादिषु सर्वेषु पिण्डेषु यथासम्भवं वर्त्तते । तया शक्त्या यथा पृथिवी सूर्य्यसम्बन्धं छित्त्वा बुधशुक्रादिग्रहवद् दूरतोऽपसर्त्तुं विचेष्टते, तथा चन्द्रो-ल्कापिण्डादयोऽपि पृथिवीसम्भूताः पृथिव्या विच्छिद्यमानाः पृथिवीसम्बन्धं छित्त्वा दूरात् सुदूरमपसर्त्तुं चेष्टन्ते । न च पृथिव्याकर्षणं तां शक्तिं पराकर्त्तुं प्रभवति, सा वा शक्तिस्तदाक-र्षणम् । कदाचित्तु कियत्कालपर्य्यन्तमितरेतरशक्तिं कियन्मा-त्रमभिभवति ; तेन कदाचित् ते पृथिव्याः सन्निकृष्टतरा भवन्ति, कदाचिद् विप्रकृष्टतराः, न तु कतरस्या अपि शक्तेः सम्यक् परिभवः सम्पद्यते येन पृथिव्याः समाश्लेषोऽशेषतो वा दूरापसरणं भवति एवं आकर्षणप्रतिकर्षणविक्षेपाणां परस्परसामञ्जस्येन सूर्य्यपिण्डमभितः पृथिव्या इव पृथिवी-पिण्डमभितश्चन्द्रोल्कादीनां भ्रमणरूपगतिविशेषः कक्षापर-नामा तत्पथश्च निष्पद्यते । येन चान्द्रमासादयो निर्वर्त्तन्त इति न पृथिव्यास्तेषां समाश्लेषप्रसङ्गः ।

नन्वेवं चेत् लोष्ट्राद्योऽपि तथैवासतां, भ्रमन्तु च तथैव ; तथा च सति पृथिव्याः समाश्लेषबाधः प्रसज्येत इति चेन्न, तेषां तथाभूतविक्षेपशक्तेरभावात् । अन्यग्रहादिप्रत्याकर्षणस्य सतोऽपि पृथिव्याः सन्निकृष्टतया तदाकर्षणेनैव बलीयसा परिभूतत्वेनाकर्मण्यत्वात् । तदेतल्लक्षणकमाकर्षणं पृथिव्या माध्याकर्षणमित्याख्यायते विपश्चिद्भिः । एतदेव संलक्ष्य भास्करादिभिराचार्य्यैराकृष्टशक्तिश्च मही तया यदाकृष्यत इत्यादिकमुक्तम् । तस्मान्नास्ति आकर्षणक्रियातो गुरुत्वं नाम वस्त्वन्तरं, येन लिङ्गेन रूपादिव्यतिरिक्तस्तदाश्रयभूतद्रव्यविशेषोऽनुमीयेत ।

अथ मास्तु गुरुत्वं नाम लिङ्गं तथाभूताकर्षणक्रियैव लिङ्गं स्यात् ? न हि गन्धादिपञ्चानां प्रत्येकमाकर्षणं दृश्यते । प्रत्येकमविद्यमानस्य च धर्मस्य समूहेऽसम्भवेन गन्धादिपञ्चानां समूहे तदाधारत्वकल्पनायामाकर्षणक्रियाया असम्भवादाकर्षणक्रियाधारत्वेन गन्धादीनां प्रत्येकं तत्समूहाद्वा वस्त्वन्तरमनुमीयते । तस्मान्न रूपादिमात्रं द्रव्यमिति चेन्न, गन्धादिष्वप्याकर्षणक्रियासद्भावात् । शैत्यवत्सु हि मानवादिदेहेष्वालोकापरनामतापजिघृक्षाऽनुभूयते । तिमिराच्छन्ने च देशे आलोकरूपेणापि जिघृक्षा प्रतीयते । जिघृक्षा चात्मसात्करणेच्छा तच्चेष्टा वा । सा पुनस्तत्त्वविचारेण नाकर्षणतो भिद्यते । तदाकर्षणं देहस्य तद्गतनयनेन्द्रियस्य वा अस्तु । तद्व्याप्तिः पुनरालोकेष्वस्त्येव, तथा पृथिव्यामपि सूर्य्याद्या-

लोकजिघृक्षा प्रमाणमधिरोहति। पृथिव्या हि सूर्याद्यालोकः प्रगृह्य स्वात्मनि विलाप्यते, सलिलकाचादिरूपाञ्च प्रतिप्रसार्यते। तस्मादस्मिन रूपेष्वाकर्षणव्याप्यता प्रतिप्रसारणव्याप्यता च। अनयैव रीत्या वर्णातिरिक्तेष्वपि चतुर्षु गन्धादिष्वाकर्षणव्याप्यता प्रमीयत इति न गन्धादीनां प्रत्येकं तत्समूहे वाकर्षणक्रियाभावः। तच्चाकर्षणं पृथिव्या बाह्यस्य वा वस्तुनः रूपादिकणिकासु प्रत्येकस्मिन समतयैव वर्त्तमानं तेषां घनताप्रभेदेन लौहसीसकसुवर्णनामधेयेषु रूपादिसमूहेषु पिण्डभेदेषु न्यूनाधिक्ये भजते।

तथाहि—लौहे तावत् सुवर्णापेक्षया रूपादिकणिकानां विरलसंस्थानं, सुवर्णे च तदपेक्षया घनतरमित्युभयोः पिण्डयोर्व्यासादिभिः साम्येऽपि सुवर्णे रूपादिकणिकानां संख्याधिक्यात् न्यूनत्वाच्च लौहे, लौहापेक्षया सुवर्णे आकर्षणाधिक्यं, लौहे च न्यूनत्वं व्यवह्रियते। कणिकासु पुनर्लौहस्य सुवर्णस्य वा प्रत्येकस्मिन् सममेवाकर्षणं विद्यते। एवमन्यत्रापि यथादृष्टं सिद्धान्तयितव्यमिति। नाकर्षणं रूपादिव्यतिरिक्तस्य तदाधारभूतस्य वस्तुनो लिङ्गत्वमावहति।

नन्वेवमपि काठिन्यावरकत्वावरोधकत्वादीनि लिङ्गानि भवेयुः। न हि रूपादिषु काठिन्यादिसम्भवः। काठिन्यं धर्मो द्रव्येषु वर्त्तमानो द्रव्यान्तरस्याघातवैशिष्ट्यं जनयन् चूर्णादिरूपेण तस्य पिण्डभङ्गं सम्पादयति। सूर्य्याद्यालोकेषु

तु रूपापरनामधेयेषु गतिमत्सु न कठिनत्वमनुभूयते, न वाऽघातवैशिष्ट्यकरणं, न वा चूर्णाद्याकारेण भञ्जनम् एवं शिष्टेष्वपि चतुर्ष्ववगम्यते, तथाऽवरकत्वमपि । वस्त्रादीनि हि तद्बाह्यानां वस्तूनामावरकतया उपलभ्यन्ते ; न च प्रकाशरूपस्यालोकस्य तत्सम्भवः । तथावरोधकत्वमपि भित्त्यादिष्वेव दृश्यते, न तु रूपादिषु । भित्तिदेहल्यादिषु हि सत्सु न कश्चिद् बहिर्गन्तुं शक्नोति बहिःस्थो वा तदन्तरालम् । अवरुन्धन्ति हि भित्त्यादयः सर्वान् स्वजातिपदार्थान् । नायमवरोधव्यापारस्तत् फलं वा शक्यमालोकेषु कल्पयितुम् । आलोका हि प्रदीपादितः प्रसृत्य काचादिपदार्थान् निर्भिद्य प्रचरति, न तु प्रदीपादिपिण्डः । तस्मात् रोध्यत्वं रोधकत्वं वा नालोकस्य धर्मः । एवं गन्धादीनामप्येतैः लिङ्गैस्तदाधारभूतं वस्त्वन्तरमनुमीयत इति चेन्न, रूपादिष्वेव कठिनत्वादिसद्भावात् । कठिनत्वं नाम तीव्रप्रतिघातसामर्थ्यविशेषः । तच्च रूपेषु प्रत्यक्षमवगम्यते । लोहितश्यामलनीलादिषु हि रूपेषु लोहितरूपं तीव्रतराघातजनकम् । तद्धि सूर्यादितः प्रसृतं नयनेन्द्रियस्य भूतात्मकं रूपं तीव्रतरमाहन्ति, येन स्वल्पकालादेव नयनं दर्शनासमर्थं भवति । तरुपल्लवादीनां श्यामलरूपन्तु मृदु मृद्वेव नयनमामृशति, येन नयनं सुप्रसन्नं सत् नन्दति । ऊर्ध्वाकाशस्थितनीलरूपं पुनस्ततोऽपि मृदुतरमामृशति, येन तद्दर्शने नयनं विश्रामानन्दमिवानुभवतीति सर्वेषां प्रत्यक्षसिद्धम् । तस्मादस्ति रूपाणामाघातकत्वम् । यदेतल्लोहितवर्णस्य

नयनेन्द्रियकर्मकमाहननं तदेवान्यदृष्ट्या प्रत्याहननतया पर्यवस्यति । नयनेन्द्रियं हि प्रत्यासन्नं लोहितरूपमात्मसात् कर्तुं प्रथमं समाक्रामति । ततस्तन्नयनमाहन्तीति प्रत्याहननरूपता चास्य भवति । तस्मादस्ति प्रत्याघातसामर्थ्यरूपं काठिन्यं रूपेषु गन्धादिष्वप्येवमेव बोध्यम् ।

स्पष्टञ्चैतत् महाभारते शान्तिपर्वण्यभिहितम् । तच्च प्राक् प्रदर्शितम् ।

तदेतत् काठिन्यं नाकर्षणवद् रूपादिकणिकानां न्यूनाधिक्येऽनुपतति, किन्तु तासां संयोगविशेषमपेक्षते । यत्र तु तादृशसंयोगविशेषो न भवति, तत्राधिक्येऽपि कणिकानां न काठिन्याधिक्यं, यत्र तु तादृशसंयोगविशेषो वर्त्तते तत्राल्पत्वेऽपि कणिकानामधिकतरं काठिन्यं दृश्यते । पारदादिषु त्रपुलौहविशेषापेक्षया कणिकाधिक्येऽपि संयोगविशेषसद्भावात् पारदाद्यपेक्षया त्रप्वादिष्वेव काठिन्याधिक्यं, तादृशसंयोगासद्भावात्तु पारदादिषु तदपेक्षया स्वल्पीयः काठिन्यं, तथा सलिलकरकयोः । सलिले कणिकाधिक्येऽपि तादृशसंयोगविशेषाभावात् काठिन्यं स्वल्पतरं, सद्भावात्तु करकायां काठिन्याधिक्यमेवमन्यत्रापि वेदितव्यम् । तस्मान्न काठिन्यं रूपादिव्यतिरिक्तस्य तदाश्रयस्य कस्यचिद्धेतुत्वमावहति ।

तथाऽऽवरकत्वमपि रूपादीनामेव व्यापारविशेषः । येनान्तरालीकृतरूपादिव्यापारमभिभूय सम्मुखस्थं रूपादिकं नय-

नेन्द्रियमुद्बोधयितुं प्रभवति। तस्मान्न तदाश्रयस्य वस्त्वन्तरस्य लिङ्गत्वमर्हति। यदा हि दृश्यमानं किञ्चिद् वस्तु वस्त्रादिष्वपिदधत्सु नास्माभिर्दृश्यते, तदास्माकं नयनेन्द्रियेषु तस्य दृश्यस्य वर्णमालाऽऽगतिर्व्यापारश्च नैर्वस्त्रादिभिः सम्यक् पराक्रियते, किन्तु सत्यामेव तदागत्यां सति च तदीयव्यापारेऽपिधायकवस्त्रादिवर्णमालाया बलवत्त्वात् सैव नयनेन्द्रियमधिकरोति। दुर्बला चान्तरालीकृतवर्णमाला तद्व्यापारश्च संस्पृशन्त्यपि नयनेन्द्रियं न पराभवितुं शक्नोति, ततो ज्ञायमानापि सा अज्ञायमानेवाभाति। वस्त्रादीनान्तु वर्णमाला अस्माकमनुव्यवसायमादधाति। यदेतद् वस्त्रादिवर्णमालया अन्तरालीकृतवर्णमालायाः पराभवनं तत् तस्या आवरकत्वं भ्रमः। यदात्वन्तरालीकृतवर्णमालैवातिबलायसी भवति, तदा सैवापिधानवर्णमालां पराभूय नयनेन्द्रियमधिकरोति। तेन सैवानुव्यवसायमादधाति, न तु विज्ञायमानाप्यपिधानवर्णमाला। तस्मात् सत्यप्यपिधाने न तदावरकत्वं सम्पद्यते। किञ्चित्प्रतिकूलत्वन्तु कल्प्यत एव। यथा प्रचण्डमार्त्तण्डमरीचिमाला नयनेन्द्रियं संस्पृशन्त्यो निमीलितेऽपि नयने दृश्यन्त एव। अक्षिपुटौ तु तासां सम्यग्व्यापारे कथञ्चित् प्रतिकूलतामात्रं जनयतः, बलवत्तरा हि तत्र मरीचिमालाः। यदा पुनरालोकमालाया स्ततोऽपि बलाधिक्यं तदा तु त्वगादीनि न किमपि प्रतिकूलयितुं शक्नुवन्ति। दृश्यते हि विद्युदालोकविशेषेषु प्रज्वलितेषु अपिधायकत्वङ्मांसमज्जारुधिरा-

दीनां तत्तिरस्करणव्यापारः सर्वथैव पराभूतः । तेन त्वङ्-मांसादीनि तदा नाल्पमपि दृश्यन्ते, आलोकमाला तु चक्षुषि सम्यक् प्रकाशते । प्रदीपाद्यालोकेषु पुनर्वर्त्तमानेषु प्रागुक्तरीत्या पिधायकत्वङ्मांसादिवर्णमालैव दृश्यते, न तु प्रदीपालोक-मालाः । तस्माद्बलीयसां रूपस्य दुर्बलरूपप्रभुत्वखर्वीकरण-मात्रमेवावरकत्वं न च तदाधारस्य वस्त्वन्तरस्य तथात्वमिति सिद्धमतो नावरकत्वलिङ्गेन रूपव्यतिरिक्तस्तदाधारोऽनुमातुं शक्यते । इत्थमेव शब्दादीनामप्यावरकत्वात् तदाधारवस्त्वन्त-रानुमाने आवरकत्वस्य लिङ्गत्वं पराकृतम् । एवमवरोधकत्व-मपि रूपादीनामेव धर्मः । अवरोधकत्वं स्वजातीयस्य विजा-तीयस्य वान्यस्य गतेरवस्थिते र्वा बाधकत्वम् । तत् पुनारूपा-दिषु प्रत्येकं प्रत्यक्षमुपलभ्यते । न हि लोहिते रूपेऽवतिष्ठमाने तत्र नीलं पीतमपि वा रूपं संतिष्ठमानं दृश्यते । न वा लोहितं निर्भिद्य नीलं पीतं वा क्वचित् समागच्छदुपलभ्यते, पृथक् पृथगेव हि लोहितादीनि सर्वाणि रूपाणि समुद्भासन्ते । इन्द्र-धनुरवलोक्यतां प्रदीपादिसन्निधौ सौरालोकप्रचारे वा देशे त्रिकोणः काचदण्डः संस्थाप्यतां तेनैतत् प्रत्ययमावहेत । इन्द्रधनुर्नाम वाष्पाकारजलकणिकासमूहरूपे मेघे प्राकृतसमा-वेशेन सौरालोकमालाप्रस्तारः । तत्र सौरेभ्यो रूपेभ्यः परस्तात् बहिःस्थो वा अन्यरूपेणानवच्छिन्नं केवलं लोहितं रूपं दृश्येत । तद्गर्भतश्च यथाक्रममन्यरूपेणासंभिन्नतया केवलमेकैकं रूपमी-क्ष्येत, तेनैतत् प्रतीयते । अन्येनासंभिन्नान्येव रूपाणि सूर्य्य-

पिण्डात् परितः प्रसर्पन्ति। तथा तत्किरणान्वितदेशे सप्रदीपदेशे वा त्रिकोणकाचदण्डे संस्थापिते भूमौ दृश्यते। तस्माद् रूपं रूपान्तरमवरुणद्धि, स्वस्थाने चान्यस्यावस्थानं बाधत इति प्रतीयते। यदि नाम स्वयमवतिष्ठमानमेव तत्-समानावच्छेदेनान्यमपि तत्रावस्थापयितुमुत्सहते, तदा तेना-स्य तादात्म्यसम्बन्धः समापतति। तादात्म्याख्याभिन्नता। तथा च तदेव तत् स्यात्। लोहितमेव नीलं स्यात्, नीलमेव पीतं स्यात्, न च तथा कल्पयितुं शक्यत इत्यनिच्छयापि लोहितादिवर्णानां पृथक् समावेशो वक्तव्यः। यच्च प्रदीपाद्या-लोकस्य सौरालोकस्य वा शुक्लभास्वरत्वादिकं दृश्यते, तत् पुनर्बहूनां रूपाणां संयोगावस्था, नत्वेकस्य रूपस्याकारः। बहूनि हि रूपाणि प्रदीपादितो युगपत् प्रसर्पन्ति। तानि पुनः पर्य्यायेणापि नयनेन्द्रियं स्पृशन्ति, क्षणपरम्पराणां परस्पर-भेदाग्रहाद् युगपदेव प्राप्नुवन्तीति प्रतीयते। तेन बहूनां वर्णानां समाहारश्चाभाति, ततश्च शुक्लभास्वरत्वादिकम्। न तु लोहितमेव तैः समानाधिकरणं सदेकीभूय शुक्लात्मना श्याम-लात्मना नीलात्मना वाभिसम्पद्य शुक्लभास्वरत्वादिना संव-र्त्तते। तस्मान्न किञ्चन रूपं रूपान्तरं स्वाधिकरणतावच्छेदेन कुत्रचिदवतिष्ठते किन्तु परस्परव्यवच्छेदेनेति सिद्धम्।

इत्थमेव गन्धादीनामपि प्रचारावस्थानादिनियमो वेदि-तव्यः। तस्माद् रूपादीनामेव परस्परावरोधकत्वं धर्मः।

तच्च प्रत्येकस्मिन् समूहे च समानवर्त्तमानं सजातीयं विजातीयं वान्यद्वरुणद्धि ।

तत्र प्रत्येकं रूपादीनामवरोधकत्वं त्रिशिष्टानुसन्धित्साध्यतया साधारणत्वान्न साधारणानां ज्ञानगोचरः । समूहस्य त्ववरोधकत्वं हालिकपालिकादयोऽपि पश्यन्ति । देहलीभित्त्यादीनां हि प्रत्येकं यथासम्भवं गन्धरसरूपस्पर्शशब्दानां समूहः । तेषां सर्व एव समूहान्तरमवरुन्धन्तीति सर्वेषां प्रत्यक्षविषयः । तस्मान्नावरोधकत्वं रूपाद्याश्रयस्य वस्त्वन्तरस्य लिङ्गत्वेन कल्पयितुं शक्यते । अनयैव रीत्या स्थितिगतिचूर्णत्वादीनि निरस्यन्ते । तस्मान्नास्ति रूपाद्याश्रयो वस्त्वन्तरम् । एतेषामेव पञ्चानां यथासम्भवं द्वित्रिचतुर्णां वा समूहः पिण्डादिरूपः स्थूलभूतमित्याख्यायते । तस्मादेतत्समूह एव पृथिवीचन्द्रसूर्य्यादिग्रहोपग्रहनक्षत्रादीनां मूर्त्तयः । तदन्तर्गतानाञ्च प्रस्रवणकूपादिसागरान्तानां जलाशयानां तथा सैकतादितो द्वीपोपद्वीपान्तानां भूमीनां तदन्तर्गतानाञ्चोपलादितो हिमालयान्तानां पाषाणानां तथा सर्वप्रकाराणां समीरणानां तदन्तर्गतानां च मनुष्यकीटपतङ्गसरीसृपतरुवीरुद्गुल्मादिप्राणिनामप्राणिनां च काञ्चनरजतताम्रादिधातूनामुपधातूनां च गन्धकादीनां मूर्त्तयः तथोद्भिज्जजातानां सर्वशस्यानामाम्रपनसादिफलानाञ्च मूर्त्तयः । तथा मनुष्यादिप्राणिरचितानां शय्यासनवसनभित्तिदेहलीप्रासादघटपटकटादीनां मूर्त्तयः ।

एवञ्च सति सर्वेषामेषां वस्तूनां न्यायतो गन्धरसरूपस्पर्श-शब्दा इति पञ्चैव नामधेयानि वक्तव्यानि, किन्तु तर्हि सर्व-व्यवहारलोपप्रसङ्गः। बहुसहस्राणि हि वस्तूनि लोकव्यवहारेषु सततं प्रयुज्यन्ते। न च पृथक् पृथङ् नामधेयमन्तरेण पृथक् पृथग् व्यवहारः प्रवर्त्तितुं सम्भवन्ति। नामान्तरं हि वस्तुनो वस्त्वन्तरत्वं व्यवच्छिनत्ति। तस्मात् सत्स्वपि रूपादिसमूह-मात्रेषु वस्तुषु तद्घटकगन्धादीनां गुणप्रधानतया न्यूनाधिकतया च समावेशभेदात् सर्वव्यवहारसिद्ध्यर्थं घटपटमठादिरूपाणि पृथक् पृथङ् नामधेयानि प्रवर्त्तितानि। तेषां च विशेषज्ञानार्थं गुणप्रधानादिभावेनावस्थितानां गन्धरसादीनां विशेषणत्वेन व्यवहार आवश्यकः। तेन घटीयं रूपं पटीयं रूपं पार्थिवं रूपं जलीयं रूपमाग्नेयं रूपं रसालीयो गन्धः, रसालीयो रसः, पनसीयो गन्धः पनसीयो रस इत्येवमादीनां गन्धादिसमूहेष्वेव वस्तुषु धर्मधर्मितया विशेष्यविशेषणतया च व्यवहारः प्रवृत्तः, एकस्मिन्नेवाधाराधेयभावश्च। समूहतदंशयोश्च भेदं परिकल्प्य घटस्य रूपमात्रस्य गन्धः, पनसस्य इत्येवमादिभेदो व्यवहार-सिद्ध्यर्थं परिकल्पितः। तत्र घटादयो गन्धरसादीनां समूहाः, गन्धादयश्च तदंशा इति। एवं तत्त्वतो धर्मधर्मिणोरभेदेऽपि व्यवहर्तॄणां दृष्टिभेदेन भेदोऽपि कल्पयितुं शक्यत इति धर्म-धर्मिणो नात्यन्तभेदश्चेति सिद्धान्तः पर्य्यवस्यति। एतच्चाग्रत उपरिष्टादुपपादयिष्यते। तथा च सविशेषणा गन्धरसरूपस्प-र्शशब्दा एव क्षित्यादिभूतानीति पर्य्यवसितम्। तदेतद् भगवता

पातञ्जलभाष्यकारेणोक्तम् । "तत्र पार्थिवाद्याः शब्दादयो विशेषाः सहाकारादिभिर्धर्म्मैः स्थूलशब्देन परिभाषिताः । एतद्भूतानां प्रथमरूपमिति ।" एकस्मिन्नेव धर्मधर्मितया व्यपदेशेन तु तद्भवन्ति तानीति निष्कर्षः । तत्र शब्दमात्रमेवाकाशस्य रूपं कार्य्यकारणभावाच्चान्येषां चतुर्णां कारणगुणानुप्रवेशेन यथाक्रमं द्वित्रिचतुःपंचात्मकता । तथा च सति वायुराकाशकार्य्यत्वात् शब्दस्पर्शात्मकः । तत्कार्यत्वात् तेजः शब्दस्पर्शरूपात्मकं, जलं च तत्कार्यत्वात् शब्दस्पर्शरूपरसात्मकं, क्षितिस्तत्कार्य्यत्वात् शब्दस्पर्शरूपरसगन्धात्मिकेति ।

त एते शब्दादय इन्द्रियानुगतसमुद्भूततया भूतानां लक्षणान्यपि सन्तो न सर्वथा भूतानां स्वरूपाणि, शब्दादिरूपाणामनुद्भूतावपि भूतत्वासद्भावात् । तस्मादेतानि भूतानां स्थूलरूपाणीत्याचक्षते, तत एव प्रथमानि च । येन पुनारूपेणानुद्भूतेऽपि शब्दादिरूपे आकाशादीन्यवतिष्ठन्ते, तदेषां द्वितीयरूपेण परिकल्प्य स्वरूपशब्देनाभिधीयन्ते । तत् पुनर्नभसो व्याप्तिमात्रं, समीरणस्य प्रणमनं, तेजस उष्णत्वं, जलस्य तु स्नेहः, क्षितेः काठिन्यम् । तत्राकाशस्य शब्दरूपत्वेऽपि तस्य शब्दस्य सर्वशब्दकारणत्वादविशेषतया प्रत्यक्षासम्भवेन नभसः स्थूलं रूपं नामत एव भिद्यते, वस्तुगत्या तु न स्वरूपतः पृथक्त्वेन निर्देष्टुं शक्यते । अन्येषान्तु स्पष्टमेव पृथक्त्वमनुभूयत इति वास्तविक एव स्थूलस्वरूपव्यवहारः ।

इह हि इन्द्रियाण्येव शब्दादीनि रूपाणि समुद्भासयन्तीत्यनुभूयते। तस्मादभ्यासतो वा इन्द्रियशक्तीनां स्वभावतो वा सर्वाणि रूपाण्याजहति भूतानां स्वरूपाण्येव शब्दाद्याकारेणानुभूयन्त इति वक्तव्यम् । यथा चैतत् सम्भवति तदुच्यते ।

नभसस्तावत् सर्वतो गतिमात्रं स्वरूपमित्यभिहितं, सर्वतो गतिः सर्वत्र व्याप्तिः । सर्वेषां भूतानां प्राप्तिः । सर्वैः सहानवच्छिन्नसम्बन्धः । अच्छिद्रतया सर्वेषां भूतानां बाह्याभ्यन्तरसंस्थानमित्यायातम् । तथा च पारिमाण्डल्यवतां परमाणूनामपि बाह्यतोऽभ्यन्तरतश्च समानभावेनाकाशस्यावस्थितिरवगम्यते ।

यदि नाम परमाणूनां बाह्यत एवाकाशस्य संस्थितिरिष्यते, नान्तरतस्तदा तस्य भूमत्वं निपीड्यते, सच्छिद्रत्वं सावयवत्वं जन्यत्वञ्चापतति, तथा क्षुद्रत्वं च । इह तावज्जगति न तिलमात्रं स्थानं परमाणुशून्यं प्रमाणतोऽवगम्यते । स्थूलसूक्ष्मप्राणिदेहरूपेणाप्राणिरूपेण वा सर्वत्रैव परस्परमिश्रिता अमिश्रिता वा केवलाः पार्थिवा जलीया स्तैजसा वायवीया वा परमाणवो नरीनृत्यन्ते । तस्मात् तेषां बाह्यप्रदेशमात्रं आकाशस्य सद्भावे पिण्डाद्यपेक्षया स्वल्पीयस्येवाकाशस्य व्यक्तिरभ्युपेतव्या ; अनन्तपरमाणुभिरनन्तविवरीकृता, शकलीकृता, अनेकीकृता, तेषां परस्परतो विभिन्नीकृता च भवति । जन्यत्वं च तत एवापतति, विनाशित्वं च । परमाणुशून्ये हि देशे

तत्परक्षणमेवोपस्थितेषु परमाणुषु, तत्राकाशस्य सम्भवाद् विनाशोऽभ्युपेयो यस्माच्च देशात् तेषां परमाणूनां तत्रागतिस्त-स्मिन् देशे पुनराकाशसद्भावाभ्युपगमात् तस्योत्पत्तिरेवा-पतति । न चैवं केनचित् शास्त्रेण विदुषा वा केनचिदभ्युपगतं तस्मान् महानयमनर्थपात इत्यगत्यैवाकाशस्य परमाणूनां बाह्याभ्यन्तरसंस्थानमभ्युपेयम् ।

ननु मूर्त्तिमतामेवायं नियमः, यदेकस्मिन् देशे एकस्यां मूर्त्तौ सत्यामपरमूर्त्तेः संस्थानं नोपपद्यते । तादात्म्यं हि तदो-भयोः स्यात्, न तु मूर्त्तामूर्त्तयोरेवं नियमः । सत्यामपि मूर्त्तौ दिगात्मशक्त्यादीनां तत्र सद्भावात् । अधिकरणत्वञ्चा-धिकरणत्वान्तरेण विरुध्यते । न तु दिगात्मादीनामाधेयत्व-मस्ति, येन तन्निरूपकाधिकरणत्वेन मूर्त्तेरधिकरणत्वं बाध्येत । त एव हि सर्वमूर्त्तसंयोगानुयोगिनः । न वा परमाणूनां कश्चि-द्बाह्यप्रदेशोऽस्ति येन तत्राकाशस्य परमाणूनां वाधिकरणत्वं परिकल्प्येत । मूर्त्तावेव देशत्वाधिकरणत्वादिव्यवहारः, न तु शून्ये । परमाणुबाह्यतस्तु शून्यं वाकाशं वा स्यात्, तत्र किं कस्याधिकरणं भवेत् । न ह्याकाशमेवाकाशस्याधिकरणत्वेन शक्यं कल्पयितुम् । तस्मान्न सम्भवत्याकाशस्याधिकरणत्वमा-धेयत्वं वा । परमाणूनां च नित्यनिरवयवत्वान् नाभ्यन्तरप्रदेशः सम्भवति, न वा तस्याधिकरणत्वं, तस्मात् प्रलाप इवायं वागा-रम्भ आभातीति चेन्न, भ्रमास्कन्दितत्वात् । गन्धादिधर्म-मात्रतया हि क्षित्यादिमूर्त्तयो निरूपिताः । गन्धादीनां च काठि-

न्यावरकत्वादीनि प्रमाणतः प्रदर्शितानीत्यतो भवत्परिकल्पित-मूर्तेरसम्भवात्, तद्वतामेव तथाभूतस्यान्यस्य विरोधित्वा-सम्भवः । गन्धादीनां च पञ्चानां परस्परविरोधित्वे सिद्धे शब्दात्मकेनाकाशेनान्येषां विरोधित्वं सिद्धं, परमाणूनां चाभ्यन्तरदेशः प्रागेव प्रतिपादितः । बाह्यप्रदेशत्वेन च परमा-णूनां परस्परव्यवच्छेदकशून्यमात्रं विवक्षितम् । शून्यमेव हि वस्तु लक्षितमाधारभावं भजते । यथा यत्र पृथिव्यस्ति न तत्र चन्द्रमाः, अत्र ब्रह्माण्डान्तर्गतबुधशुक्रादिग्रहरूपवस्तुभिरन्त-रालीकृतं शून्यं लक्षयित्वा प्रदेशत्वेन परिकल्प्य पृथिवीचन्द्र-मसोश्चाधिकरणतया निर्दिश्य तयोर्विरोधः प्रदर्श्यते । अत्र शून्यत्वं नेति नेतीत्यादि प्रतिषेधमात्रविषयत्वं, तत्राधिकरणत्वं सम्बन्धान्तरासम्भवात् स्वरूपसम्बन्धेन बोद्धव्यम् । स च वृत्तिनियामक एवेत्यभ्युपेयम् । एवमेवाकाशाधेयताकाधिकर-णत्वमभ्युपेत्य विरोधः प्रदर्शितः । न त्वाकाशस्य किञ्चिद्भूता-न्तरवृत्त्यधिकरणत्वमस्माभिरभ्युपेयते ।

यद्वा नभसोऽप्यस्माभिर्जन्यत्वाभ्युपगमात् तदुपादानं वक्ष्यमाणमहंकारतत्त्वमेव तदधिकरणत्वेन संगृह्य तत्राकाश-स्यान्यैर्भूतैः परमाण्वादिरूपैर्विरोधो वेदितव्यः । तस्मिन् हि यत्प्रदेशे आकाशो वर्तते, न तत्र परमाण्वादीनां वृत्तिस-म्भवः । परमाणुमति च देशे नाकाशस्येति परस्परविरोध उत्पन्नः । तस्मादत्रभवतां विप्रतिपत्तिभ्रान्त्याघ्रातत्वादकि-ञ्चित्करी । नन्वाकाशस्य जन्यत्वविनाशित्वे पश्यद्भिर्भवद्भिः

कथं ते प्रसक्ततया आपात्येत इति चेत् उच्यते, सत्यमाकाशस्य जन्यत्वविनाशित्वे अभ्युपेयेतेऽस्माभिः, किन्तु न घटपटादिवदुत्पत्तिविनाशौ। महाप्रलयावसाने उत्पन्नस्य नभसः पुनर्महाप्रलयकाल एव विनाशोऽभ्युपेयत इत्याप्रलयस्थायित्वमापेक्षिकं नित्यत्वमप्यभ्युपेयते। श्रुतिर्हि,—"तस्माद्वा एतस्मादाकाशः सम्भूतः" इत्यादिनाकाशस्यानित्यतां दर्शयित्वा पुनराकाशवत् सर्वगतश्च नित्य इत्यादिना सर्वव्याप्तिनित्यत्वे ब्रवीति, तथैव चोपपद्यते। तस्मात् तस्याव्यापकत्वे अनन्तपरमाणुगतागतिभ्यां प्रागुक्तरीत्या सकलानामुत्पत्तिविनाशप्रसङ्ग आपातितः। दिक्कालात्मनाञ्च भवदभिमतानामसिद्धत्वाद् दृष्टान्तत्वासिद्धिः। अथ शक्तिश्चेत् कापि व्यापिका परिकल्प्येत तर्ह्याकाशस्य या गतिस्तस्या अपि तथैव भवितव्यं, आकाशस्य तु सर्वप्राप्तिः सर्वशास्त्रप्रसिद्धा सर्वविद्वदभिमता च। अस्य चान्यप्रकारमवकाशदातृत्वमिति। तदेतत् सपरिकरं प्राक् संक्षेपतोऽवोचाम; इदानीं विशेषेण विचार्य्यते।

अत्र परमाणूनामनित्यत्वजन्यत्वे रूपादिकणिकामात्रता च विस्तरत एव प्राक् प्रदर्शिता। इदानीमाकाशस्य तदुपादानमात्रत्वमेव विशेषतश्चिन्त्यते। तथाहि,—प्रदर्शिता, सर्वप्राप्तिस्तावदाकाशस्य। सा चान्यथानुपपत्त्या घटादिष्विव मृद उपादानभावेनैवाभ्युपेया यथा मृद् उपादानतया घटं सर्वात्मना प्राप्नोति; न हि मृद्व्यतिरेकेण घटस्य कश्चित् परमा-

णुरप्यवस्थातुं शक्नोति ; सर्वे एवावयवा घटस्य मृण्मयाः, घटोऽपि मृण्मय एव । तद्वत् सर्वाणि भूतान्याकाशमयानि आपरमाणुभ्य आ वा रूपादिकणिकाभ्यः । तथा च सति घटादीनां मृत्तादात्म्यवत् सर्वेषां भूतानामाकाशतादात्म्यमवगम्यते । सति च तादात्म्ये उपादानोपादेयतया यथा घटमृदोः कार्य्यकारणसम्बन्धस्तथान्यभूतैः सहाकाशस्य बोद्धव्य एवं च सति घटादिषु मृदिव रूपादिकणिकारूपेण परिणतमाकाशं कारणतया तेष्वभेदेनावतिष्ठत इति वक्तव्यम् । तदेतत् विप्रतिपत्तिप्रदर्शनपूर्वकं यथाशक्ति निरूपयितुं प्रयतामहे ।

## तत्रेयमादिमा विप्रतिपत्तिः ।

आकाशस्यान्यभूतानां च परस्परविभिन्नलक्षणत्वान्न वाय्वादीनां तदुपादेयत्वमभ्युपैतुं शक्यते । उपादानोपादेयभावे हि सति सदैव सर्वावस्थासूभयोरभेदः प्रतीयते न तु क्वापि भेदः । न हि घटादिषु कार्य्येषु कदाचिदपि नेदं मृदिति प्रतीयते । अपि तु मृदेवैतदित्यवगम्यते; घटादीनां लक्षणं च न कदाचित् मृदं व्यभिचरति । मृदेव पिण्डादिलक्षणेषु व्यतीतेषु कम्बुग्रीवादिलक्षणेष्वागतेष्वयं घट इत्याख्यायते । न घटस्येदं लक्षणं मृदश्चैतदिति भेदव्यवहारः कदाचित् प्रमितिमारोहति, एवमन्येषामपि । न त्वेवमाकाशवाय्वादीनामव्यभिचारः । न हि कदाचिदाकाशे वाय्वादिलक्षणानि स्पर्शादीनि कैश्चिदभ्युपेयन्ते, वाय्वादीनि वा क्षित्यन्तानि इदमाकाशमिति व्यवह्रियन्ते । तस्माद् वाय्वादिभूतानामाकाशस्य च नोपादानोपादेयभाव इति

चेन्न। आकाशवाय्वादीनामपि घटमृदोस्तुल्यत्वस्य प्रमाणसिद्धत्वात्। तथाहि—अविकृताकाशस्य तावदप्रत्यक्षत्वात् तल्लक्षणानां साधारणैरपरिचितत्वाच्च न प्रत्यक्षगोचरेषु वाय्वादिषु आकाशमेवैतदिति सर्वैः प्रत्येतुं शक्यते, न वा तेषां लक्षणान्याकाशस्यैवैतानीति व्यवह्रियन्ते। वस्तुतस्तु वाय्वादीनां प्रत्येकं सर्वाण्येव लक्षणानि कम्बुग्रीवादिलक्षणानीव मृद आकाशस्यैव। आकाशलक्षणानि च सर्वेषु भूतेषु वर्त्तन्ते। यथा मृत्खण्डविशेषः पिण्डादिलक्षणं हित्वा कम्बुग्रीवादिलक्षणेन वर्त्तमानो घटादिरूपेणावतिष्ठते, तथा सर्वप्राप्तिस्वरूपमाकाशमप्यतीन्द्रियावस्थां हित्वा इन्द्रियगोचरयोग्यतामापद्यमानं वाय्वादिरूपेणावतिष्ठते। किन्तु यथा मृदो लक्षणस्य स्थूलेनैव चक्षुषा सर्वैर्विज्ञायमानत्वात् तत्कार्येषु घटादिष्वनुवर्त्तनं पिण्डाद्यवस्थात्यागश्च प्रत्यक्षतः परिज्ञायते नैवं वाय्वादिष्वाकाशस्यानुवृत्तिस्तदवस्थाविशेषत्यागश्च। तस्मादाकाशमेवैतदिति न प्रत्यभिज्ञायते। तथाहि, आकाशस्य तावत् स्थूलरूपं शब्द इत्यवोचाम। स च शब्दः सर्वेषां शब्दानां कारणरूपोऽतीन्द्रियश्च। तस्य वाय्वादिष्वनुवृत्तिः सर्वलोकगोचर इति सिद्धं सर्वत्राकाशस्य स्थूलरूपेणानुवर्त्तनम्।

———

## अथ द्वितीया विप्रतिपत्तिः ।

ननु प्रमाणाभावात् शब्दस्यातीन्द्रियता कारणरूपता चासिद्धा, तस्मात् तदुपजीव्याकाशवाय्वादीनां कार्य्यकारणभावोऽप्यसिद्ध इति चेदत्रोच्यते। अस्ति शब्दादिपञ्चानामेव स्थूलसूक्ष्मभेदेन कार्य्यरूपं कारणरूपं चेत्यवस्थाद्वयम्। कार्य्यरूपं च पुनर्द्वेधा, व्यापाररूपं फलरूपञ्चेति। तत्र येन रूपेणायं शब्दः, अयं स्पर्शः, इदं रूपमित्याद्यनुव्यवसायो भवति तत् शब्दादीनां कार्य्यत्वापन्नानां फलाकारं रूपं द्वितीयन्तु स्फूर्त्तिमात्राकारम्। तथाहि शब्दादयस्तावत् कार्य्यरूपमापत्स्यमानाः समालोडनप्रघट्टनाहननादिरूपं कञ्चिद्व्यापारमपेक्षन्ते। तेन व्यापारेण स्फूर्त्तिविशेष उत्पद्य मनोविविधोपायत इतस्ततः प्रसर्पति। प्रसृप्य चोपलब्धृणां देहस्य बाह्यतः सर्वावयवप्रान्तान् परामृशति, नितरां तत्तदिन्द्रियाणां च बहिः प्रान्तान्। तत्परामर्शे चेन्द्रियाणां भौतिकीं मूर्त्तिम्। प्राप्ते तत्तादात्म्यभावञ्चापन्ने उपलब्धुरुपलभ्यमानानां स्फुर्त्तिविशेषाणां परस्परवैलक्षण्यानुभवप्रयत्नेनेन्द्रियभौतिकमूर्त्तीनां च व्यापारविशेषेण प्रत्यभिज्ञानयोग्यशब्दाद्याकाराणि रूपाणि समुद्भासन्ते, तान्येव शब्दादीनां फलरूपाणि। व्यापारश्च तादृशः स्फूर्त्तिविशेष एव। स खल्वयं शरीरव्यापकत्वचं परामृशन् प्रथमं त्वचैव गृह्यते। ततश्च संघातरूपैरन्यै-

रवयवैरन्यैश्चेन्द्रियैः संश्रवणैरुपलभ्यते । यदिदं तीक्ष्णोऽयं शब्दः, मृदुरयं शब्द इत्यादि प्रत्यभिज्ञानं जायते, तत् स्फूर्त्ति-रूपस्यैव शब्दस्य न तु फलरूपस्य । स्फूर्त्तिर्हि आहननजन्या । आहननस्यैव परिणामविशेषरूपा तीक्ष्णा च मृद्वी च मध्यमा च भवति । फलरूपन्तु शब्दस्य सर्वदा समतयैवोद्भासते । तच्चाहननमतितीक्ष्णं चेत् श्रवणपटहं छिन्नभिन्नीकृत्य बधिरी-करोति, हृत्पिण्डादिकं च (फुस् फुस्) विकम्पयति, बाह्यप्रदेशे च प्रदीपादीनि भृशं नर्त्तयति । मृदुभूतन्त्विदं सततवायु-स्पर्शवत् त्वगादिभिर्विज्ञायमानमपि न प्रत्यभिज्ञातुं शक्यते । यदा चेयमाघातपरिणामरूपा स्फूर्त्तिस्त्वगादिभिर्विज्ञायते न तत्र फलरूपशब्दत्वमुद्भासते, किन्तु स्फूर्त्तिमात्रमेव । तस्मात् फलरूपशब्दाद् व्यापाररूप शब्दो भिन्न इत्यवगम्यते ।

यद्यपि स्फूर्त्तिरूपशब्दस्य फलरूपशब्दजनकत्वादुभयोः पूर्वापरीभावोऽवश्यमभ्युपेयस्तथापि क्षणस्यातिसूक्ष्मत्वाद् युगपदिवोभौ विज्ञायेते इति फलरूपशब्दस्य धर्मत्वेनैव स्फूर्त्ति-धर्मास्तीव्रत्वमृदुत्वादयोऽनुभूयन्ते । इत्येवं कार्य्यशब्दस्य व्या-पारफलत्वाभ्यां द्वैविध्यं निर्णीयते ।

*सोऽयं व्यापार आघातादिनिमित्तेन दार्वादिरूपक्षिति-जलानलानिलेषु चतुर्ष्वेव भूतेषु जायमानो वाय्वादिनेतस्ततः प्रवहतीति सर्वप्रत्यक्षसिद्धम् । तत्रैतस्य व्यापारस्यैवं विध-मुपादानकारणमन्यद् वक्तव्यं यदित्थं प्रवृत्तिशून्यमप्येतत्

प्रवृत्तिप्रवणतावत् सूक्ष्मत्वाच्चेत्थम्भावेनाव्यपदेश्यम् । तस्मादयं व्यापारो निमित्तविशेषेण दार्वादिषु प्रस्फुरेत् ततश्चोपसर्पेदित्येतद्रूपम् । न ह्युपादानमन्तरेण कश्चिद् व्यापारोऽन्यद्वा किञ्चिदिह जगति समुत्थातुं शक्नोति ।

आहननजन्यत्वेऽपि चायं नाहननोपादेयरूपः । किन्त्वाघातेन समुत्थितोऽयं मृदुतीक्ष्णत्वादिकं भजत इति तज्जन्य उक्तः । उपादानं त्वस्य शब्दविशेष एव । स च व्यापारशब्दोपादानरूपः । तद्व्यापारप्रवणतामात्राकारः सूक्ष्मशब्द इत्यभिधीयते । प्रवणता चात्र क्रियोन्मुखभावविशेषरूपा । इदमेवात्र शास्त्रेणाख्यायते । एवं शब्दानां कार्य्यकारणरूपावस्थाद्वयं विज्ञायते । स्पर्शादीनां चावस्थाद्वयं यथास्थानं प्रवेदयिष्यते ।

सोऽयं कारणशब्द आकाशानतिरिक्तोऽपि भेदव्यपदेशेनाकाशस्य गुण इत्याख्यायते । तस्य चानुवृत्तिर्वाय्वादिषु सर्वप्रत्यक्षसिद्धा । तस्माद् वाय्वादीनि आकाशलक्षणवन्तीत्यभ्युपेयते । अत एवाकाशोपादानकानीत्यवगम्यते ।

---

# अथ तृतीया विप्रतिपत्तिः।

वाय्वादिषु शब्दस्य प्रत्यक्षसिद्धत्वादस्त्वयं वाय्वादीनामेव गुणः आकाशस्य च गुणोऽन्यः स्यात् तथा च नाकाशस्य वाय्वादीनामुपादानत्वमिति चेत् उच्यते—वाय्वादीनि हि चत्वारि भूतानि अभिव्यक्तिरूपाणीत्यवोचाम। न चानभिव्यक्तावस्थायामियं क्षितिरेतज्जलमित्येवमादि नामधेयमुपयुज्यते। तस्मादभिव्यक्तस्यैव शब्दस्यैतेषां गुणेन भवितव्यं, नानभिव्यक्तस्य। तस्य पुनरनभिव्यक्तावस्थायामेवाकाशस्वरूपेण तद्गुणेन वाऽवस्थातव्यम्। तस्माद् वाय्वादिष्वाकाशगुणस्यानुवर्त्तनमभ्युपेयमित्यतः सिद्धं वाय्वादिष्वाकाशोपादानकत्वम्। कारणशब्दात्मकं तावन्नभसः स्थूलं रूपं, सूक्ष्मं पुनराकाशस्य रूपं न कारणशब्दात्मकं व्याप्तिबाधप्रसङ्गात्। कारणशब्दो हि व्याप्यान् कारणशब्दान् सम्भावयन् व्याप्य एवावतिष्ठते, न तु भूमत्वेन। यद्यपि कारणशब्दात्मकं गगनस्य स्थूलं रूपमित्युच्यते, तथाप्यतीन्द्रियत्वादनभिव्यक्तमेव तत् तदवस्थायामेवाहननादिना स्फूर्त्तिमापन्नं वाय्वादिष्वनुवर्त्तते।

व्याप्तिरूपाविष्टम्भकत्वयोस्तत्वसम्भवान्नानुवृत्तिः। भूम्न एव हि गगनस्य वक्षसि अनन्ताः स्फूर्त्तिविशेषाः समीरणादिनामभिरभिधीयन्ते। स्फूर्त्तिविशेषत्वादेव तेषां व्याप्यत्वमवधार्य्यते। तत् कथङ्कारं तेषु सर्वव्याप्तिरनुवर्त्तेत।

अथ तर्हि मृदि कम्बुग्रीवादिघटीयधर्मवद् वाय्वादीनां स्पर्शादयो धर्मा अभ्युपेतव्याः। स्पर्शादिविहीनं चाकाशमभ्युपगम्यते। तस्मान्न घटादीनामिव मृदः आकाशस्य वाय्वादीनामुपादानत्वमिति चेन्न; शब्दस्यैव स्पर्शाद्याकारपरिणामत्वात् शब्दवत्त्वादेवाकाशस्य स्पर्शादिमत्त्वसिद्धेः। सति च स्पर्शाद्याकारसमुल्लासे वाय्वादिनामव्यवहारयोग्यत्वात् तत्तन्नाम्नैव व्यवहारः संवृत्तो न त्वाकाशनाम्ना। ततः एव च नभसः स्पर्शादिमत्त्वमङ्गीक्रियते। स्वरूपदृष्ट्या तु अस्त्येव नभसः स्पर्शादिमत्त्वम्।

वस्तुतस्तु नात्र मृद्घटादिदृष्टान्तः संगच्छते भिन्नरूपत्वात्। तथाहि—घटादयस्ता वत्सर्वथैव मृदो न तु मृद्विकाराः। यथा च पिण्डादयो मृदेव, न तु कथञ्चिदपि मृदो व्यतिरिच्यन्ते। मृत्परमाणुसमावेशभेदात् न्यूनाधिक्याच्च मृदेव व्याहारसिध्यर्थमयं पिण्डः, इदं कपालं, अयं घटः, इयं इष्टका इत्यादि नामधेयैरभिधीयते। ततश्च न मृद्घटादीनामुपादानोपादेयभावरूपकार्य्यकारणसम्बन्धो वास्तविकः। नामधेयभेदात्तु शिलापुत्रस्य शरीरमित्यादिवदेकस्मिन्नेव वस्तुनि सम्बन्धिभावः परिकल्प्यते कार्य्यकारणभावश्च, नैवमाकाशवाय्वादीनि। तेषां पुनर्वायुजलादिवद् वास्तविकः प्रकृतिविकृतिभावः। यथा वायोरंशभेदा विद्युदग्निसमावेशेन विभिन्नधर्मतया जलादिरूपैः परिणमन्ति एवमाकाशमपि स्वप्रकृतिप्रेरणया वाय्वादिरूपेण परिणमति। यथा च स्नेह-

शैत्यादिकं वायुपरिणामेऽपि सलिल एव वर्त्तते, न समीरणे तथा स्पर्शाख्यो धर्मो गगनपरिणामे समीरण एव वर्त्तते, न गगने । न वा गगनस्याविष्टम्भकत्वं व्याप्तिश्च समीरणे । सर्वथैव तु धर्मसाम्ये तदेवैतदिति प्रतीयते, न तु प्रकृतिविकृतिभावः । तस्मान्न सर्वे गगनधर्म्माः समीरणादिष्वनुवर्त्तेरन् । न वा समीरणादिधर्म्माः सर्वे नभस्यवतिष्ठेरन् । मृद्घटादीनां च सर्वथैवाभेदात् सर्वे एव मृद्धर्म्माः घटादिष्वनुवर्त्तन्ते, मृत्सु च घटादिधर्म्माः सर्वेऽवतिष्ठन्ते, तस्मात् समीरणादिषु गगनधर्म्माणां तद्धर्म्माणां च गगनेऽदर्शनेऽपि न कश्चिद्दोषः । अतएवास्मदीयानामभिमतान्याकाशस्य विषयेन्द्रियदेहाकाराणि त्रीणि रूपाण्युपपद्यन्ते । तत्र विषयो महाकाशः, देहश्च लिंगशरीराधाररूपः सूत्रनामा ।"यं वायुर्वै गौतम तत् सूत्रम्" । इत्यादि श्रुतिर्वायुनाम्नाभिधत्ते । इन्द्रियं च श्रवणात्मकम् । एतदुभयमुपरिष्टाद् विशेषेण व्याख्यास्यते ।

अथ गगनस्य सूक्ष्मं रूपं चिन्त्यते । तच्च न कारणशब्दात्मकं व्याप्तिबाधप्रसंगात् । कारणशब्दो हि व्याप्यान् कार्य्यशब्दान् सम्भावयन् व्याप्य एवावतिष्ठते, न तु भूमत्वेन । व्याप्यत्वाच्चास्य बहुत्वमवधार्य्यते, बहुत्वाच्च विष्टम्भकत्वम् । न ह्येकस्मात् कारणशब्दात् युगपद् बहुविधः कार्य्यशब्दः समुत्तिष्ठति तस्मादस्याकाशस्य रूपान्तरं यद् भूमत्वेन सर्वशास्त्रेषु कीर्त्तितम् यच्चाविष्टम्भकं तत् पुन र्व्याप्तिमात्रमित्यवोचाम । तच्चातीन्द्रियमलक्षणमाप्रलयस्थायित्वाच्च नित्यं, पयसो दध्यादिभाववत्

कारणशब्दात्मकेन स्थूलरूपेण विपरिणमदपि न सर्वात्मना परिणामि । किन्तु स्फुलिंगादिरूपेणाविर्भवति, विद्युदिव व्याप्यतया विपरिणमति, अतएवाविकारीत्याख्यायते । कारणशब्दात्मकस्थूलरूपेण च व्याप्यत्वेऽपि, तथाभूतविद्युदिव व्यापकम् । इत्थमाकाशस्य निर्विकारत्वनित्यत्वव्यापकत्वानि, सविकारत्वानित्यत्वव्याप्यत्वानि च परस्परविरुद्धान्यपि सामञ्जस्येनावतिष्ठन्ते । अनयोरेकपक्षाश्रयणे तु श्रुतयोऽपि पीड्यन्ते । ता हि नित्यानित्यादिपक्षद्वयं ब्रुवन्ति । तथाहि,—"आकाशवत् सर्वगतश्च नित्यः" तथा,—अथामूर्त्तं वायुश्चान्तरिक्षं चैतदमृतमेतद् यदेतत्त्यम्" इत्याद्या गगनस्यामूर्त्तत्वनित्यत्वाविष्टम्भकत्वातीन्द्रियत्वादीनि ब्रुवन्ति । अन्यत्र पुनः "एतस्माज्जायते प्राणः, मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरूपः पृथिवी विश्वस्य धारिणी" तथा "स प्राणमसृजत प्राणात् श्रद्धां खं वायुर्ज्योतिरूपः" इत्याद्या । तथा,—तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोस्तेज इत्याद्या । तथा,—"तम आसीत् तमसा गूढमग्रे प्रकेतम् ।" इत्याद्या तथा,—सदेव सौम्येदमग्र आसीदित्याद्या" गगनस्य साक्षादसाक्षाच्च जन्यत्वविनाशित्वे प्रतिपादयन्ति । तदेवं परस्परविरुद्धार्थाः श्रुतयोऽनयैव रीत्या संगमनीया इति वयं मन्यामहे ।

तदेतदभिव्यक्तक्रियागुणाद्यभावादित्थम्भावेनाव्यपदेश्यम् । शब्दादिस्फूर्त्तीनामाकररूपं कारणशब्दरूपेणाभिव्यज्यमानं स्वदेहात् कार्य्यशब्दमाविर्भावयदनुष्णाशीतं स्पर्शमप्याविर्भाव-

यति । व्यापाररूपो हि शब्द इतस्ततः प्रसर्पन् प्रथमं विज्ञातॄणां त्वचं परामृशति ; ततश्च मृदुतीक्ष्णत्वादिना तया विज्ञायते । स पुनः श्रवणेन्द्रियेणैव फलरूपशब्दत्वेनावभासते, त्वचा तु स्फूर्त्तिमात्ररूपेणेत्यवोचाम । सेयं स्फूर्त्तिर्यथा फलरूपशब्दस्य प्रकृतिः, तथा परिणामपरिपाट्या स्पर्शस्यापि प्रकृतित्वमापद्यते स्पर्शश्च स्फूर्त्तिविशेषमात्रम्, इन्द्रियभावमापन्नया त्वचा श्रवणेन्द्रियेण फलरूपशब्दोद्भासनवत् स्पर्शनामाभिधानयोग्यतया पर्य्यवस्यति । स पुनर्यावद् विशेषणान्तरं नावगाहते तावदनुष्णाशीतरूप एव ।

स्पर्शश्चायं कार्यकारणभेदेन द्विविधः । कार्यस्पर्शः पुनर्द्वेधा । स्फूर्त्तिरूपः, फलरूपश्च । तत्र कारणस्पर्शः सूक्ष्मस्पर्शः स्पर्शतन्मात्रमिति चाख्यायते । तदपि कार्यात्मकस्पर्शस्य प्रवणतामात्रमभिव्यक्तक्रियागुणाद्यभावादित्थम्भावेन निर्द्देष्टुमशक्यतयाऽव्यपदेश्यम् । तत् पुनः स्थूलस्पर्शस्योपादानं तस्य चोपादानं शब्दतन्मात्रम् । तत्तु आहननादिव्यापारेण स्फूर्त्तिरूपं शब्दं सम्भावयत् स्पर्शतन्मात्रमपि समुद्दीपयति । सा च स्फूर्त्तिः त्वचा गृह्यमाणाऽपि शब्दस्यैव व्यापाररूपतया परिणमति, न तु स्पर्शस्य । प्रयत्नवैचित्र्येण च शब्दमात्रं स्पर्शमात्रत्वमापद्यते । यथा पृथिव्याः प्रयत्नवैचित्र्येणैकस्या एव कुत्रचित् अश्मा जायते, कुत्रचित् तैलविशेषः, कुत्रचिद्वा चूर्णगुटिकादयः समुत्पद्यन्ते । यथा वा समीरणात् क्रियावैचित्र्येण कुतश्चित् मृत्तिका, कुतश्चित् काष्ठं, कुतश्चिद्वा आपो

जायन्ते, तद्वत् । एवं क्रियावैचित्र्यस्य सर्वत्रैव बहूनि कारणानि सन्ति । तत्र कानिचिदात्मवृत्तानि कानिचित् स्ववृत्तानि । आत्मवृत्तानि तु केवलेश्वरानुगतानि केवलजीवगतानि च । स्ववृत्तानि पुनः स्वस्वभावादिजनितव्यापारविशेषरूपाणि, "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत, तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत" इत्यादि श्रुतिप्रतिपादितानि । एतानि केवलेश्वरानुगतानि । जीवानुगतानि पुनः "अहमेवैतेन जीवेनात्मना एतास्तिस्रो देवता अनुप्रविश्य त्रिवृतं त्रिवृतमेकैकं करवाणी"त्येवमादीनि । द्विविधान्येवैतानि प्राग्भवीयसंस्कारवशाद्व्यवसायादिरूपाण्यभिध्यानादीनि । तानि चाध्यात्मविद्याप्रकरणे विशेषेण प्रदर्शयिष्यन्ते । अत्र तेज आदीनां बहुत्वेन सह प्रत्यक्षगोचरत्वादुल्लेखः कृतः । "तस्माद्वा एतस्मादाकाशः सम्भूतः, आकाशाद्वायु"रित्यादि श्रुत्यन्तरसामर्थ्यात्तु "तत्तेजोऽसृजत" इत्येतस्मात् पूर्वं वाय्वाकाशावध्याहार्य्यौ । तथाच तत् स ईक्षणपूर्वकमाकाशरूपेण परिणम्य पुनरीक्षित्वा वायुरूपेण परिणतं, तत् पुनरैक्षत बहु स्यां प्रजायेयेति । तस्माद्वाय्वाकाशावत्र नोपेक्षितौ, किन्तु तयोर्बहुत्वस्याप्रत्यक्षत्वाद् बहुरूपप्रदर्शनपरया । अनया श्रुत्या न तावुक्तौ । तथा च वाय्वाकाशयो रप्येवं परिणाम इष्टः । स्वगतकारणानि च "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।" इत्यादि श्रुत्या प्रतिपादितानि । एताश्च तिस्रः शक्तयः परिस्फुरितसत्त्वरजस्तमोरूपा

बोद्धव्याः शासनान्तरप्रमाणात् एतच्चाग्रे व्याख्यास्यते। अत्र पुनः स्वगतकारणान्येव दर्शयितव्यानि। तत्राकाशस्य स्वकारणानि कार्य्यकारणभेदेनोभयावस्थायामाकाशगतान्येव। आकाशस्योपादानकारणत्रयं सत्त्वरजस्तमोरूपं यदग्रतः प्रवेदयिष्यते। तस्य परस्परभवाभिभवपरतया न्यूनातिरेकभावः शब्दतन्मात्रस्य कारणगतो हेतुः, तत्स्वरूपवृत्तिश्च पूर्वसञ्जात-संस्कारविशेषः, बहुविधपरिणमनपरत्वं चेति। एभिः कारण-समूहैराकाशाविर्भावानन्तरं कारणशब्देभ्यो व्यापारशब्द: स्पर्शतन्मात्राणि च परिस्फुरन्ति।

तानि पुनर्यद्यपि विशेषेणाव्यपदेश्यान्येव तथाप्यतिसूक्ष्म-कणिकारूपाणीति वक्तव्यम्। शब्दस्पर्शयोर्भेदव्यपदेशेन पुनः स्पर्शतन्मात्राणि स्पर्शधर्म्माणि, शब्दतन्मात्रोपादेयत्वात् शब्द-धर्म्माणि च।

इमानि च पुनः प्रकृतिव्यापारवैचित्र्यादेव प्राणरूपादिभि-र्बहुधा विभक्तानि। तानि च सम्भूय धर्मधर्म्यभेदेन समीर-णस्य सूक्ष्मरूपं भवन्ति। भेदव्यपदेशेन त्वस्य सूक्ष्मं रूपं प्रणामित्वमात्रमेव। प्रणामित्वं चाव्यूढत्वात् स्वाभाविका-वस्थायामन्येषां गमनागमने नातिप्रतिकूलत्वं तेनेदमपि प्रायेणाकाशवदेवाविष्टम्भम्। तत एवावकाशदानरूपा चास्य क्रिया प्रायेणाकाशवत्, व्याप्तिरपि प्रायेणाकाशवत्। आप्रलय-स्थायित्वाच्चेदममृतमित्याख्यायते। तथा च श्रुतिः—"अथा-मूर्त्तं वायुश्चान्तरीक्षं चैतदमृतमेतद् यदेतत्स्यम्।" इति,

आकाशं पुनर्यथा शब्दात्मना स्पर्शरूपेण विपरिणमति, तथावकाशादत्र विष्टम्भकसर्वगतिमात्ररूपेण । प्रागुक्तादेव कारणकूटादसम्यगवकाशदातृतया, असम्यगविष्टम्भकत्वेनान्येषां व्यापकमपि स्वव्याप्यरूपं परिगृह्णाति । एतच्चोभयं रूपं वायोरतीन्द्रियम् ।

ततस्ते स्पर्शकणाः सम्भूय समीरस्य स्थूलं रूपं भवति, यदिह वायुपरमाणुरित्याख्यायते । ततश्च सम्भावनया द्व्यणुकत्र्यसरेणुनामकं स्थूलतरं रूपं भवति । ते पुनः संहता अपि विश्लथावयवा एव, न तु क्षित्यादिपिण्डवद् व्यूढावयवाः, येनैकस्मिन्नवयवे समाकृष्टे अन्येऽप्यवयवाः समाकृष्यन्ते, ततश्च पिण्डादिकमपि भवति । वायुपरमाणूनान्त्वेकस्मिन् समाकृष्टे विप्रकृष्टे वा एक एव तत् फलं भजते, नापरः । इत्यतो वायुरमूर्त इत्युक्तः । अत्रामूर्तत्वं तथाविधाव्यूढत्वम् । अव्यूढत्वाच्च न मृत्पिण्डादिवत् सर्वदा प्रक्षीयत इति अमृतमित्युक्तम् । अव्यूढत्वादेव च मृत्पिण्डादिवत् नान्येषां गतिमवरुणद्धि, किन्तु पारदादिवत् स्वयमपसृत्यानुकूलयति । तस्याः श्रुत्या यदित्युक्तम् । अत्र यदिति शत्रन्तेनधातो रूपम् । तेन एति सर्पति इति व्युत्पत्त्या तथाविधोऽर्थः संगृहीतः । स्पर्शधर्मासंग्रहे चायं वायुराकाशवत् परोक्षः । तस्मात् परोक्षाविधायिना त्यदा त्यमित्युक्तम् । एवमाकाशमात्मनः परिणामप्रवणतादिवलात् स्वप्रकृतिवैचित्र्यादिभ्यश्च किंचिद् विशिष्टरूपेण स्वधर्माननुवर्त्तयत् वायुरूपेणात्मानं विकुरुते ।

न चैतेनाकाशस्य स्वरूपं सर्वात्मनाऽपह्नूयते, किन्तु व्यापकत्वादुपादानत्वाच्च तड़ित्स्फुलिंगे विद्युत इव वाय्वन्तराले स्वरूपेणावतिष्ठमानस्यैव स्वव्लक्षस्तः अंशेनैषा वायुरूपा विक्रिया भवति। वायोरप्यस्य विषयेन्द्रियदेहरूपास्तिस्रोऽवस्था अस्मदीया अनेके मन्यन्ते। अत्र प्राणादिमहावायुपर्य्यन्तो विषयः। त्वग् इन्द्रियं, देहः पिशाचादिरूप इति। एवमाकाशतो वायूत्पत्तिरुपपादनीया।

अथ वायुतस्तेजस उत्पत्तिश्चिन्त्यते। तत्र विद्युदेव तेजसः स्वरूपमित्यभ्युपेत्य तत्समुद्भूतलोहितरूपकणिका अनुद्भूतरूपा परमाणुनामिका तेजसः सूक्ष्मं रूपं, तथाभूताणूनां च राशिभावे उद्भूतरूपवत्त्वे च समुत्पन्ने स्थूलं रूपमिति प्रागभिहितम्। इदानीं तर्हि विद्युत्स्वरूपमुपव्याख्यातव्यं, ततश्चान्यत्। तत्र पृच्छयते का नाम विद्युदिति। उत्तरे तु यदुद्भूतालोकस्य तथोद्भूतरूपस्य उद्भूततापस्य च प्रकृतिभूतमिन्द्रियं वाय्वाकाशव्याप्यत्वेऽपीतरभूतद्वयव्यापकम्, इत्थम्भावेन निर्द्देष्टुमशक्यं, स्फूरणे तु चक्राकारगतिशीलं, आकर्षणापकर्षणधर्मि चालोकादिपरिणामप्रवणतावद् वस्तु विद्युदिति ब्रूमः। एतच्च तेजसः सूक्ष्मतरं रूपम्। यदा खलु प्रोक्तसमीरणस्य स्पर्शधर्मः प्रकृतिवैचित्र्यादिहेतुनांशेनानुष्णाशीतत्वं परिजहदुष्णत्वप्रवणतावान् भवति, तदा तत्कणिकारूपकणिकात्वमापद्यमाना यावदनुद्भूतावस्था तावत् रूपतन्मात्रमित्याख्यायते। यद्यपि तापालोकयोरपि सूक्ष्म-

कणिका तदेव, तथापि तापतन्मात्रमालोकतन्मात्रमिति नाभिधीयते। त्रयाणां चैकत्वाद् रूपवतानेनैव शिष्टयोरपि तान्येतानि समुद्रवक्षसीव तरङ्गावयवाः परिव्यापकविद्युदुरसि व्युच्चरन्ति। भेदाभेदौ चैतेषां समुद्रतत्तरङ्गाणामिव। तदेतद् रूपतन्मात्राभेदेन वर्त्तमानो धर्म्मी रूपादिभावादृष्ट्या सर्वरूपव्याप्तिमात्रतया वायुवच्चाविष्टम्भकतयावतिष्ठमानो विद्युन्नामभाग् भवति। उद्भूतवति च रूपे तड़िदिति। सेयं तड़िदपि द्विविधा, उद्भूतरूपा, अनुद्भूतरूपा चेति। यस्या रूपं सर्वप्रत्यक्षगोचरं सा उद्भूतरूपा। उद्भूतरूपावस्थायान्त्वस्या आलोकः परिस्फुरति यथासम्भवं तापश्च। एतदवस्थायाञ्चास्या वस्त्वन्तरायोगेऽपि यन्त्रादिसहायतया सत्ता गमनागमने च सुस्पष्टं दृश्यन्ते। अनुद्भूतरूपावस्थायान्तु लाक्षादिवस्त्वन्तरयोगेनैवास्याः सत्ता परिगृह्यते। तदवस्थायामेवाकर्षणापकर्षणक्रिये दृश्येते, धातवतारादिसाहाय्येन च चक्राकारगतिः। इयं यावत् स्वल्पमात्रया समुद्भासते, तावदस्यां न तापो, न रूपं, न वालोको विभाति। मात्राधिक्येन तु यद्योगेनेयं संतिष्ठते, तद्द्वारेणैवास्यास्तापालोकरूपाणि त्रीण्येव संविभान्ति। त्रयाणामस्फुरणे तु यद्योगेनेयमुद्भासते तस्या अवयवकणा कम्पनविक्षेपणभेदनादिव्यापारवत् स्फूर्त्तिमात्रेणानुभूयते। सा च रूपतत्त्वस्य व्यापारमात्रावस्था, रूपत्वे च प्रदीप्ते फलावस्थेति कार्य्यरूपस्यावस्थाद्वयम्। एतदेव तेजसः स्थूलं रूपम्। अपरं च—तेजसः स्थूलं रूपं धातुनामकं

सुवर्णरजताद्याकारकम्। सुवर्णादयो हि पदार्था यदि च काठिन्यादिधर्मवत्त्वेन क्षितिरूपेणैवावभासन्ते, तथापि न क्षितावन्तर्भवन्ति, अविकृततेजःस्वरूपत्वात्। तडित्कणिकाविशेषा हि प्रकृतिवैचित्र्यादिहेतोर्यथा प्रोक्ताग्निरूपेण परिणमन्ति, तथा सर्वधातुमूलरूपेण विपरिणमन्ति। यत्कणिकासु पुञ्जीभूतासु स्वभावतस्तापोऽनुभूयते, आलोकश्च सह रूपेण याभ्यः परिस्फुरति, याश्चात्यन्तमस्थिरा भ्रमणशीलाश्चेतस्ततः, याश्च परदेशीयाः पण्डिता अतीवाल्पं भेदं पश्यन्तः, इडरियम् रेडियमादि त्रिभिर्नामभिरभिदधते ताः कणिकाः विचित्राभिः स्वल्पाधिकसंख्याभिः परस्परमाश्लिष्यन्त्यो व्यूढत्वमापद्यमानाः तत्संहननभेदात् तत्संख्याभेदाच्च त्रपुसीसकाद्यनेकभावान् भजन्ते। तस्मात् तेजोरूपा एव सर्वे धातवः।

यद्यपि सीसकादिषु न स्वभावतस्तेजोधर्मास्तापादयोऽनुभूयन्ते, तथापि तेजःकणिकापुञ्जेभ्योऽभिन्नत्वात् तेजोरूपा एव ते। समावेशवैचित्र्यादिप्रतिबन्धकेन तु तेषु तापादयो नोद्भवन्ति। अनुकूलत्वाच्च तेषां काठिन्यादिधर्मा अपि प्रादुर्भवन्ति। तदेतत् काठिन्यं क्षितिकाठिन्याद् भिद्यत इति नात्र क्षितित्वापत्तिः, गन्धाभावाच्च। पृथिव्यास्तावत् काठिन्यं चूर्णत्वादिहेतुभूतं कठिनद्रव्येणाहन्यमानं हि पृथिवीपिण्डादिकं विचूर्णितं भवति। तत्र काठिन्यविशेष एव कारणम्। धातूनान्तु काठिन्यं न तथाभूतं, किन्तु मृदुत्वस्यैवाल्पतारूपं विशुद्धा हि धातवः कठिनद्रव्यान्तरेणाहन्यमाना अपि चूर्णत्वं

नापद्यन्ते, किन्तु चिपिटा भवन्ति। पुनः पुनरत्यर्थमाहन्यमानाश्च चिपिटत्वकाष्ठाप्राप्तौ विस्रंसितावयवा अपि चिपिटरूपेणैवावतिष्ठन्ते न तु शक्तुवत् चूर्णत्वमापद्यन्ते ।

यत्त्वाहन्यमानेषु पृथिवी पिण्डादिषु चिपिटभावो मार्दवञ्च दृश्यते, तत्र जलसंयोगः कारणं, शुष्कपार्थिवपिण्डादिकन्तु न तथा भवति । यच्च लौहादिषु चूर्णीभावस्तत्र पार्थिवाङ्गारादिसंयोगः कारणम् । विशुद्धायःपिण्डादिकन्तु तीव्राघातेनापि चिपिटमेव भवति, न चूर्णाकारम् । तस्मात् पृथिवीकाठिन्याद् विजातीयं धातुकाठिन्यम् । न वा धातुषु कश्चिद् गन्ध उपलभ्यते । उद्भूततापाश्च धातवो मात्राविशेषेण जलवद् द्रवीभवन्ति । न च तथा पृथिवीत्यतो न धातुषु पृथिवीत्वस्यातिव्याप्तिः ।

अस्मदीयाः पुनर्ये भूतानां त्रिविधं रूपं मन्यन्ते, त एतत् तेजसो विषयरूपं वदन्ति। नयनं च वक्ष्यमाणरीत्या इन्द्रियरूपं सूर्य्यादिदेवांश्च देहरूपमिति । सूक्ष्मं सूक्ष्मतरं च रूपं प्रागवोचाम ।

अथ फलव्यापारोभयरूपस्यैव रूपस्यान्यमवस्थाविशेषमनुव्याख्यास्यामः। इदं खलु फलव्यापारोभयविधमेव रूपं धातवतारादियोगेनायोगेन चेतस्ततः सर्पतीत्युक्तम् । तत्र यदा धातवतारादिस्थूलपदार्थयोगेन सर्पति, तदैव तड़िदाख्यां भजते यदा पुनः स्वातन्त्र्येण सर्पति, तदा स्वालोकाख्याम् ।

तत्रोभयावस्थायामेव तु रूपाकारप्राप्तिः स्वशक्ते र्मात्रान्यूनाधिक्येन सञ्जायते। यदा न्यूनमात्रया तड़ित् परिस्फुरति, तदा न रूपं नालोकः, न वा तापसमुद्भासो दृश्यते । मात्राधिक्ये तु त्रयमेतत् संविभाति । एवं स्वातन्त्र्येण गच्छतोऽप्यालोकस्य मात्रान्यूनत्वे व्यापाररूपतैवाभाति येन ताराद्यभावेऽपि वार्त्ताप्रचारसङ्केतो व्यवस्थापितः पण्डितैः मात्राधिक्ये तु रूपाकारतयेति । परिमाणं च मात्राया बहुप्रयत्नतोऽङ्कशास्त्रादिना निरूप्यते । शब्दस्तु वायवीयो वा जलीयो वा पार्थिवो वा भवतु वायुनैव वीचितरंगन्यायेन प्रसर्पति, नत्वन्यसहायेन सहायाभावे वा । स्पर्शः पुनरुष्णो वा शीतो वा वायुना तारादिना च प्रसर्पति, नत्वसहायः, एवमत्रविशेषः ।

यत्तु तारादिनापि शब्दः प्रसर्पतीत्येवाभाति तन्न साक्षात् शब्दस्य प्रसर्पणं, किन्तु व्यापारात्मकशब्देन तड़िदपरनाम यद् व्यापारात्मकं रूपं स्फुरति, तदेव तारादिना प्रसर्पत् सहात्मना सोपादानरूपमपरिस्फुटं फलव्यापारोभयरूपं शब्दमपि परिस्फोरयति । न ह्युपादानोपादेयेऽन्योन्यं परिहातुमर्हतीत्यवोचाम । तस्मात् तारादिना शब्दव्यापारं विज्ञाय तत्साहाय्येन शब्दगतिपरिकल्पनं भ्रमास्कन्दितमिति भ्रमः । एतत्त्रयाणां स्पर्शगतिर्विलम्बिततरा शब्दगतिर्विलम्बिता, रूपगतिश्चातीव शीघ्रा । तत्र रूपगतिस्तावत् पलमात्रेण प्रायेण चतुर्विंशतिलक्षक्रोशानतिक्रामति । शब्दगतिस्तु प्रायेण सप्त शतधनुर्मात्रम् । स्पर्शगतिस्तावत् ततोऽपि मन्थरेत्येवमेषां

गतिभेदः परिलक्ष्यते । इत्येवं वायुनस्तेजस उत्पत्तिः परिकल्प्यते ।

इदानीं तेजसो जलोत्पत्तिश्चिन्त्यते । तत्र वायोरेवावस्थाविशेषाभ्यां एकद्विसंख्याभेदेन परस्परमिलिताभ्यां जलरूपमाविर्भवतीति प्रागुक्तम् । तेन वायोरेव जलोत्पत्तिरायातेति, कस्तर्हि तत्र तेजसः सम्बन्ध इति प्राक् चिन्तनीयम् । अत्र वायुस्वरूपप्रविभागेनैवैतद्विप्रतिपत्तिः समाधास्यत इति प्रतिब्रूमः । तथाहि,—वायुस्तावत् चतुर्धा विभक्त इतस्ततो वातीत्यवोचाम : तत्रैकं रूपं तेजोभूयिष्ठस्याग्नेः सहायभूतं, असावेव प्राणवायुरित्याख्यायते ; अयं हि प्रश्वासव्यापारेण नासाविवरेण मुखविवरेण वा फुस्फुसद्वयमनुप्रविष्टस्तत्राग्निविशेषरूपेण परिणमन् तद्गतरुधिरं संस्करोति । अम्लजनक इति चास्य पारिभाषिकं नामान्तरम् । द्वितीयं पुनारूपमग्निसहायमपि सत् प्रथमेन मिलितं तद्द्विगुणसंख्यया वर्त्तमानं यथानियमं तड़िताभिसम्भावितं सलिलाकारमाविर्भावयति । अस्य तु जलजनक इति पारिभाषिकं नाम । तृतीयन्तु रूपं प्रायेणाविकृतस्वरूपेणावतिष्ठते । तस्मादयं वायोर्निजरूपमिति कल्पना न्याय्या । अस्य पारिभाषिकं नाम यवक्षारजनक इति । यवक्षारे ह्ययमाधिक्येन वर्त्तते । चतुर्थन्त्वावद्विशेषेण दार्वाद्युपादानरूपेण परिणमनशीलत्वात् पार्थिवत्वेन परिकल्प्यते ; तस्य पारिभाषिकं नाम अङ्गारजनक इति । अङ्गारे ह्ययमतिशयेन वर्त्तत इति । इत्येवं वायोश्चत्वारि रूपाणि परस्परेण संश्लिष्टान्यपि

अमिश्ररूपेण सततमितस्ततो वान्ति। एवं च सति वायोरेव प्रथमद्वितीयरूपाभ्यामुत्पाद्यमानं जलं तेजोभूयिष्ठाग्निजनकांश-जन्यत्वात् तड़िदभिसम्भावितत्वाच्च तेजोजन्यत्वेनाभ्युपेयते। वस्तुतस्तु केवलाम्लजनकादपि जलरूपाविर्भावो दृश्यत इत्यग्निपरिणाम एव जलम्। अस्य च धर्मधर्म्मिणो भेदपरि-कल्पनया सप्त रसाः शुक्लं रूपं शीतलः स्पर्शः शब्दश्च विविधो धर्मत्वेनाभ्युपगम्यते। धर्मी तु स्नेहात्मकः स्वकार्य्यव्यापकोऽतीन्द्रियश्चेति। तत्र स्नेहो मृजापुष्टिबलाधानजनकरूपो भावविशेषः। यथा च वायुरवयवानां परस्परसंश्लेषेऽपि स्थूलत्वेऽपि चासंहतस्वभावः। यथा वा तड़िदग्निः। तथेदम-प्यवयवानां परस्परसंश्लेषेऽपि स्थूलत्वेऽपि चासंहतस्वभावः। तेन मत्स्यादीनां गतिप्रतिषेधकं न भवति।

यथा च स्वप्रकृतिवैचित्र्यादेर्हेतोः स्पर्शो उष्णत्वमापद्यमानो रूपत्वेन विपरिणमति। एवमुष्णत्वमपि परिमाणकाष्ठाप्राप्ते-रनन्तरं प्रकृतिवैचित्र्यादेरेव हेतोः शैत्यत्वेन परिणमति। तथा रूपाण्यपि बहूनि, उद्भूतप्रवणतामपहाय प्रकृतिभावमिवापद्य-मानानि शुक्लत्वेनावतिष्ठन्ते। तच्चास्य करकारूपेणानुभूयते, न तु द्रवाकारेण काचादिवत् स्वच्छत्वात्। तदेतज्जलं रसस्य प्रथमाधारोऽपि अनुद्भूतत्वान्नात्र कश्चन रसोऽनुभूयते।

ननु हरीतक्यादिचर्वणानन्तरं जलपाने मधुररसानुभवात् तत्र मधुरेण रसेन भवितव्यमिति चेन्न; तत्फलानामेव मधुररसवत्त्वात्। तथाहि मधुरतिक्तकषायादिरसवतां हरीत-

क्यादिफलानां तिक्तकषायरसानामेवाधिक्येन तेषां चर्वण-कालें मधुररसग्रहणप्रतिबन्धो भवति। जलपाने तु तदीय-तिक्तादिरसवदंशानां क्षालनेनापसारित्वात् मधुर एव रसः परिगृह्यते। न च जलस्य मधुररसवत्त्वे केवलजलपाने तदनुभवे किञ्चित् प्रतिबन्धकं कल्पयितुं शक्यम्। न वा हरीतक्यादिभक्षणानन्तर्य्यस्य जलमधुरताव्यञ्जनासामर्थ्यं विनिगमकं किंचित् प्रमाणं भवति। जलाधःकरणानन्तरमपि रसनायां मधुरत्वानुभवात् रसनासंलग्नहरीतक्याद्यंशस्यैव तन्मधुरत्वं न तु जलस्य। तस्मान्न जलं मधुररसवत्। अभ्युपगते तु मधुररसवत्त्वे केवलजलपाने तदननुभवाद्गत्यैव जलेषु तस्यानुद्भूतत्वमभ्युपेयम्। तत्रानुद्भूतस्य मधुरस्यैव रसस्याधारो जलमिति कल्पना च केवलनिर्बन्धप्रयुक्ता, न तु प्रमाण-साध्येति।

अथ यत्रायं रसोऽनुभूयते, न्यायतस्तस्यैवैष धर्मो भवेत्, नत्वन्यस्य। तथाच सति पार्थिवेष्वेव वस्तुषु तस्यानुभवात्, अप्सु चाननुभवात् पृथिव्या एवायं धर्मो भवेन्न्यायतः, न त्वपाम्। तत् कथङ्कारमब्धर्मत्वेन रसो निर्द्दिश्यत इति चेत् उच्यते, वयन्तावन्न न्यायविरुद्धं किञ्चिदुक्तुमुत्सहामहे। अपि तु न्यायत एवास्य जलधर्मत्वं प्रमापयितुमिच्छामः। वस्तुतो हि जलेष्वेव रसोऽनुभूयते न पार्थिवेषु वस्तुषु, रसनायां तथानुभवात्। रसनाशिरासु तावदब्विकारपदार्थ-विशेषो वर्त्तते, गण्डतश्च तथाभूतपदार्थो निःसरति। ततश्च

मिलितयोर्द्वयोः द्विविधा रसभेदा अनुभूयन्ते, न तु गुड़-तिन्तिड़ीकुवलयादिषु पार्थिवेषु । कानि च द्रव्याणि सामर्थ्यात् तत्तद्व्यापारेण जलस्यैव रसोद्बोधकानि । यद्ययं रसो गुड़ादेरेव धर्मो भवेत्, तर्हि यावद् रसनया तेषां संयोगः, तावदेव तत्तद्रसोऽनुभूयेत । न च तथा भवति, किन्तु यावद्रसनायां जलं तावद् गुड़ादीनां मिष्टादिरसानुभवः, तदभावे च तदभावो दृश्यते । सर्वे हि लोका गुड़ादिषु भक्ष्यमाणेषु कियत्क्षणपर्यन्तमेव मधुरादिरसानास्वादन्ते ; ततः परं सत्यपि रसनायां गुड़ादिसंयोगे कंचन रसं नानुभवन्ति, किन्तु स्पर्शमात्रमुपलभन्ते, रसनायां जलसदसद्भावावेव तत्र हेतू । बुभुक्षो हि रसनायां तथाभूतं जलं स्यन्दते, तथानतिमात्रत्वात् कियत्क्षणानन्तरमेव निवर्त्तते । तस्माद् यावद्रसो रसनायां विद्यते, तावदेव रसानुभवः, निवृत्ते पुनस्तस्मिन् सत्यपि गुड़ादिसंयोगे न कश्चिद् रसोऽनुभूयते । एवमन्वयव्यतिरेकाभ्यां जलस्यैव धर्मो रस इत्यभ्युपेयते । पार्थिवद्रव्याणां च व्यापारो मृदुतीव्रत्वादिभेदेन रसव्यापारस्य मृदुतीव्रत्वादिकं समुद्भावयति । व्यापारस्य हि मृदुतीव्रत्वादिभेदेन रसस्य मधुरलवणत्वादिभेदाः समुद्भवन्ति । तस्मान्न रसाः पार्थिवाः । यत्तु केवलजलेषु रसो नानुभूयते, तन्न रसाभावनिबन्धनं, किन्तूद्बोधकाभावनिबन्धनमिति नान्वयबाधः । पृथिव्यास्तु वक्ष्यमाणं रसवत्त्वं रसोद्बोधकव्यापारवत्त्वात् । उद्बुद्धोद्बोधकयोरभेदविवक्षया तदन्तर्गतजलांशद्वारेण वा वेदितव्यम् । तस्मान्न्यायत एव जलीयधर्मो रस इति ।

सोऽयं रसोऽपि गन्धादिपंचानां साधारणन्यायेन कार्य्य-कारणभेदेन प्रथमतो द्विविधः। कार्य्यरूपः पुनारसो व्यापार-फलभेदेन द्विविधः। तत्र कारणरूपो विशेषाभावादनभिव्यक्तः सुतरामतीन्द्रियः रसतन्मात्रमित्युच्यते। अस्य रूपं रसव्यापा-रप्रवणतामात्रं तस्माच्च रूपादिकणिकावदस्यापि सहस्रशः कणिका आविर्भवन्ति, याः सम्भूय तैजसवायुपरमाणुनाम्ना अभिधीयन्ते। तेऽपि जलजनकाम्लजनकभेदेन द्विविधा इत्यु-क्तम्। ततश्च तड़ित्समावेशेन ते एकजातीयानामेकैकशः द्वितीयजातीयानां च द्वौ द्वौ इत्येवं त्रयस्त्रयो मिलित्वा तेजो-धर्मतापस्य काष्ठाप्राप्तौ प्रकृतिवैचित्र्यात् तापरूपमपहाय यथा सत्यत्वमापद्यन्ते, तथापरप्रघट्टकेनाननुभूतरसं तैजसरूपं विजहतो रसव्यापाररूपेण सम्पद्यन्ते। तदानीं ऽयात्मकमप्ये-तद्रूपं जलीयपरमाणुरित्याख्यायते। अत्रापि जलीया: सर्वे धर्मा अतीन्द्रिया एव। तस्मात् सूक्ष्मं रूपमेतज्जलस्यैतद्रूपा अपरिसंख्येया जलीयपरमाणवः परस्परसंश्लिष्टा अपि अव्यूढा एव जलराशिर्भवति। ततश्च व्यक्तधर्मा प्रत्यक्षविषयो भवति। रसरूपस्पर्शशब्दाश्चास्य विशेषगुणाः। तदेतज्जलस्य स्थूलं रूपं भवति, सूक्ष्मतमन्तु स्पर्शतन्मात्रसंज्ञकं, रसरूपस्पर्शशब्दा-श्चास्य गुणाः, स्वकारणाद्व्यापाररूपेण प्रसृत्येन्द्रियभिन्नैः शरीरांशैर्व्यापारमात्रत्वेनावगम्यन्ते। इन्द्रियैस्तु रसनादिभि-र्यथायोग्यं तेषां स्वभाववैचित्र्यात् फलाकाररसरूपस्पर्शशब्द-स्वरूपैरनुभूयन्ते। एवं तेजसः सरसजलोत्पत्तिरुपपद्यते।

तत्र च रसः स्वप्रकृतेः शीघ्रगतित्वेऽपि स्पर्शाच्च मन्थरः, प्रकृतिस्वभाववैचित्र्यात् गतिश्चास्य रसनास्नायुषूपलभ्यते। स्नायुपथेन ह्ययं रसनातो मस्तिष्कमारोहति। तत्सामान्यादन्यस्नायुभ्योऽपि गतिरभ्युपेया, किन्तूभयत्रापि व्यापाराकारेण, फलाकारता तु रसनयैव निष्पाद्यते। बाह्यतश्चास्य गतिर्न प्रमाणगोचरस्तथापि स्नायुषु दर्शनात् कथञ्चिदन्यत्र परिकल्प्यत इति।

अथाम्भसः पृथिव्युत्पत्तिमनुसन्दधामहे। तत्र गन्धरसरूपस्पर्शशब्दवतो काठिन्यादिधर्मविशिष्टा पृथिवीत्युक्तम्। तत्रापि गन्धवत्त्वमेव पृथिव्या इतरव्यावर्त्तको धर्मः। जलादीनां रसतन्मात्रादीनीव च धर्मधर्म्यभेदेन गन्धतन्मात्रमेव क्षितेः सूक्ष्मं रूपमित्यवधेयम्। तच्च प्रकृतिवैचित्र्याद्धेतो रूपादित्रितयविशिष्टाद् रसतन्मात्रादेव प्रादुर्भवति। यद्यपि पृथिव्याः सिकताचूर्णादिरूपेषु साक्षात् परम्परया वा न जलस्य कश्चित् सम्बन्धो दृश्यते, न वा तेजसः, समीरस्य, नाकाशस्य वा दार्वादिरूपेषु, तज्जन्यशर्करादिषु च चतुरात्मकस्य वायोरेव विभिन्नजातीययोर्द्वयोस्त्रयाणां वा अंशानां भागभेदेन मिलितानामुपादानोपादेयलक्षणसंसर्गो विज्ञायते। तथापि जलरूपानन्तरितत्वाज्जलोपादेयैव पृथिवीति वक्तव्यम्। यदि हि जलस्य रसवत्त्वमसाधारणधर्मत्वेनाभ्युपेयते, तदा सन्तु सिकतादीनि चूर्णादीनि वा रूपाणि दारु तज्जन्यशर्करादीनि वा, यत्र यत्र रसोऽनुभूयते, तत्रैव कारणरूपेण जलस्य

सत्ता अभ्युपेया। शर्करादिषु चूर्णादिषु हि सुस्पष्टं रसोऽनुभूयते। सिकतादिषु काष्ठविशेषेषु च स्वरूपेणावतिष्ठमानेषु कस्यचिद् रसविशेषस्यानुपलब्धावपि भस्माद्यवस्थायामुपलब्धेर्न रसस्य व्यभिचारः। तस्माज्जलोपादेया पृथिवीति सिद्धान्तो नापह्नूयते।

अत्रोद्भिज्जादिदेहो दृष्टार्थमुपन्यसितुं शक्यते। तथाहि पादपास्तावन्मूलेन पृथिव्या जलानि गृह्णन्ति, पत्रैस्त्वग्भिश्च वायुतस्तदीयानंशान् सजलान् निर्जलान् वा समाददत इत्येवमुभयथा पादपानां शरीरपुष्टिः साध्यते। तत्र वायुर्जलञ्चेत्युभयमेव प्रकृतिवैचित्र्यात् पादपीयप्राणशक्तिप्रभावेण विपच्यमानमुद्भिज्जशरीरं निर्वर्त्तयति। उद्भिज्जशरीरं च प्रायेण पृथिव्यात्मकम्। तस्माद् द्वावंशेन पृथिव्यां जलपरिणामत्वमभ्युपगम्यते।

ननु पादपैर्मूलगृहीतं जलं पानादिना मानवादिदेहगृहीतजलवद् रुधिरस्थानीयरसविशेषाणामार्द्रत्वमेव सम्पादयति, न तु देहावयवानां पुष्टिम्। तस्मान्नायं दृष्टान्तः पृथिव्या जलोपादेयत्वमनुकूलयतीति चेत् न; निर्मलजलेष्वप्यवरुद्धभावेन बहुदिनं खाताद्यवस्थितेषूपरिभागे भूम्यसंलग्नरूपेण तृणगुच्छलतादिपुष्टिपरिदर्शनादन्यथानुपपत्त्या जलस्य तदुपादानत्वनिर्णयाद् भूमिष्ठानामप्युद्भिज्जानां जलेषूपादानत्वोपपत्तेः। तथाहि जलमेवैकरूपेणोद्भिज्जानामार्द्रत्वं सम्भावयति, अन्यरूपेण च तान् पुष्णातीति न्यायतो वक्तव्यम्। अथ तथापि

दृष्टान्तासिद्धिः । खाताद्यवस्थितानां जलानां विशुद्धत्वानुपपत्तेः । तानि हि जलानि पृथिव्यां वृष्टानि खननोत्थितानि वा तत्समाश्लेषेण पार्थिवपदार्थमिश्रितानि भवन्ति । ततश्च संश्लिष्टपार्थिवपदार्थैरुद्भिज्जान् पुष्णन्ति, स्वेन च रूपेणार्द्रयन्तीति पक्षस्य दृष्टान्तान्तरेण सिद्धत्वात् । भूमिष्ठेऽपि चोद्भिज्जे तत्सिद्धान्तानुसरणात् । यदि वा तथाभूतानामपां कथञ्चिद् विशुद्धत्वं व्यवस्थापयितुं शक्येत, तथापि केवलवायुनापि तेषामुत्पत्तिपुष्टी सम्भावयितुं शक्येते । रास्नादयो हि भूमिजलाभ्यामसंश्लिष्टा अपि छिन्नदारुखण्डाश्रयेणापि वर्त्तमाना आत्मानं पुष्णन्तीति दृश्यते । सा च पुष्टिरन्यस्यासम्भवात् केवलवायुनैव सम्भाव्यते इति चेन्न । वायुष्वपि जलसद्भावप्रामाण्यादार्द्रत्वदर्शनाच्च रास्नादिषु वायोः केवलत्वासिद्धेरुभाभ्यामेव जलवायुभ्यां रास्नादिशरीरपुष्टेरनुमानात् कुल्यादिवृष्टानां च जलानामशुद्धत्वानुपपत्त्या तद् वक्षस्यपि तृणगुच्छाद्युत्पत्तिपुष्टिदर्शनात् खातादिवृष्टजलस्योपादानत्वे सन्दिग्धप्रामाण्येऽपि कुल्यादिजलानां विशुद्धिवाधाभावात् तत्र दृष्टान्ततोपपत्तेः ।

ननु द्वौ तावत् पदार्थावम्लजनकजलजनकाख्यौ जलस्योपादानत्वेनाभिहितौ । जलोत्पन्नतृणादिषु तु अङ्गारजनकपदार्थानामपि दर्शनात् विशुद्धजलेषु च तेषामभावात् कथं जलेनैव जलीयतृणगुच्छादीनामुत्पत्तिपुष्टी कल्पयितुं शक्येयातामिति चेदुच्यते । जलवक्षसि यत् तृणादीनामुत्पत्तिः

पुष्टिश्चाभिहिता तद्भूमिनिरपेक्षत्वेन, न तु वायुनिरपेक्षतया। वायुषु चांगारजनकानां सद्भावो विद्यत इत्यवोचाम। तस्माज्जलीयतृणादीनामुभाभ्यामेव वायुजलाभ्यामुत्पत्तिपुष्टी भवत इत्यवोचाम। तत्र जलीयतृणादिषु यदम्लजनकजलजनकपदार्थौ दृश्येते, जलमेव तयोरुपादानम्। अङ्गारजनकस्य चोपादानं वायुरेवेत्यदोषः। तालेक्षुखर्ज्जुरादिगुड़ेषु मिष्टफलमूलादिषु च जलजनकसत्ता सुस्पष्टं प्रतीयत इति जलोपादानकत्वं तेषामवश्यमभ्युपेयं, भूम्युपादानकत्वस्यानुपपत्तेः। तथाहि, एकस्मिंस्तावत् क्षेत्रे वर्षशतमपीक्षूणामुत्पत्तिर्दृश्यते। वर्षशते च परितश्चतुर्विंशतिधनुपरिमाणक्षेत्रे तदिक्षुजातगुड़ानां प्रायेण सार्द्धद्विसहस्रमनपरिमाणं भवति। तत् परिमाणगुड़वता मिक्षूणां शरीराणि यदि जलनिरपेक्षाया भूमेरेव सम्पद्यन्ते, तदा तस्या भूमेस्तत्परिमितांशक्षयात् तत्र पुष्करिणीत्वापत्तिः। तत्परिमाणगुड़वत्याश्च तस्याः सुमिष्टत्वापत्तिः। तथा गुड़क्षये क्रमेण तत्सम्भवानामिक्षूणां निर्गुड़त्वापत्तिश्च। तस्माज्जलत एवेक्षुषु गुड़ोत्पत्तिर्वक्तव्या। गुड़ातिरिक्तांशेषु च तेषां योऽम्लजनकांशः, सोऽपि जलोपादानकः। ये चाङ्गारजनकाद्या अंशास्ते वायूपादानकाः। तेषामपि भूम्युपादानकत्वे समाना एव प्रोक्ता अनुपपत्तयः। देशविशेषेषु तु तत्समुद्भूतफलादीना मीषन्मिष्टत्वादिरसविशेषानुभवात् तत्तद्भूमिश्लिष्टजलेन समं किञ्चित्परिमाणं तद्भूम्यंशमपि तदुद्भवैरुद्भिज्जैः समाकृष्य स्वदेहाः पुष्यन्त इत्यभ्युपगन्तव्यं, न तु जलनिरपेक्षा भूम्यंशा एव।

अथ शिष्टा अंशा वायुत एव गृह्यन्त इति ब्रूमः। गुडेषु तावज्जलजनकोऽङ्गारजनकश्च पदार्थों दृश्यते। तत्रेक्ष्वादय उद्भिज्जाः पत्रगात्रगतमुखसहस्रैर्यथा वायुतोऽङ्गारजनकं गृह्णन्ति, तथा जलजनकं च। ततश्च स्वात्मगतशक्तिविशेषेण स्वदेहपुपुक्षया गुडजनकोपयोगिभागानुरूपं तौ द्वौ पदार्थौ संयोजयन्तो गुडरूपेण परिणमयन्ति।' एवमम्लजनकमपीति न्याय्यो वायुत उद्भिज्जानां स्वशरीरारम्भकपदार्थसंग्रह इति चेत् उच्यते। छिन्नस्वपत्राग्राणामपीक्षूणां पुष्टिदर्शनान्मृत-लताकानाञ्च शर्कराकन्दादीनां पुष्टिप्रत्ययाद् वायुतस्तत् पदार्थग्रहणासम्भवेन जलत एव तद्ग्रहणमवशिष्यते। तथा जलीयतृणगुच्छादीनामपि जलत एव स्वशरीरारम्भकपदार्थ-संग्रहः प्रत्ययमापादयति। तस्मात् ते जलतो जलजनकांशान् गृह्णन्तो वायुतश्चांगारजनकं संगृह्य स्वीयजीवशक्तिप्रभावेणात्म-पुपुक्षया तान् पदार्थान् रासायनसंयोगेन परस्परं संयोजयन्तः स्वशरीरारम्भकोपयोगितया परिणमयन्तीति न्याय्यमिदं तेषा-ञ्च शरीराणि पार्थिवान्येवेति। तत्र जलतः पृथिव्युत्पत्तिरभ्यु-पेयते। तद्दर्शनाच्च महतः पृथिवीपिण्डस्यापि जलत उत्पत्ति-पुष्टी इच्छामः। तथाहि,–आकाशादिक्रमेण भूमरूपं जलमुत्पन्नं सोपादानतेजोऽन्तर्गतविद्युत्कणिकाविशेषानात्मशक्त्या विप-रिघट्टयत् तत्संयोगपरिपाट्या सिकतादिरूपेण विपरिणम-यति। तेभ्यश्च संहतेभ्यो महापिण्डसमुद्भूतिरिति न्याय्या जलेभ्यः क्षितिसम्भूतिरिति।

अथेदानीं भूततत्त्वविषयको वैशेषिकादिसिद्धान्तः संक्षेपेण संगृह्य प्रोच्यते ।

अथेदानीमस्मदीया चिन्ता भूतेषु कीर्त्यते ।
वैशेषिकस्य सिद्धान्तं तत्रादौ चिन्तयामहे ॥

तत्र क्षितिजलाग्निपवनव्योमसु भूतत्वं व्यवस्थापितम् । क्षितौ च संख्यापरिमितिपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्ववेगाख्यसंस्कारगन्धरसरूपस्पर्शरूपा गुणाश्चतुर्दश । जले च गन्धवर्जिताः स्नेहयुतास्त एव । तेजसि पुनस्तेषु गन्धरसस्नेहवर्जिता एकादश, वायौ च तेष्वेकादशसु रूपद्रवत्वरहिता नव । आकाशे तु संख्यापरिमाणपृथक्त्वसंयोगशब्दरूपाः पंचैव गुणाः समवायसम्बन्धेन व्यवस्थापिताः । तत्र च पवनान्तानां चतुर्णां भूतत्वपर्य्यवसानाः परमाणवः परिकल्पिताः । तेषां च द्वाभ्यां संयोगविशेषेण यः पिण्डविशेष उत्पद्यते स द्यणुकः । त्रिभिश्च त्र्यसरेणुः, तेषां पुनर्द्वयोर्बहूनां स्वजातीनां वा संयोगविशेषेण दृश्यतामापन्नाः स्थूलस्थूलतरस्थूलतमभेदेनानन्तविधाः पिण्डपरिणामा भवन्ति । ते च विशुद्धजलवायुशुष्कमृत्पिण्डादिरूपाः । विजातीयैश्च तथाविधैः संयुज्यमानानां परिणामाः । उद्भिज्जादिप्रेतपिशाचमनुष्याकृतदेहरूपाः सहैव रसरुधिरादिभिः । उद्भिज्जोद्भवाश्च फलपुष्पादयः । धातवश्च कांस्यपित्तलादिरूपास्तथा विकृतसुवर्णरजतादयः । इत्येवं संक्षिप्तापि सर्वार्थगर्भा वैशेषिकादिभूतव्यवस्था ।

एवमाकाशादिक्रमेण पंचभूतोत्पत्तिरस्माभिः परिकल्प्यते। एतान्येव चतुरशीतिरूपैरवान्तरभिन्नलक्षणै स्ततोऽधिकैर्वा अज्ञातैरपरिसंख्येयैराकारैर्विभज्यमानानि परस्परसंश्लेषविशेषैर्बहून् प्रकारानापद्यमानानि बह्ववयवसंहतिरूपाणां पृथिव्यादिपिण्डानां कारणानि भवन्ति।

भूततत्त्वमविज्ञाय शारीरं चैव कस्यचित्।
नाध्यात्मिके प्रवेशः स्यादात्मतत्त्वेऽपि वा पुनः॥
तस्मात् तत् प्रोच्यते तात! सावधानो निशामय।
पदार्थद्वयतत्त्वन्तु मूलतोऽप्सु प्रतिष्ठितम्॥
क्षितौ बहुविधा एव पदार्थाः सन्ति संयुताः।
वह्निवाय्वोस्तथैवेति तस्मादेषां न मूलता॥
यद्द्वयेन जलत्वं स्याद् यैश्च मृत्पिण्डसंग्रहः।
दीपादिमूर्त्तोर्वाय्वोर्वा तैरियं निर्मिता क्षितिः॥
तान्येव क्षितिमूलानि मन्तव्यानीति ते जगुः।
अक्सिजेनादिनामानि तेषां चक्रुश्च ते पुनः॥
तदानीन्ते महात्मानस्तेष्वेव मूलतत्त्वताम्।
स्थापयन्तः स्म मोदन्ते सर्व एव पुरातनाः।
तेषां नामानि गद्येन सुखार्थं प्रब्रवीमि ते॥

१। एलुमिनियाम् २। एन्टिमणि ३। आर्गन् ४। आरसेनिक् ५। वेरियाम् ६। विस्माथ् ७। ब्रोरोन् ८। ब्रोमिन् ९। काडमियम् १०। सियेक्षियम् ११। क्यालसियाम् १२। कार्बन् १३। सिरियाम् १४। क्लोरिन् १५। क्रोमियाम् १६। कोवालद्

१७। कलाम्बियम् ( निश्रोबियम् ) १८। कपार १६। डिस्-प्रोसियाम् २०। इर्बियाम् २१। इडरोपियाम् २२। फ्लोरिन् २३। ग्याभेलिनियाम् २४। ग्यालियाम् २५। जार्म्मानियाम् २६। ग्नुसिनाम् ( वेरिलियाम् ) २७। गोल्ड २८। हिलियाम् २६। हाइड्रोजेन ३०। इन्डियाम् ३१। आइओडिन् ३२। हिरि-डियाम् ३३। आइरन् ३४। क्रीपटन् ३५। लालथानाम् ३६। लेड् ३७। लिथियाम् ३८। लुटेसियाम् ३६। म्यागनिसियाम् ४०। म्यानगानिज् ४१। मारक्वारी ४२। मलिबडेनाम् ४३। निश्रोडिमियाम् ४४। निश्रोन् ४५। निकेल ४६। नाइट्रोजेन ४७। श्रोसमियाम् ४८। अक्सिजेन ४६। प्यालाडियम् ५०। फस्फरस् ५१। प्लाटिनाम् ५२। पोटासियाम् ५३। प्रेसिश्रो डिमियाम् ५४। रेडियाम् ५५। रोडियम् ५६। रुबिडियम् ५७। रुथेनियाम् ५८। थामारियम् ५६। स्काण्डियाम् ६०। सिलिनियाम ६१। सिलिकन् ६२। सिलभार ६३। सेडियाम् ६४। ष्ट्रनसियाम् ६५। सालफार ६६। टानटालाम् ६७। टेलिडरियाम् ६८। टार्बियाम् ६६। थालियाम् ७०। थोरियाम् ७१। थुलियाम् ७२। टिन् ७३। टिटेनियाम् ७४। टांसटेन ७५। इडरेनियाम् ७६। भ्यानाडियाम् ७७। जेनन् ७८। इटार-बियाम् ७६। इट्रियाम् ८०। जिलक ८१। जिर्कोनियाम्।

तत्र आरगन्, ब्रोमिन्, क्लोरिन्, फ्लोरिन्, हिलियाम्, आइओडिन्, क्रीपटन्, निश्रोन्, फसफरस्, छिलिकन्, सालफार, जेनन्, एते गन्धवत्त्वात् क्षित्यन्तर्गताः। अक्सिजेन,

हाइड्रोजेन्, नाइट्रोजेन, कार्बन् एते रूपाभावसमानाधिकरण-स्पर्शवत्त्वात् वाय्वन्तर्गताः। शिष्टाः पंचषष्टिसंख्यका गन्ध-रसाभावसमानाधिकरणरूपंसमवायिकारणतावच्छेदकजातिम-त्त्वात् तेजोऽन्तर्गता इति वयं मन्यामहे। जलं च वाय्वन्तर्गत-हाइड्रोजेनाक्सिजेन-नामकतत्त्वद्वयस्य परस्पर-संयुक्तस्य रूपान्तरं, आकाशस्तु न तेषां रसायनाधिकृत इत्येव-मेकाशीतिसंख्यकान्येव तेषां तत्त्वान्यस्मद्भूतसंज्ञारूढक्षिति-तेजःसमीरेषु त्रिष्वेवान्तर्भवन्ति, सजलेषु चतुर्षु वा। जलस्य तु एकरूपत्वाद् विभागाभावः। इयमेव द्वितीयव्यवहारभूमे-र्मर्य्यादा ।

जड्डोर्वोः सन्धिस्थानं च कल्पयितुं शक्यते। अस्मादेवो-रुस्थानस्य तृतीयव्यवहारभूमेश्चारम्भः। अस्यां च भूमा-वस्मदीयैराचार्य्यैः पंचतन्मात्राणि प्रदर्श्यन्ते। यानि प्रागस्मा-भिर्विशेषेण वर्णितानि। पाश्चात्यास्तु विद्वांसोऽस्मिन्नेवावसरे प्रदर्शितेष्वशीतिसंख्यकेषु पञ्चाशीतिसंख्यकेषु वा भूतावा-न्तरपदार्थेषु तदारम्भकत्वेनेलेक्ट्रन् नामकं तत्त्वमधिगम्य तदा-रम्भकत्वेन च पुनरिथारनामकं पदार्थं वर्णयन्ति। तज् ज्ञानं चैतस्यामेव भूमौ तथैतस्मिन्नुर्वङ्गे च निवेशनीयम् ।

परेतनास्तु विद्वांसो बहवः साम्प्रतं शनैः ।
अक्सिजेनादिसंज्ञानां तत्त्वमालोच्य यत्नतः ॥
विशेषतः परीक्षाभिर्विजानन्तोऽन्यजन्यताम् ।
बाधमाना मौलिकत्वं सर्वेषां च पृथक् पृथक् ॥

यदारब्धानि तानीह वीक्षन्ते यन्त्रयोगतः ।
तस्यैकमूलतत्त्वत्वं कल्पयन्त्यधुनातनाः ॥
तृतीयभूमिसंव्यक्तं तज्ज्ञानं परिकल्प्यते ।
इलेक्ट्रन्निति नामापि तस्योक्तं तैर्मनीषिभिः ॥
विद्युच्चुम्बकमातृत्वं तस्य सर्वैः प्रकीर्त्तितम् ।
ये त्वम्लजनकाद्याख्या वायवो ये च धातवः ॥
सुवर्णरजताद्याख्या गन्धकाद्याश्च ते मताः ।
उपधातुतया सर्वांस्तानिलेक्ट्रन्मयान् विदुः ॥
तस्य चाणुं कल्पयन्ति तेषां संख्याविभेदतः ।
अक्सिजेनादिभावानां चाणूनां भिन्नजातिताम् ॥
यश्चाम्लजनकादीनामणुत्वं तै निंगद्यते ।
क्षुद्रत्वचरमत्वात्तत् नेष्यते पश्चिमाङ्गवैः ॥
परिमाणेन तेषां वा परमाणुत्वमीक्ष्यते ।
तथा च यदवस्थायां वस्त्वम्लजनकादिना ।
नामधेयेन निर्देशं भजते तत्तदैव च ।
तेषामणुरिति ख्यातिं लभते तैरितीष्यते ॥
द्व्यणुकं तद्द्वयं चैव मन्यन्ते ते मनीषिणः ।
पारिमाण्डल्यमेवैषां मानं यद्यपि कीर्त्यते ॥
तत्राप्येवं कल्पयन्ति विद्वांसः परदेशजाः ।
ग्रहाश्चोपग्रहा यद्वदुल्काश्च धूमकेतवः ॥
ग्रहपिण्डांशकाश्चापि सुसम्भूय समन्ततः ।
सर्वे सहस्रशः सौरं भ्रमन्तो मण्डलं यदा ॥

स्वस्मिन् स्वस्मिन् स्थिताः कक्षे केन्द्रीकृत्य मुहुर्मुहुः ।
सौरं जगन्मण्डलाभं रचयन्ति तथैव च ॥
इलेक्ट्रनभिधाः सूक्ष्मा अणवोऽपरमेककम् ।
केन्द्रीकृत्य भ्रमन्तश्च स्व स्व कक्षे व्यवस्थिताः ॥
बहवो मण्डलाकारं रचयन्ति पृथक् पृथक् ।
तदैवैषामणूनां स्यात् परिमण्डलमानता ॥
व्यासादिना तु तन्मानं यथावत् कीर्त्यते शृणु ।
तेषां व्यासार्द्धमेवन्तु मन्यन्ते पश्चिमोद्भवाः ॥
दशसंख्याककोटीनामंशानां य इहैककः ।
सेन्टिमिटरमानस्य पंचविंशतिकोटिभिः ॥
विभागेन य एकांश स्तत्तुल्यमानमिष्यते ।
इञ्चित्रयङ्गुलमेव स्यात् षड्यवात्मकमत्र नः ॥
इलेक्ट्रणामणूनान्तु व्यासार्द्धमानमिष्यते ।
सेन्टिमिटरमानस्य महापद्मांश एककः ॥
अक्सिजेनादिभावानामणुष्वेषां पृथक् पृथक् ।
यथासंख्यविभेदोऽस्ति तदिदानीं निबोध मे ॥
संख्यां सहस्रमेवाहु र्हायड्रोजेनाणुसंश्रिते ।
इलेक्ट्रनणुजातीनां विस्माथेऽणौ द्विलक्षकम् ॥
अधस्तादुपरिष्टाच्च प्रायेणैवं विनिर्णयः ।
अनयोरन्तरालस्थां संख्यामन्येष्वणुषु च ॥
इलेक्ट्रणामणूनान्तु निर्दिशन्ति यथायथम् ।
तच्च निर्दिश्यतेऽत्रैव यथावदवधारय ॥

अणूनामर्षिसर्जेनस्य प्रत्येकं षोडशैव तु ।
इलेक्ट्रनाणवो ज्ञाताः सहस्राणीह पण्डितैः ॥
नायट्रोजेने सहस्राणि चतुर्दश विनिश्चिताः ।
तथा द्वादशसाहस्रमणूनां कार्वणे त्वणौ ॥
क्लोरिणेऽणौ तथा सार्द्धपंचत्रिंशत् सहस्रकम् ।
ब्रोमिनेऽशीतिसाहस्रमायूडिने सप्तविंशतिः ॥
सहस्राणि च लक्षं च फ्लोरिण ऊनविंशतिः ।
सहस्राणि तथा चत्वारिंशत् साहस्रसंख्यया ॥
क्याल्सियं नामतत्त्वस्य परमाणौ प्रकीर्त्तिताः ।
चतुर्विंशति साहस्रमणूनां म्याग्निसियमे ।
अणाविलेक्ट्रणो ज्ञेयं परिमाणं परैर्मतम् ॥
सहस्राणामूनचत्वारिंशत् संख्यां विदुर्बुधाः ।
पटासीयमतत्त्वस्य प्रत्येकं परमाणुषु ॥
त्रयोविंशतिसाहस्रो सोडियं नामके त्वणौ ।
सह सप्तनवत्या तु सहस्रैर्लक्षसंख्यया ॥
इलेक्ट्रनाणवो ज्ञेयो जातरूपाणुसंज्ञिते ।
अष्टाधिकं शतं ज्ञेयं सहस्राणि च राजते ॥
परमाणावणूनान्तु परिमाणमिलेक्ट्रणः ।
सप्ताधिके शते द्वे तु सहस्राण्येव सैसके ॥
परमाणौ भवेत्तेषां परिमाणमितीष्यते ।
षट् पंचाशत् सहस्राणि लौहेऽणौ मानकोविदाः ।
परिमाणं च मन्यन्ते तदणूनां विदेशजाः ॥

एकत्रिंशत् सहस्राणि विदुः प्रस्पुरके त्वणौ ।
द्वात्रिंशच्च गन्धकस्य सहस्राण्यणुसंज्ञिते ॥
पंचषष्टिसहस्राणि सार्द्धानि जिस्कनामके ।
सोनविंशति साहस्रं लक्षं मानं विदुष्टिने ॥
द्वे लक्षे पारदे मानमणावार्सैनिके तु तत् ।
पंचसप्तति साहस्रं सहस्राणि च ताम्रिके ॥
सार्द्धत्रिषष्टिसंख्यानि म्यांगानिज्नामके त्वणौ ।
अणवः पंचपंचाशत् सहस्राणि त्विलेक्ट्रणः ।
पंचभिर्नवतिश्चापि प्लाटीनम् नामधेयके ॥
सहस्राणि च लक्षं च तथा वेरियमाभिधे ।
सप्तत्रिंशत् सहस्राणि चतुःशतयुतानि च ॥
लक्षं च ष्ट्रन्टिमे सार्द्धशतैः षड्भिः समन्वितम् ।
सप्ताशीतिः सहस्राणि तथा च सप्तविंशतिः ।
एल्मिनियमसंज्ञेऽणौ सहस्राणि विदुर्म्मितिम् ॥
क्यड्मियं नामके चाणौ लक्षाणि द्वादशापि च ।
सहस्राणि विदुर्माणमणूनां मानपण्डिताः ॥
क्रोमीयमे द्विपंचाशत् सहस्राणि कबाल्टिके ।
एकोनषष्टि साहस्रमणुमानं वदन्ति ते ॥
सह सप्तशतैरष्ट पंचाशत् परिसंख्यया ।
सहस्राणि निकेलाणौ परिमाणं तथा जगुः ॥
अणावेन्टिमने लक्षं सहस्राणि च विंशतिः ।
एकादश सहस्राणि वोरणाणुषु ते विदुः ॥

अष्टाविंशतिसाहस्रं परिमाणं सिलीकने ।
स्थूलेनैतद्विचारेण किंचिदस्यान्यथा परे ॥
गुरुत्वमानभेदेन चैवमेभि निरूपितम् ।
यावन्मानेन यद् यस्माद् गुरुत्वेनावधार्य्यते ॥
तावतैव तु मानेन संख्याणूनां प्रकल्प्यते ।
तत्रापि हायड्रोजेनस्य गुरुत्वाद् यस्य यद्गुणम् ॥
गुरुत्वं तस्य तस्माञ्च तावत् साहस्रमानता ।
तथाहि हायड्रोजेनस्य गुरुत्वाद् वोरणाभिधे ॥
एकादशगुणं दृष्टं गुरुत्वं सत्प्रमाणतः ।
एकादशसहस्राणि तस्मात्तेषामिलेक्ट्रणः ॥
अणूनां तदणौ मानं निर्णीतं पश्चिमैर्बुधैः ।
एवं विस्माथपर्य्यन्तमणुमानं निरूपितम् ॥
एवं रीत्या तु पाश्चात्या नानाविधपरीक्षया ।
अक्सिजेनादितत्त्वानि प्रच्याव्य मूलतत्त्वतः ॥
प्रवेशितानि सूक्ष्मेषु इलेक्ट्रनसु यथाक्रमम् ।
मूलत्वमपि तेष्वेव संशयानैरिवार्पितम् ॥
अन्येन जनितत्वं हि तेषामपि च शङ्क्यते ।
अन्याणूनामसत्त्वेऽपि स्वीकृते न तु नित्यता ॥
निश्चीयत इलेक्ट्रनसु जन्यता हि निरूप्यते ।
तानिच्छन्ति च तत्पूर्वमसमीक्ष्य च किंचन ॥
अनिर्वाच्यमतः किंचित् तद्धेतुः परिकल्प्यते ।
कार्य्यतारूपलिंगेन चानुमित्यैव केवलम् ॥

इथारस्य समुद्रः स मन्यते तत्त्वकोविदैः ।
अनन्ताः सर्वतो व्याप्तास्तत्समुद्रस्य वक्षसि ॥
अतिसूक्ष्मानुसूक्ष्मा ये स्फूर्त्तिरूपा विशेषतः ।
भासन्ते वीचिमालेव दुष्टवारिधिवक्षसि ॥
ग्रन्थिमालेव वा रेणौ तत्र वेलेक्ट्रणो मताः ।
दुर्निर्णया गतिस्तेषां जिगीषूणां परस्परम् ॥
समाश्लेषपराणां वा प्रलयेनेव मित्रयोः ।
आकर्षतामपि सदा परस्परमतीन्द्रियम् ॥
विक्षेपशक्तितो नैव कदाचित् संगमः परः ।
आकर्षणादपि तथा नेतरः सुफलप्रदः ॥
भवतीतस्ततस्तस्माद् घटते वेष्टनी गतिः ।
पृथिवीचन्द्रयोर्यद्वदन्येषां वा यथा सदा ॥
ग्रहाणां सूर्य्यपिण्डस्य भवत्यावर्त्तिनी गतिः ।
गमनं जायते तेषामित्येवं परिकल्प्यते ॥
तथैवैषामणूनां च गतिरित्यनुमीयते ।
किन्त्वत्र केन्द्रिकेन्द्राणां नास्ति न्यूनातिरिक्तता ॥
व्यासादिमानतस्तद्वदिति वैचित्र्यमीक्ष्यते ।
वृहत्तरं क्षुद्रपिण्डं भ्रमतीति हि दृश्यते ॥
पृथ्वीं बृहत्तरां चन्द्रः सूर्य्यञ्चाति बृहत्तरम् ।
सा चान्ये च ग्रहाः सर्वे सह सर्वै रुपग्रहैः ॥
परिवार्य्य भ्रमन्तीति दृश्यते बाह्यचक्षुषा ।
बृहत्त्वमेव हेतुस्तु वेष्टनं गमनं प्रति ।

वेगेन घूर्ण्यमानाद्धि रथचक्राद् यथा मृदः ॥
व्युच्चरन्ति तथा सूर्य्याद् ग्रहाः सर्वे बुधादयः ।
तेभ्यश्चोपग्रहास्तद्वदिति गोलविदो विदुः ॥
अनन्तानां च गोलानां समष्टिर्जगदिष्यते ।
सूर्य्याश्चासंख्यकास्तत्र ये च नक्षत्रसंज्ञिताः ॥
ग्रहाश्चासंख्यकास्तेभ्यस्तेभ्यश्चोपग्रहाः पुनः ।
सर्व एव विघूर्णन्तश्च्यवयन्त्यन्यगोलकान् ॥
उन्नतेभ्यः स्वपृष्ठेभ्यो जातविक्षेपशक्तितः ।
तस्माद्बृहत एवात्र क्षुद्राणां विच्युतिर्मता ॥
क्षुद्रा एव भ्रमन्तीह बृहत्पिण्डानिति स्थितिः ।
न हि क्षुद्रं बृहत् क्वापि समं वा भ्रमति क्वचित् ॥
तस्मादिलेक्ट्रनपरं भ्रमतीति भवेन्न वा ।
इति संशेरते ये वै तानिलेक्ट्रन् गतीप्सवः ॥
स्वीकुर्वन्ति च साम्येऽपि मानस्य केन्द्रिकेन्द्रयोः ।
आवर्त्तिनीं गतिं प्राज्ञाः समन्तात् केन्द्रिणां सदा ॥
त्र्यसरेणुर्हि यः ख्यातो जलस्य स त्रयात्मकः ।
एकोऽणुरक्सिजेनस्य द्वौ हाय्ड्रोजेनसंज्ञितौ ॥
तत्र व्यासादिसाम्येऽपि अक्सिजेनं समन्ततः ।
वेष्टयन्तौ जनयत स्त्र्यसरेणुं जलस्य तौ ॥
आश्चर्य्यमेतदत्रापि हाय्ड्रोजेनाणुकद्वये ।
अवान्तरगतिर्दृष्टा पृथिवीचन्द्रयोरिव ॥
चन्द्रमाश्च यथा पृथ्वीं भ्रमतीह समन्ततः ।

तेन सार्द्धञ्च पृथ्वीयं यथा भ्रमति भास्करम् ॥
तथा स्वं भ्रमतैकेन ह्यायड्रोजेनाणुनापरः ।
सहैवाणुरक्सिजेनं भ्रमतीतस्ततस्ततः ॥
जलस्य त्र्यसरेणूनामाकार उपपद्यते ।
इत्यन्यदेशजानां हि सर्वेषां वै विपश्चिताम् ॥
मतं तस्मान्न मानस्य साम्यभ्रमणबाधकम् ।
अतो भ्रमन्ति साम्येऽपि एकमन्य इलेक्ट्रणः ॥
इति सिद्धान्तबाधो न भवतीति प्रचक्षते ।
एवंविधेष्विलेक्ट्रन्सु मूलत्वं स्थापयन्ति ते ॥
अथ ते शक्तिमन्तो वा शक्तिभिन्ना अथापि वा ।
शक्तिमात्राश्च सन्तस्ते कीर्त्यन्ते शक्तिमत्तया ॥
एवं संशयमापन्नास्तत्परीक्षार्थिनो बुधाः ।
काचयन्त्रविशेषेण तेषां छायावधारणात् ॥
निराकुर्वन्ति शक्तित्वं तद्वत्तां निर्णयन्ति च ।
ततस्तेषामुपादानमन्यदस्ति न वेति च ॥
संशय्यास्तीति निर्णीय तदिथारमकल्पयन् ।
इथारशब्दगत्या तु यमर्थं प्रतियन्ति ते ॥
नासाविन्द्रियसंग्राह्यः प्रमाणन्तत्र कल्पना ।
अनुमानन्तु तन्मानं केवलं तत्र गण्यते ॥
हेत्वाभासे हि दोषाणां त्वत्र नासम्भवो भवेत् ।
तथापि तत् कल्पनैव यथावदवधार्य्यताम् ॥
आकाशवज्जगद्व्यापी सूक्ष्मश्चाकाशवन्मतः ।

लघुश्च तरलश्चैव सुगन्धिश्चाप्यमिश्रितः ।
समीरात्पामसौ भाति प्रकारान्तरमेव च ॥
सूक्ष्मात् सूक्ष्मो जगत्यत्र प्रोतश्चैवात एव च ।
इथार इति मन्यन्ते तद्गात्रोत्था इलेक्ट्रणः ॥
अनन्ताः प्रचरन्तीह तस्मात् चाणुसमुद्भवः ।
स चेथारः शक्तिमात्रः किंवा स्याच्छक्तिमानिति ॥
सन्देहोऽयं महांस्तेषु द्वौ च पक्षौ न दुर्बलौ ।
बहुवादविवादौ च प्रातिकूल्यानुकूल्ययोः ॥
शक्तिमत्त्वे तु तेष्वेव मूलत्वं पर्य्यवस्यति ।
एवमिथारावधिकं मूलत्वमवगम्यते ॥
अन्यदेशोद्भवानान्तु सिद्धान्तोऽयं विपश्चिताम् ।
अस्मिन्नर्थे न चास्माकं प्रत्ययो व्यवतिष्ठते ॥
पाश्चात्यानां हि सिद्धान्तः सततं परिवर्त्तते ।
अयं च काले नश्येद्वा तिष्ठेद्वेत्यत्र संशयः ॥
अनाप्तत्वाच्च तेषां न वाक्यं प्रत्ययमर्हति ।
प्रागेवैतदवोचाम तदिदानीं च कथ्यते ॥
न तु तेषां मतं सम्यक् प्रत्याख्यातुं समुत्सहे ।
आर्षसिद्धान्तसाचिव्यं यत्र यत्र प्रतीयते ॥
तद्वादरेण संगृह्य यथावत् परिदर्श्यते ।
इथारेति यदुक्तं तैस्तदाकाशं प्रचक्ष्महे ॥
इलेक्ट्रणाश्च ये प्रोक्तास्तद्विकारसमाख्यया ।
मरुत् तन्मात्रतां तेषां ब्रूमो ये रूपवर्जिताः ॥

अक्सिजेनादिका भावास्तैरेव च विनिर्मिताः ।
ये रूपवन्तस्तेषान्तु तेजोमात्राणि तानि च ॥
क्षाराद्यारम्भका ये तु क्षितिमात्राणि तानि च ।
एवं पृथग्विधैस्तात ! तैरिदं निर्मितं जगत् ॥
इति मन्यामहे सर्वं पर्यालोच्य यथामति ।
इलेक्ट्रणामैकरूप्यं न प्रतीमो वयं पुनः ॥
तन्मात्राणां च रूपाणि विभिन्नलक्षणानि च ।
दृष्टानि भिन्नरूपाणि तन्मात्रत्वे त्विलेक्ट्रणाम् ।
न च ते सम्भवन्तीह कदाचिदेकजातयः ॥
कार्य्यभेदात्तु तद्भेदः स्वीकार्य्योऽवश्यमेव च ।
कारणानां हि भेदे स्युः कार्य्यभेदा अनेकधा ॥
मृदश्चैवैकरूपायाः कार्य्याणि सुबहून्यपि ।
सरावघटपिण्डादीन्यत्र कर्त्रैषणा तथा ॥
व्यापाराश्चापि भिद्यन्ते तेन कार्य्यं च भिद्यते ।
अक्सिजेनादिनिर्माणे ऋते चैवमिलेक्ट्रणः ।
न कर्त्तास्ति न चैवैषु व्यापारा वाप्यनेकधा ॥
कर्त्तृत्वं करणत्वं च तथोपादानतापि च ।
इलेक्ट्रनस्तु निबद्धं तत् सर्वमित्येव कथ्यते ॥
नानुसन्धितसुता तेषां न चोद्देश्यविनिश्चयः ।
नैषणा न करादीनां व्यापारस्तेषु युज्यते ॥
येन तेभ्यः कार्य्यभेदनिर्माणं प्रतिपद्यते ।
तेषां चैवैकरूपत्वे व्यापारस्य तथैकता ॥

शक्तेश्चाप्येकता तेषां वक्तव्येति विनिश्चयः ।
तथा च सति तेभ्यो यत् समुत्पद्येत किंचन ॥
तदेकरूपमेव स्याद् भिन्नाकारं न सम्भवेत् ।
जातिभेदात्तु तेषां वै व्यापारस्य च भेदतः ॥
तथा शक्तेश्च भेदेन भेदात् प्रवणतास्वपि ।
अक्सिजेनादिरूपैश्च परिणन्तुं पृथक् पृथक् ॥
ततस्तेभ्य इलेक्ट्रन्भ्य उत्पद्यन्ते पृथग्विधाः ।
अक्सिजेनादिका भावा इत्येवमुपपद्यते ॥
तस्मादिलेक्ट्रणां जातिभेदा वाच्या विचक्षणैः ।
ते पञ्च प्रथमं तात ! ततो बहुभिदा मताः ॥
तेषां तत्त्व विशेषत्वं नेन्द्रियैः परिगृह्यते ।
अनुमानेन तज्ज्ञेयमविशेषास्ततो हि ते ॥
तस्मादिलेक्ट्रणस्तात ! तन्मात्राणीति गम्यते ।
तदेतद् यदि सत्यं स्यात् तदा पूर्वक्रमेण च ॥
इलेक्ट्राद्यभावानां तन्मात्राणां समुद्भवः ।
वेदितव्यो यथान्यायं पञ्चानां भिन्नवर्त्मनाम् ॥
शक्तिस्वरूपता चैषामस्माभिः परिगण्यते ।
एवं कथञ्चिदपरैरस्माकं मित्रता भवेत् ॥
इत्यस्माकं मततत्त्वमपरेषां विपश्चिताम् ।
एतत् सर्वं ज्ञानमूर्त्तौ जङ्घास्थानं प्रकल्प्यते ॥

अथेदानीं भूतानां क्रियागुणादिकं चिन्त्यते,—प्रथमं तावत् सूक्ष्मभूतानां परमाणुरूपाणां क्रिया समालोच्यते । तत्र ये

परमाणवो गन्धवत्तयावगम्यन्ते, त एव पार्थिवाः ये पर-प्रकाशकरूपवन्तस्ते धातवः, त एव च तैजसाः । ये तु गन्धशून्याः प्रकाशशून्यास्ते वायवीयाः । जलस्य च वायोरेव परिणामत्वात् तस्यैवांशविशेषस्य द्वयोः परमाण्वो स्तथापरांश-विशेषस्यैकेन परमाणुना मिलितरूपस्य, सुतरां त्रिपरमाण्वा-त्मकस्य । अतएव त्रसरेण्वभिधानयोग्यस्यैव सांसिद्धिक-द्रवत्ववतः परमाणुत्वं कल्पनीयमित्यधस्तादवोचाम । ये पुनर्विदेशीयविपश्चिद्भिरेकाशीतिसंख्ययावधार्य्यन्ते सर्व एव ते परमाणवोऽत्यन्तं चञ्चलरूपाः, गतिमन्तरेण न क्षणार्द्धमपि कस्यचिद् भूतस्य कश्चन परमाणुः स्थिरोऽवति-ष्ठते । पारदमन्तरेण न वैकाकी स्थातुमुत्सहते, किन्तु सतत-मेव पृथिवीमिव चन्द्रोपग्रह एकतमं कञ्चन परमाणुं केन्द्री-कृत्याभितो भ्रमतीत्यवगम्यते । यश्च केन्द्रभूतः सोऽपि स्वाश्रितेनैकेन परमाणुना द्वाभ्यां त्रिभिर्वा तैर्भ्राम्यमाणः पुनः सहैवेतस्ततो नियतं विसर्पतीति लक्ष्यते । तत्र प्रायेणैकं केन्द्री-कृत्यापरोऽप्येक एव भ्रमति, कुत्रचित् त्वेकमेव केन्द्रीकृत्य द्वावभितो भ्रमतः ; तथा कुत्रचित् त्रयः, तथा चत्वारः, तथा पञ्च, कुत्रचिद्वा षड़ित्येवं भ्रमन्तोऽणवः सौरं जगदनुकुर्वन्तीव लक्ष्यन्ते । यथा सौरं मण्डलं केन्द्रीकृत्य पृथिवीबुधशुक्रादि-मण्डलानि यथासम्भवं स्वानुगतचन्द्रमण्डलै र्निर्द्दिष्टकारणेन परिभ्राम्यमाणानि सहैवाभितो भ्रमन्ति, स्वं स्वं कक्षमाश्रित्य, एवमणवोऽप्यणुम् । तत्र येषां तत्त्वानामेक एवाणुरेकमणु

परिभ्रमति, तेषां द्वाभ्यामेवैकं क्षुद्रं जगदिव लक्ष्यते। येषां पुनस्त्रयश्चत्वारः पञ्च वा परिभ्रमन्ति, एकमेव केन्द्रीकृत्य तैर्भ्रमद्भिः सार्द्धं सकेन्द्रः पूर्वापेक्षया बृहत्तरं जगदिवाणुः करोति। तत्रापि यत्रैकस्मादधिकानां द्वित्रिचतुःपञ्चानामणूनां भ्रमणं दृश्यते, तदा तेषामेको ग्रहस्थानीयोऽपरोऽपरावपरे वा चन्द्रोपग्रहस्थानीया भवन्ति। केन्द्रश्चैकः सूर्य्यस्थानीयः, तत्र यथा पृथिवी चन्द्रेण परिभ्राम्यमाणा सहैव तेन सूर्यमण्डलमभितो भ्रमति, तद्वदेव द्वित्र्यादिपरमाणुभ्रमणस्थले, एकेन द्वाभ्यां त्रिभिर्वा भ्राम्यमाण एकः परमाणुः सहैव तेन ताभ्यां तैर्वा केन्द्रीभूतमेकमभितो भ्रमतीत्यवगम्यते। सर्वेषामेव भ्रमणस्य कक्षः परिकल्प्यते। स च यथा सूर्य्यमण्डलं लक्ष्यीकृत्य पृथिव्यादिभ्रमणे पृथिव्यादीन् वा लक्ष्यीकृत्य तत्तदीयचन्द्रनियमित एव लक्ष्यते, तथैव नियमतो वेदितव्यः। तस्य च कक्षस्य परिधिमानं मण्डलमानानुसारेणावगन्तव्यम्। यथा—बृहस्पतिग्रहस्य पृथिव्यपेक्षयात्यधिकबृहन्मानत्वात् कक्षपरिमाणमतीव बृहत्, पृथिव्यास्तु तदपेक्षया क्षुद्रमूर्त्तेः कक्षमानं क्षुद्रतमं, तथा परमाणूनामणुवीक्षणादिभिरपि नयनगोचरताऽयोग्यानां क्षुद्रतममूर्त्त्यणुरूपमेव कक्षमानमवगन्तव्यम्। तच्चेयन्मात्रं क्षुद्रतमं यदनुमानप्रमाणादिभिरेव तदवगम्यते। आपाततस्तु परस्परं मिलितमेव परमाणुद्वयं त्रयं चतुष्कं वावगम्यते। वस्तुतस्तु न कस्यापि परमाणोः केनचित् परमाणुना सम्यक्मेलनमवधारयितुं शक्यते। एवं मेलनमेवाणूनां संयोग

इत्याख्यायते । एवमेव च संयुक्तमणुद्वयं द्व्यणुकं त्रयं चात्रत्या विपश्चितस्त्रसरेणुमाहुः । एवंसंयोगेन जातं त्रिंशत्परमाणूनां पिण्डमपि केचित् त्रसरेणुं वदन्ति, षण्णामपि केचित् । तस्मात् त्रसरेणुत्वं न द्व्यणुकत्ववत् पिण्डविशेष एव क्लृप्तं, किन्तर्हि, यस्य पदार्थस्य परमाणूनां स्वभाववशाद्रसायनतो वा प्रथमसंश्लेषणेन त्रिभिश्चतुर्भिः पञ्चषड्भिस्तदधिकैर्वा यः प्रथमपिण्डविशेषो निर्म्मीयते, स एव त्रसरेणुः द्वाभ्यान्तु निर्म्मितो द्व्यणुकमित्यवगम्यते । केचित् परस्परसंयुक्तं द्व्यणुकत्रयं त्रसरेणुं वक्तुमिच्छन्ति तदसङ्गतं मन्यामहे । न हि किंचिद्- द्व्यणुकं स्वभावतो निमित्तवशाद्वा अपरेणैकेन द्व्यणुकेन द्वाभ्यां वा संयुज्य पिण्डान्तरमुत्पादयतीति नियमोऽध्यवसातुं शक्यते, किन्त्वेकमेव परमाणुं केन्द्रीकृत्य केषाञ्चित् पदार्थाना- मेक एव परमाणुरभितो भ्रमति, केषाञ्चिद्द्वौ भ्रमतः केषा- ञ्चित् त्रयश्चत्वारः पञ्च षड् वा । तस्माद् येषामेको भ्रमति, तेषामेक एव, न तु द्वौ, येषां पुनर्द्वौ तेषां न कदाचिदेकस्त्रयो वा, येषां च त्रयस्तेषां त्रय एव, एवं चतुरादिष्वपि बोद्धव्यम् । तस्मात् परमाणुनिर्मितं प्रथमपिण्डमेव द्व्यणुकं त्रसरेणुश्चेत्यवसीयते । अणूनां संख्याभेदमात्रमेव विशेषः । अतस्त्रसरेणुर्न द्व्यणुक- परिणाम इति वस्तुगत्या व्यवस्थितम् । तथाहि,— जलजनकाणुः ( हाइड्रोजेनाणुः ) स्वजातीयेनापरेणैकेनाणुना संयुज्यमानो द्व्यणुकं निर्म्मिमाणोऽवतिष्ठते । नैतेन द्व्यणुकानां द्व्यणुकान्तर- संयोगो निराक्रियते, न वा त्रसरेणूनां त्रसरेण्वन्तरेण । तथा

सति स्थूलपिण्डारम्भ एव नोपपद्यते। द्व्यणुकानि हि त्रसरेणवो वा जलपारदादिव्यतिरेकेण प्रायेणैव वर्णितरूपेण स्वजातीयं विजातीयं वा परमाण्वन्तरं द्व्यणुकान्तरं त्रसरेण्वन्तरं वा परिभ्राम्य क्रमात् स्थूलानि पिण्डानि निर्म्मिमते। ततश्च पृथिव्यादिबृहत्पिण्डरूपाण्याविर्भवन्ति। यथा,— जलजनकस्य ( हाइड्रोजेनस्य ) द्व्यणुकं चन्द्रसहिता पृथिवीव सूर्य्यमम्लजनकस्य (अक्सिजेनस्य) एकं परमाणुमभितो भ्रमज्जलस्य प्रथमं सूक्ष्मरूपं सम्भावयति। स च जलव्यवहारभूमेः प्रथमसूक्ष्मरूपत्वाज्जलस्याणुरपि भवन् रूपद्वयघटितस्त्रसरेणुरेव वक्तव्यः।

नन्विदानीमेवोक्तं त्रसरेणवो न द्व्यणुकपरिणामाः, किन्तु परमाण्ववस्थात एवाविर्भूता इति। अत्र पुनरस्य जलीयपरमाणोस्त्रसरेणुत्वसिद्धान्तः कृत इति स्वमतं व्याहन्यत इति चेन्न, एवंविधत्रसरेणूत्पादस्याप्रतिषेधात्। स्वजातीयो हि त्रसरेणुः स्वजातीयेन केनचिद् द्व्यणुकेन स्वजातीयद्व्यणुकाभ्यां द्व्यणुकैर्वा नारभ्यते, किन्तु स्वजातीयैः परमाणुभिरित्युक्तम्। अयं पुनर्जलीयपरमाणुः परस्परविजातीयाभ्यां जलजनकैकद्व्यणुकाम्लजनकैकपरमाणुभ्यां ( हाइड्रोजेनैकद्व्यणुकाक्सिजेनैक परमाणुभ्यां) निर्म्मीयते, न तु द्व्यणुकैः द्व्यणुकाभ्यां वा स्वजातीयाभ्याम्। सोऽयमंशतो द्व्यणुकनिर्म्मितः परमाणुनिर्म्मितश्च। जलस्य चैतत् परमाणुत्रयात्मकं प्रथमं रूपं, नास्मात् सूक्ष्मं स्थूलं वास्य प्रथमं रूपमवगम्यते। अतः

प्रथमसूक्ष्मरूपत्वादयं जलस्य परमाणुः प्रकृतपरमाणुत्रयात्मकत्वाच्च त्रसरेणुरित्याख्यायत इत्यदोषः ।

विजातीयेनैकेनाणुना द्व्यणुकेन वा संयुक्तैनैकेन द्वाभ्यां त्रिभिस्ततोऽधिकैर्वा द्व्यणुकत्रसरेणुरूपै बहुविधान्येव पिण्डानि निर्मीयन्ते। यथा—एकाम्लजनकान्विताङ्गारकः द्व्यम्लजनकाङ्गारकः, त्र्यम्लजनकान्वितयवक्षारः (मनक्साइड् कार्वन् डाइअक्साइड् कार्वन्, ट्राइ अक्साइड्नाइट्रोजेन्) इत्येवमादीनि । तत्र एकाम्लजनकान्विताङ्गारको नाम (मनक्साइड कार्वन्) एकेनाम्लजनकेन (अक्सिजेन्) परमाणुना मिलितेनापरेणैकेनाङ्गारकपरमाणुना (कार्वन्) निर्मितो द्व्यणुकात्मकः पिण्डविशेषः । सोऽयं दह्यमानाङ्गारादिषु तेभ्य एकैकशो निर्गत्य वायुत एकमम्लजनकाणुं (अक्सिजेन्) समाश्लिष्याङ्गारकः, एकाम्लजनकान्विताङ्गारकं भजते। अयं पुनारसायनजातत्वाद्रासायनिको द्व्यणुक इत्याख्यायते। वर्णविहीनश्चायमन्यैः संयुक्तः स्थूलरूपोऽपि सन् न दृश्यते; विशिष्टपरीक्षादिभिश्च परिज्ञायते अयमेवमिति। अस्य सुदारुणविषरूपता चावगम्यते । अयं परस्परविजातीयाभ्यां परमाणुभ्यां निर्मितः पिण्डविशेषः ।

द्व्यम्लजनकाङ्गारकनामा (डाइअक्साइड्कार्वन्) तु द्वाभ्यामम्लजनकाणुभ्यां (अक्सिजेन्) द्व्यणुकनामभ्यां मिलित एकोऽङ्गारकपरमाणुः (कार्वन्) । सोऽयं प्रज्वलितात् प्रदीपादेर्निर्गत्य सन्निहितवायुतो द्व्यणुकरूपौ द्वौ अम्लजनकपरमाणू

('अक्सिजेन) संगम्य भवति। अयं च त्र्यात्मकत्वात् असरेणवाख्यानयोग्यः, रसायनजातत्वाच्च रासायनिकः, तथैव वर्णहीनो विषरूपश्चायम्। इत्येवमादीनि स्वजातीयविजातीयैस्त्रिभिः परमाणुभिर्निर्म्मितानि पिण्डानि।

अम्लजनकान्वितयवक्षारस्तु (ट्राइ अक्साइड् नाइट्रोजेन) त्रिभिरम्लजनकपरमाणुभिर्निर्मित एको यवक्षारपरमाणुः (नाइट्रोजेन)। सोऽयं चतुरात्मकपिण्डः परस्परैर्विजातीयपरमाणुभिराबद्धः। एवमन्यान्यपि बहूनि पिण्डानि परस्परविजातीयद्वित्रिचतुराद्यात्मकानि दृश्यन्ते। सर्वाणि चैवं रूपाणि रसायनत एव जातानि। सर्वत्रैव च केन्द्रकेन्द्रिभावेन नियमितं स्वं स्वं कक्षमवलम्ब्य विघूर्णनव्यापारो वर्त्तते; तादृशनियमितभावेनान्योन्यस्य यो नैकट्यसम्बन्धः स एव संयोग इत्यवोचाम। सोऽयं संयोगो नैकट्यविषये संयुक्तानां संख्याविषये च नियमितत्वेन कदाचिदप्यनन्यथाभावादणूनां स्वाभाविकधर्मत्वेनाप्राधान्येन च प्रतीयमानतया गुण इत्यभिधीयते। एवमवयवानामवयविनिर्म्मितौ परस्परसंयोगोऽपि विशिष्टव्यापारमन्तरेणान्यथा कर्त्तुमशक्यो गुण एव मन्तव्यः। यथा घटादिनिर्म्मितौ कपालादिसंयोगः। न हि तादृशसंयोगो घटादीनां भूतलादिसंयोग इव यथा कथञ्चिद् व्यापारेणावसादयितुं शक्यते वस्तुतस्तु येन संयोगेनाभिसम्बद्धस्य व्यक्तिद्वयस्यैकस्यां व्यक्तावाकृष्टायामपाकृष्टायां वा अपराऽपि आकृष्यतेऽपाकृष्यते च, तादृशसंयोग एव गुण-

स्थाने नेतव्यः । भूतलघटादिवृक्षवानरादिसंयोगास्तु न तथाभूताः, न हि तेषामेकस्मिन् समाकृष्यमाणेऽपाकृष्यमाणे वा अपरः समाकृष्यते चापाकृष्यते च । तस्मान्न ते गुणाः, किं तर्हि ? माध्याकर्षणक्रियायाः परिणामरूपाः । तस्मात् क्रियारूपा एव ते वक्तव्याः । क्रिया चात्र योगाख्या वेदितव्या ।

नन्वस्माकं गुणत्वेनाभिमताः संयोगा अप्याकर्षणक्रियाविशेषस्यैव परिणामत्वमभिपतन्तीत्यतो न तेषां गुणत्वसम्भवः, क्रियात्वेन सङ्करात्, इति चेन्न; तस्य क्रियाफलरूपधर्म्मान्तरत्वेन क्रियात्वाभावात् । तथाहि—भूतलादिषु यद्घटादीनां सन्निधानं, तद् भूतलादीनामाकर्षणफलमपि सत्, आकर्षणात् नातिरिच्यते । आकर्षणमेव घटादिरूपकर्मस्थं सत् न्यूनातिरेकभेदेन सन्निहितासन्निहिततरत्वादिनामभाग् भवति । यत्राकर्षणं न प्रबलं तत् सन्निहितं भवति । यथा भूतलादौ तुलकादिकं, यत्र तु तत् प्रबलं तत् सन्निहिततरं भवति; यथा तत्रैव घटादिकम् । आकर्षणस्य मात्रापरिचयाय सन्निहितादिवाक्योल्लेखो भवति, वाक्यभेदाच्च अर्थोऽपि भिन्न-इवाभाति । कर्मस्थत्वाच्च कर्मणो धर्म एवेति तादृशं नैकट्यं योगो घटादिधर्मश्चेत्युच्यते । यत् पुनर्द्व्यणुकत्रसरेण्वादीनां संयोगः स परस्पराभ्यां युध्यमानाभ्यामाकर्षणप्रतिक्षेपाभ्यां जातो धर्मविशेषः । इयद्दूरेणैवानेनावस्थातव्यं, नातः सान्निध्येन दूरत्वेन त्वेवं नियामकः । यस्मिंश्च सति न निकटतरो न वा तस्माद्दूरतरः कश्चिदणुर्भवितुं शक्नोति, अपि

तु बध्यमान इवाभितो भ्रमति, सोऽयं बन्धनरूपत्वात् सम्बन्धो नियतनैकट्यरूपत्वाच्च संयोग इत्याख्यायते ।

कपालादीनां च स्थूलपिण्डावयवानां संयोगस्तु असत्यपि भ्रमणहेतुत्वे द्व्यणुकाद्यवयवपरमाणुसंयोगवदुभयेषामाकर्षणफलरूप एव । तेषामपि ह्येकस्मिन् समाकृष्यमाणे विकृष्यमाणे वा अपरः समाकृष्यते विकृष्यते च, द्व्यणुकादिवद् घटादिपिण्डान्तरघटकश्च भवति । अत आकर्षणव्यापारभिन्नत्वाद् गुण एव ।

अयमेव च संयोगः परमाण्वादीनां विशिष्टधर्मतया पदार्थतत्त्वज्ञानविषयत्वादावश्यकविज्ञापयितव्यतया भगवतः कणादस्य द्रव्याणां गुणवर्णने उद्देश्यीभूत इत्यध्यवसायो न्याय्यः, न तु वृक्षादिषु कप्यादीनां संयोगः, तेषां तथाभूतत्वाभावात् । न हि वृक्षादिषु कप्यादीनां कस्मिंश्चित् संयोगे विज्ञातेऽविज्ञाते वा पदार्थतत्त्वज्ञानमुपचीयते, अपचीयते वा । येनासाववश्यमेव वृक्षकप्यादीनां गुणत्वेन विज्ञापयितव्यो भवेत् । आकर्षणव्यापारान्तर्गतत्वाच्च कर्मत्वेनाघ्राततया तत्प्रदर्शनेनैते प्रदर्शिता भवन्तीत्यधस्तादेवावोचाम । तस्मान्न वृक्षकप्यादिसंयोगा गुणा इति । विभागश्च न वृक्षकप्यादीनां गुणत्वेनाध्यवसातुमुत्सहामहे, प्रदर्शितादेव हेतोः, किन्त्वपसारणपरिणामत्वात् क्रियाविशेषा एव । गुणरूपविभागस्तावत् परमाण्वादिस्वभावजनितापसारणव्यापार-

फलरूपवस्तुविशेषेष्वेव नियमितः। यथा बहूनां जलजनकाम्लजनकद्व्यणुकानां (हाइड्रोजेनाक्सिजेन) केनचित् कारणेन राशीभावे सति विद्युदाद्यानुकूल्येनाम्लजनकद्व्यणुकानां (अक्सिजेन) प्रत्येकमेकैकस्य परमाणोर्विभागो भवति। वियुज्य च केवलीभूतः सन् जलजनकद्व्यणुकानां (हाइड्रोजेन) एकैकं समाकृष्य त्रसरेणुमूर्त्तिर्भवन् जलीयपरमाणुत्वेन परिणमति, न तु कदाचिदपि जलजनकद्व्यणुकसद्भावे सत्यम्लजनकद्व्यणुकं (अक्सिजेन) अवस्थातुं शक्नोति। अवश्यमेव तदवयवानां परमाणूनां परस्परविभागेन भवितव्यम्। सोऽयं विभागो गुणोऽम्लजनकपरमाणूनाम्। यथा वा तुल्यकाद् वस्तुविशेषयोगेन ताम्रिकाणां त्रसरेणूनां विभागो भवति। सति च तस्मिँल्लौहाधिक्येन हीराकष नाम वस्तु परिणमति; सोऽयं विभागो गुणस्तुल्यकस्य। यथा वा घर्षणादिना विद्युदुत्पादेन लाक्षादिवस्तूनां कस्मिंश्चिद्विभागधर्म्मो जायते, कस्मिंश्चिद्वा संयोगः। तावेतौ संयोगविभागौ लाक्षादीनां गुणाविति।

अथ तयोः संयोगविभागयोर्विज्ञानस्य वस्तुतत्त्वज्ञाने किमुपकारकत्वम्? अविज्ञाने वा का क्षतिरिति चेत् उच्यते,—आभ्यामेव संयोगविभागाभ्यां सर्वेषां मूर्त्तद्रव्याणामिदं तदिति तात्त्विको निर्णय उपपद्यत इति। तथाहि,—सर्वेषामेव तावद् धात्वधात्वादिपदार्थानां स्वजातीयेन विजातीयेन वा पदार्थेन नियमितौ संयोगविभागौ स्तः। कस्यचित् पदार्थस्य क्षणा-

मेव परमाणूनां संयोगो भवति,कस्यचित् पञ्चानां द्वयोस्त्रयाणां चतुर्णां वा, कस्यचिद्वा पदार्थस्यैकस्य परमाणोर्द्वाभ्यां विजातीयपरमाणुभ्यां, अपरस्य वा कस्यचिदेक स्त्रिभिः, कस्यचिद्वैकः पञ्चभिर्विजातीयैः परमाणुभिः संयुज्यते, विद्युच्च कस्मिंश्चिद् वस्तुनि उत्पद्यमाना संयोजिकैव भवति। कस्मिंश्चिद्विभागजनिकैव, कस्मिंश्चिच्च वस्तुनि कस्यचिद् वस्तुनो रासायनसंयोगो नियतभावेन भवति। कस्यचिच्च वस्तुनो विभाग इत्येवमादिरूपौ प्रकृतिनिर्दिष्टावेव संयोगविभागौ दृश्येते। ताभ्यां च संयोगविभागाभ्यां तत्त्वतो निश्चीयते, इदममुकद्रव्यमिति। असति च तथाभूतसंयोगविभागविज्ञाने नैवं निश्चयं कर्त्तुं शक्यते, विशेषतस्तु सन्देहपदे वस्तुनि। यथा खलु धातुषु त्रपुर्वा लोहं वा इत्येवमादिकः संशयो भवति। यो गुरुत्वादिभि र्निरसितुमशक्यः स पुनस्तद्गात्रसमुत्पन्नकलङ्कजनकानामम्लजनकाणूनां विशिष्टसंयोगद्वारेणैव परीक्षापूर्वकमपनेतुं शक्यते। धातूनां ह्यम्लजनकसङ्गमस्वभावानां कस्यचिद् धातोः परमाणुरम्लजनकपरमाणुद्वयमाकर्षति। ताभ्याञ्च विशिष्टसंयोगेन मिलितः सन् यथासम्भवं त्रिचतुरात्मकः सम्भूय कलङ्कादिनाम्ना द्रव्यान्तरेण विपरिणमति इत्येवं विशिष्टसंयोगो गुणरूपपदार्थविशेषतत्त्वविज्ञानहेतुर्भवति। विभागश्च लाक्षादिपदार्थानां विद्युदादितत्त्वविज्ञानमुपकरोतीति दिक्।

तदेवं संयोगविभागौ साधयन्ती आकर्षणप्रत्याकर्षण-

जनिता अणूनां भ्रमणक्रिया द्व्यणुकत्रसरेण्वादिरूपपिण्डानि निर्मिमीते। तैश्च पुनारासायनपाकादिजनितविशिष्टसंयोगेनाभिसम्बद्ध्यमानैः क्रमात् स्थूलतरपिण्डान्यचेतनत्वेन व्यवह्रियमाणानि समारभ्यन्ते। एवं क्रमेणेष्टकाघटघटिकासुवर्णरजतरङ्गगन्धकचूर्णादिसहितपृथिवीचन्द्रादिरूपसुबृहत् पिण्डनिर्माणं भवति।

अत्र बृहत्पिण्डस्य स्थूलावयवानां परस्पराकर्षणप्रत्याकर्षणाभ्यां परमाण्वादिवद् भ्रमणं यद्यपि नैव दृश्यते तथाप्यवयवान्तरेण सम्यङ्मेलनरूपसंयोगो न कस्याप्यवयवस्येह विद्यत इत्यवगन्तव्यम्। सर्वासामेव द्रव्यमूर्त्तीनां सच्छिद्रत्वावगमात्। पृथिव्या माध्याकर्षणेन प्रतिक्षेपबाधात् स्थूलावयवानामवयवान्तराभिमुख्येन भ्रमणं नोपपद्यते। सम्यङ्मेलनन्तु तेषामाकाशस्य परममहत्परिमाणस्याव्रणत्वादेव नोपपद्यते। यदि हि द्वयोः पिण्डयोः पिण्डानां वा मध्येऽवकाशघातं सम्यङ्मेलनरूपसंयोगः स्यात् तर्हि तत्राकाशस्याभावः प्रसज्येत। अवकाश एव हि तस्य रूपं व्रणश्च, एवं सति आकाशतलत्वमापतेत्। तस्मान्न कस्यचिद् वस्तुनो निरवकाशसंयोगः साधयितुं शक्यः।

ननु निरवकाशसंयोगेन यथाकाशस्य व्रणः प्रसज्यते, व्यापकत्वं च बाध्यते, तथा परमाणुमूर्तिभिरपि तस्य व्रणापातो व्यापकत्वबाधश्च समान एव, तन्निराकरणाय यदुक्तव्यं तेनैव निरवकाशसंयोगेऽपि व्रणापातव्यापकत्वबाधौ निरा-

क्रियेयाताम् । तस्मादाकाशस्य व्रणपातादिशङ्कया न पिण्डानां निरवकाशसंयोगः शक्यः प्रत्याख्यातुम् । परमाणुषु हि स्वीक्रियमाणेष्वच्छिद्रेषु सच्छिद्रेषु वा व्याहन्यत एव तन्मूर्त्तिभिर्नभसो व्यापकत्वं सच्छिद्रत्वं च साध्यत एव, इति चेद् बाढम् । यदि नाम परमाणूनां वास्तविक्येव सत्ता स्वीक्रियते, अवश्यमेव तर्ह्याकाशस्य व्यापकत्वबाधः सव्रणत्वं च तन्मूर्त्तिभिः प्रसज्यत एवेति सत्यं ; सैव तु तत्त्वविद्भिर्नाङ्गीक्रियते । एतद्देशीयास्तावद् भूततत्त्वविदो विपश्चितो भूतसर्ग आकाशादेव वाय्वादिक्रमेण शिष्टानां चतुर्णामाविर्भावं मन्यन्ते तच्चाधस्तात् प्रवेदितम् । अतः क्षित्यादीनामाकाशपरिणामत्वाद् मृद इव घटादिपिण्डेषु पृथिव्यादिभ्योऽभेदान्न तेषां स्वत्वेनाकाशस्य स्वत्वं बाध्यते, तस्मान्न नभसो व्यापकत्वहानिः, न वा सच्छिद्रतायाः प्रसङ्ग इति तत्त्वम् ।

अथानयैव रीत्या सम्यङ्मेलनरूपसंयोगाङ्गीकारेऽपि न कयाचिद्भ्रान्त्या भवितव्यम् । तस्मादस्त्ववयविनः स्थूलावयवानां परस्परनिरवकाशरूप एव संयोग इति चेत् पश्यसि तत्त्वम्, आस्तां तर्ह्ययं पक्षः । सच्छिद्रता तु सर्वेषां पिण्डानां प्रत्यक्षसिद्धा अनुमानान्तरेणाप्यनुकूलयितुं शक्यते, तच्च पिण्डं सच्छिद्रं सच्छिद्रारब्धत्वात् इत्येवमादिरूपम् । पिण्डारम्भकाणि हि द्व्यणुकानि त्रसरेणवो वा सर्वाण्येव सावकाशानि इत्यधस्तादवोचाम । तस्मात् साक्षात् तदारब्धस्य पिण्डस्यावयविनः सच्छिद्रत्वं, तैरपि सच्छिद्रैरारब्धस्य

तेनैव न्यायेन । तस्मात् स्थूलतरस्य पिण्डस्यावयविन: सच्छिद्रता भवेत् । तथा तदारब्धस्याप्यवयविन: सच्छिद्रत्वमित्यामहत्परिमाणात् पृथिव्यादिपिण्डात् सर्व्वास्वेव मूर्त्तिषु सच्छिद्रत्वमनुमातुं शक्यते । तस्मान्नास्ति कश्चिन्निरवकाशः संयोग इति व्यवसीयते । इत्येवमचेतनतया प्रतीयमानानां पृथिव्यादिमहत्परिमाणपिण्डपर्य्यन्तानां निर्म्माणं भवति ।

तेषां चावान्तरभेदानां तन्निर्मितानां भौतिकाभिधेयानाञ्च द्रव्याणां यथासम्भवं विज्ञानमावश्यकं तदभावेऽध्यात्मतत्त्वादिषु प्रवेशासम्भवात् ।

तत्रास्मद्देशे तत्तद्विषयकशास्त्राणां प्रायेण विलोपात् तदुल्लेखो न त्रिशिष्टसन्तोषमावहति । अन्यदेशीयानां पुनः सत्स्वपि बहुषु ग्रन्थेषु अनाप्तवाक्यतया छिन्नमूलत्वात् परस्परविरोधित्वात् सर्वदा विपरिवर्त्तित्वाच्च न ते प्रामाण्यमावहन्ति । तथापि बह्वनुसन्धानप्रयासपरीक्षादिमूलकत्वात् न त उपेक्षणीयाः । न च तेषां सर्व एव सिद्धान्ता: सर्वाङ्गैरेव भ्रमसमाच्छन्ना: । तस्मादुक्तेऽर्थे प्राचीननवीनभेदेन विदेशीयविपश्चितां मतमादौ समुपन्यस्यते । तत्र श्रोतृणां श्रवणव्यापारपरिवर्त्तनेन यद्यल्पमपि सुखमावहेदित्यभिसन्धाय छन्दसा एव कथ्यते ।

अत्रेदं चिन्त्यते,—परमाणूत्पत्त्यादिविषये अस्माकं वैशेषिकादिव्याख्या तत्त्वार्थव्यभिचारिणी न वेति । तत्र बहुविप्रति-

पत्तिदर्शनाद् व्यभिचरत्येवेयं तत्त्वार्थमिति अनेके विपश्चितोऽपि वर्णयितुमुत्सहन्ते, वयन्तु भगवतो वैशेषिकप्रणेतुः कणादस्य तथाविधमुपालम्भनं सोढुं क्लिश्यामहे। तस्मात् सत्यताया एवैतद्व्याख्यानस्य प्रतिपिपादयिषया प्रथमतस्तावत् तत्त्वातत्त्वते एव चिन्तयिष्यामः। तत्र ये वैशेषिकराद्धान्तमतात्त्विकं मन्यन्ते, तान् पृच्छामः का तत्त्वता का च अतत्त्वतेति। प्रमितिविषयत्वमेव तत्त्वता इति चेन्न, अन्योन्याश्रयात्। यथावद्वस्त्ववधारणं प्रमितिर्वक्तव्या। यथावत्त्वञ्च पुनः प्रमितिविषयित्वमिति। अथ ज्ञानान्तरेणाबाधितत्वमेव प्रमात्वमुच्यते। यस्मिन् स्थले प्रमितिसिद्धेष्वपि विषयेषु भ्रमे उत्पन्ने पूर्वप्रमितावेव भ्रमत्वमारोपयन् भ्रमे प्रमात्वमवधारयेज्ज्ञाता; तदा प्रमाया भ्रमेण बाधितत्वादव्याप्तिः। अथानुमानादिना तत्र भ्रमो बाध्येत इति चेत् न, हेत्वादीनामज्ञानेन सर्वज्ञानुमानादीनामप्रसारात्। ताम्रिककार्षिकादिषु हि ताम्रिकत्वादिनैवाधृतेषु ताम्रवद्दृश्यमानैर्धात्वन्तरैरपि तथाविधमुद्राणां बाहुल्येन प्रचारात् पुनः संशये जाते ताम्रिककोटीमपहाय पाश्चात्यभाषया ब्रञ्जादिसंज्ञितधात्वन्तरकोटीमेव संस्पृजति ज्ञानं प्रायेण। तत्र च भ्रमं प्रमात्वेनावधारयति प्रमाञ्च भ्रमत्वेन। न तत्र हेत्वादिज्ञानं सुलभं, ताम्रादिषु परस्परभेदकधर्माणां विज्ञानवद्भिरेव विशिष्टपरीक्षणेन तेषां भेदः प्रतीयते, ततश्च हेत्वादयः। तदविज्ञानवतां पुनः कदाचित् ताम्रादिबुद्धिरवधारणरूपैव सम्भवति। एवमन्यत्रापि बहुषु

स्थलेषु सम्भवेदिति । न ज्ञानान्तराबाधितत्वं प्रमात्वमित्यवधारयितुं शक्यते । एवं च गत्यन्तराभावाद् यथावदर्थविषयत्वेनैव प्रमा लक्षणीया । ततश्चेतरेतराश्रयः । अतः प्रतीयमानजातिगुणादिधर्मविशेषसहकृतव्यवहारयोग्यत्वमेव तत्त्वतेति वक्तव्या । एवं च सति वस्तुनि यादृशावस्थायां ये ये धर्म्माः प्रतीयन्ते, तैः सह तस्य वस्तुनो यो यो व्यवहारः सम्भवति तद्व्यवहारयोग्यतायां सत्यां तस्य वस्तुनस्तत्त्वता वक्तव्या । तथा च स्नेहादिचतुर्दशगुणवत्तया प्रतीयमानस्य तैर्गुणैः सह व्यवहारयोग्यत्वमेव जलस्य यथावत्त्वमायाति । तत्परमाणवश्चासंयुता द्व्यणुकास्त्रसरेणवो वा यद्यपि न तथा व्यवहर्त्तुं शक्यन्ते, तथापि सम्भूय व्यवहार्य्यत्वादस्त्येव तेषां व्यवहारयोग्यतेति न जलत्वं व्यभिचरन्ति । मृगतृष्णादयस्तु इदं जलमिति ज्ञानानन्तरं भ्रान्तिमतः पुरुषस्य जलोदकादिवाक्यव्यवहारे पिपासोश्च तत्प्राप्तये गमनादिव्यवहारे सत्यपि स्नेहादिगुणवत्तया पानावगाहनादिव्यवहारयोग्यत्वाभावात् न जलत्वमतिप्रसञ्जयन्ति । तस्मात् तत्र यथावदर्थविषयकत्वाभावाज् जलत्वज्ञानं भ्रम एव ।

तस्मात् कणादादिभिर्ये जलपरमाणुत्वेन लक्षितास्ते त्र्यात्मकत्वात् तत्प्रत्येकापेक्षया त्रसरेणुत्वेऽपि तदवस्थायामेव जलव्यवहारयोग्यपर्य्यवसानात् तद्व्यवहारयोग्यानां मध्ये सूक्ष्मतमत्वाच्च जलसम्बन्धिनः परमाश्चाणवश्चेति पर-

माणव एव । द्व्यणुकत्रसरेण्वादयश्च जलस्य तादृशाणूनामेव द्विकत्रिकादिरूपा बोद्धव्याः ।

ननु द्व्यणुकत्रसरेण्वादयः शब्दाः सूक्ष्मत्वपर्य्यवसानानामेवाणूनां द्विकत्रिकादिषु शक्ता नापेक्षिकाणुद्विकत्रिकादिष्विति चेत् न ; "अण्व्यो मात्रा विनाशिन्यो दशार्द्धानां च या मताः" इत्यादि स्मृतिभिः ; "नाणुनित्यता तत्कार्य्यत्वश्रुतेः," "तन्मात्रेभ्यः स्थूलभूतानि" इत्यादिसांख्यसूत्रैः, "षड्विशेषाः, अविशेषाद्विशेषारम्भः" इत्यादिपातञ्जलसूत्रैः, "एतेन मातरिश्वा व्याख्यातः" "तेजोऽतस्तथा ह्याहेत्यादिशारीरकसूत्रैः, "स ऐक्षत बहु स्यां प्रजायेय तत्तेजोऽसृजत तदैक्षत प्रजायेय, तदपोऽसृजत ता आप ऐक्षत, बहु स्याम प्रजायेमहीत्यादि श्रुतिभिः, प्रत्यक्षानुमानाभ्यां जलादिपरमाणूनां सूक्ष्मत्वावसानबाधेन कार्य्यत्वप्रतिपादनादापेक्षिकमेव तेषामणुत्वं तद्द्विकत्रिकादिष्वेव द्व्यणुकादिशब्दाः शक्ता इति वक्तव्यम् । मौलिकत्वं च तेषां जलव्यवहारापेक्षयैव । तदवधिरेव हि जलव्यवहारारम्भः, न तु तदुत्पत्तेः प्राग् जलव्यवहारः । नित्यत्वं च तेषां तत्कार्य्यभूतानामापेक्षिकस्थूलपिण्डानां सर्वेषामेव विनाशेऽपि सत्त्वात् तत्कार्य्यापेक्षयैव । न तु ध्वंसोत्पत्तिरहितत्वमित्यवोचाम । इत्येवमापेक्षिकं जलानां सूक्ष्मावस्थायामस्मदीयैरणुत्वं व्यवस्थापितम् । एवं क्षित्यग्निसमीरणानामपि गगनस्यापि तथैव । तस्मात् प्रमाणान्तरविरोधेऽपि नोपालब्धव्यो वैशेषिकराद्धान्तः कणादो वा ।

अथ स्थूलपृथिव्यादिपरमाण्वन्तानामुपादानभूतानामन्यपदार्थानां सत्त्वेऽपि किमर्थमेष्वेव जगत्कारणत्वं व्यवस्थापितं भगवता कणादेन ? कुतो वा एवमणुत्वादिकमिति चेत् प्रथमव्यवहारभूमिसमवस्थितपदार्थतत्त्वविज्ञानार्थमिति ब्रूमः। व्यवहारश्चात्र तत्तद्वस्तूनां तत्तत्क्रियागुणादिभिः सह प्रत्यक्षादिना स्वीकाररूपोऽन्वयविशेषः। तस्याभिव्याप्तिकालस्तद्व्यवहारभूमिः। मानवानां किल आजन्मतो यादृशक्रियागुणादिधर्मैः सह यैर्यैः पदार्थैर्येन केनचित् प्रकारेणोपकार्योपकारकभावान्वयः प्रवर्त्तते, शरीरावयवानामिन्द्रियाणां प्राणानां वा स तैः सह व्यवहारो वक्तव्यः, तद्व्यवहारविशिष्टकाल एव प्रथमव्यवहारभूमिः। प्राप्तवताञ्चाधिकं वयो ज्ञानाभ्यासेन व्यवहारान्तरं कृतवतामपि यावत्कालमाजन्मारब्धव्यवहाराणामनुवर्त्तनं भवति, तावत्पर्यन्तमेव व्यवहारस्य प्रथमभूमित्वं कल्पनीयम्।

के तर्ह्यस्माकं प्रथमभूमिगताः पदार्थाः ? कानि च तेषां तत्त्वानि ? शीतलोष्णकठिनतरलत्वादिगुणवन्त आश्रयदानाप्यायनसन्तपनादिक्रियावन्तश्च मृज्जलादय इति ब्रूमः। अतएव हि एभिर्धर्मैः मानवजीवैः प्रथमं परिचीयन्ते।

इह तावत् मातापितृडिम्बबीजविशेषसम्बन्धो जीवानां देहजन्मारम्भ उच्यते, तस्य पुंसां पञ्चषड्विंशवत्सरपरिसमाप्तावपि गर्भान्निर्गमने विजातीयावस्थापातात् तन्निर्गमनमेव सततं जन्मतया व्यवह्रियते। तत्र गर्भवासादवस्था

उच्यते,—उल्वे तावत् बहुपदार्थमिश्रितकवोष्णसलिलपूर्णोऽधः शिराः शयानो घ्राणो न नभसोऽवकाशदानस्वभावं स्फुटतयोपलभते, न च शैत्यं, डिम्बबीजसम्बन्धान्तरमेव कोष्णपदार्थसंवलितत्वात्। तदुष्णत्वञ्चानुभवन्नपि न तेन सुखी क्रियते, न वा दुःखी उत्पत्तित ऐक्यरूपेणानुभवात्; ऐकरूप्यानुभवेन च तस्य स्वभावान्तर्भावात्। न हीदानीमपि यस्य शरीरे यादृशो तापमात्रा शैत्यं वा तादृशेनैव रूपेण तं तच्छैत्यं तापश्च व्यथयति सुखयति वा। गर्भाशये आक्लिष्टमाणो भ्रूणः कम्बलनिर्भेदानन्तरं सहसैव गर्भद्वारात्तु निर्गतो जीवो बाह्यस्य वायोः शैत्यमनुभवन् तत्सहितस्य चाकाशस्य गर्भावस्थानो ऽवकाशविशेषेणावकाशस्वभावञ्च कथञ्चित् परिचिनोति। तेन च पीड्यमानो रोदिति। इत्थमसौ जीवः प्रथममाकाशं वायुञ्चैकद्विकाभ्यामेव धर्माभ्यां परिचितवान् भवति। तदानीमेव च धात्र्या हस्ताभ्यां गृह्यमाणो भूमौ वा निपतन् काठिन्येनाश्रयत्वेन च क्षितिमप्यनुभवति, प्रक्षाल्यमानश्च स्नेहद्रवत्वादिभिर्जलमपि, ततश्च प्रज्वलितेन वह्निना सन्तपनात् तमपि तापेन।

न च गर्भे एव तापानुभवात्, उल्वीयजलेनैवावगाहमानत्वात् हस्तपदादिभिर्गर्भाशयस्य स्पर्शाच्च गर्भे एव सर्वान् परिचिनोतीत्यापातनीयम्। तदानीं सन्नप्यनुभवो जानामि इत्यनुव्यवसायस्यातिशयेन जडितत्वात् अननुभवक्षेत्र एव पर्य्यवसाययितव्यः। यथा इदानीमपि सततमेव देहेन्द्रिया-

दीनामनुभवस्य विद्यमानत्वेऽपि इदमहं जानामीत्यनुव्यवसायस्यास्फुटत्वादविद्यमानतेवाभासते। यदा तु केनचित् कारणेन कस्यचित् शरीरयन्त्रस्य तत्क्रियाया वा कस्याश्चिद् विपरिणामो भवति, तदीयरसधात्वादीनां वा तदैव स्फुटतमोऽनुव्यवसायो भवति; व्यवसायश्च तदानीं स्फुट एवेति वक्तुं शक्यते। तथा गर्भाद् विमुक्तस्यापि सहसानुभूयमानानां शीतोष्णादीनां विपरिवर्त्तनात् कथञ्चिदनुव्यवसायश्च स्फुट इति वक्तव्यः।

एवं जातमात्रो मृज्जलादीनि भूतानि सह धर्मेणानुभवन् मात्रा धात्र्या वा मधु दुग्धञ्च पाय्यमानः सान्तरेऽङ्के शय्यायां वा शाय्यमानः सह मधुरत्वादिधर्मैस्तेषां क्षित्यादितोऽनन्यत्वेऽपि नामधेयान्तरेण। व्यवहृतत्वात् प्रकारान्तरेण विपरिवर्त्तनाच्च ततोऽन्यदिव किञ्चिद् विजानाति। इत्थमितः प्राथमिकव्यवहारभूमेरारम्भः।

ततश्चायं प्राग्भवीयैः संस्कारैः पितुर्मातुर्वा संक्रान्तैर्यच्च त्वं कारणं मत्वा सन्तुष्यसि तेनैव वा सर्वेषामिन्द्रियाणां प्राणानाञ्च सान्तःकरणानां यथायथं नियोगेषु व्याप्रियमाणो यथास्वं विषयेषु तानि स्वयन्त्राणि व्यापारयति। यथा दर्शनाय नयने, श्रवणाय श्रुती, पानभोजनाभ्यां मुखजिह्वे, ग्रहणाय हस्तौ, गमनाय पादावित्येवमिति। तानि च यावतिथं सामर्थ्यं लभन्ते तावत्परिमाणमेव स्फुटं स्वं स्वं

विषयं संगृह्णन्ति, अनुव्यवसायस्य च स्फुटता सह तेनैव वर्द्धते । तथाहि जन्ममात्रेण तावच्छिशुश्चाक्षुषयन्त्राणां यथाविधि निर्माणाभावात् पश्यन्नपि न पश्यतीव । तदानीं दृश्यजातं तस्य नयनप्रान्तं प्रसर्पदपि न वर्णानां यथायथ-व्यवच्छेदेन परिस्फुरति, किन्तु विमिश्रिताकारेण । यथा इदानीमप्यस्माकं सूर्य्यालोकश्चक्षुषि ज्योतिर्मात्रेणावभासते, त्रिशिरस्ककाचादिसहायेन तु रक्तपीतादिभेदेन व्यवच्छिद्य प्रकाशते एवं शिशूनामव्यवच्छिन्नमपरिस्फुटं दृश्यं नयना-भ्यन्तरस्थैर्न्ययन्त्रैरपि न सम्यङ् मनःस्थानपर्य्यन्तमुत्था-पयितुं शक्यते, अस्फुटभावेनैवोत्थाप्यते, मनोयन्त्रस्य तद-भ्यन्तरस्थस्य चानुव्यवसाययन्त्रस्य सम्यङ्निर्मित्यभावेन तद्वस्तुनो दर्शनमनुव्यवसायश्चातीवास्फुटतरो भवतीति पश्यन्नेव न पश्यतीत्युच्यते । ततस्तेनातृप्यमाणो बालः प्रागुक्त-दर्शनसंस्कारवशेन दिदृक्षापरायणः पुनः पुनर्दर्शनार्थं चेष्टमान आजागरणादेव मुहुर्मुहुर्नयनयन्त्रं व्यापारयति । व्यापार्य-माणञ्च दर्शनेन्द्रियं मस्तिष्कान्नयनप्रान्तपर्यन्तं विसर्पत् स्नाय्वादियन्त्रोपादानभूतानवयवान् सूक्ष्मान् समालोडयति, विद्युदिव लौहतारादीन् । तेन च समालोडनेन तद्गमनागमन-पथावकाशदानाय ते अवयवा व्याप्रियन्ते, तद्व्यापारेणैव येनैतद् विसर्त्तुं प्रतिसर्त्तुञ्च शक्नोति, तेन प्रकारेण यथायथं संहत्यावतिष्ठन्ते । तेन च संस्थानेनास्य नयनेन्द्रियस्य विषय-ग्रहणाय गमनागमनपथः क्रमेण निराकुलीभवति । अत्र

चानेनैवेन्द्रियव्यापारेण प्राणस्य पोषणवृत्तिः परिचालनवृत्तिश्च परिस्फुरन्ती शिरादिप्रसृताद्रुधिरादिकात् तत्तद्यन्त्रपोषणानुकूलरूपाणि विविधद्रव्याणि समाकृष्य विपरिणमय्य च तत्तद्यन्त्रावयवत्वेन व्यवस्थापयति। एवं नयनयन्त्राणां पुष्टेर्निर्माणस्य चारम्भो भवति। अनेनैव नियमेन नयनयोः क्रमेण वृद्धया समाप्तिर्भवति आ पञ्चषड्विंशवर्षात्, मस्तिष्कस्य तु आचत्वारिंशवर्षाद्वयसः। दर्शनं ज्ञानमनुव्यवसायश्चैवं क्रमेण सहैव यन्त्रपटुत्ववृद्धया क्रमेण स्फुटीभूयाधिकतरप्रकाशप्रयत्नं शिथिलयति।

एवं श्रवणस्पर्शनरसनघ्राणात्मकानां ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च वागादीनां सर्वेषां प्राणानाञ्च क्रियाप्रबन्धः। तत्फलरूपाणां श्रवणादिज्ञानानां सानुव्यवसायानां प्राणव्यापारफलानाञ्च भुक्तपीतद्रव्यपरिपाकादिरूपाणां उक्तयैव रीत्या स्वस्वयन्त्रपरिपुष्टिनिर्मितिभ्यां सहैव वैशद्यलाभो भवति। पुष्टिनिर्मितिसमाप्तिश्चैवमेव।

अनयैव रीत्या बालस्य प्राथमिकव्यवहारभूमेरारम्भात् परं व्यवह्रियमाणानां व्योमवाय्वग्न्यादीनां तन्निर्मितानां च मधुपयःप्रभृतीनां पानभोजनानां स्निह्यन्तीनाञ्च हृदयाङ्कादिधारणपोषणादिव्यापारैर्मातृधात्र्यादीनां प्राथमिकोऽस्फुटपरिचयः। तदनन्तरं शयननिकेतनवसनाच्छादनादीनां लड्डुककन्दुककृत्रिमपुत्रिकादीनां घटघटिकापटपटिकादीनां च विशिष्टरूपरसस्पर्शादिव्यवहारेण तथैव परिचयः। एवं पितृ-

भ्रात्रादीनां च करामर्षणहर्षणसान्त्वनादिव्यापारैर्वात्सल्यं संक्रामयतां भावो जायते।

इत्थमविशदे रूपरसादिविषयाणां सम्बन्धिनां च मात्रादीनां ज्ञप्तिमात्रे उपजाते सहैव तत्तज्ज्ञानवैशद्यकरणेच्छयामीषां विशेषणान्तरसंजिघृक्षया च परस्परभेदव्यपदेशाय व्यवहाराभ्याससिद्धये स्वगतानुभवस्य पुरुषान्तरसमुद्बोधनायोपायान्वेषणं भवति। तत् पुनरन्वेषणं मात्रादीनां सम्भाषणेन परस्परालपनेन च तदानीं व्यवह्रियमाणानां सर्वविधानां वस्तूनां सम्बन्धिनां च मात्रादीनां तत्तद्देशीयप्रकृत्यनुरूपनामश्रवणमनुकूलयति। स हि बालस्तदानीं तानि नामान्यवधारयितुं चेष्टते। उरःकण्ठताल्वादियन्त्रप्रयोगेण च स्वतः शब्दाकारेणाभिव्यञ्जयितुमीहते। चेष्टापटुत्वानुसारेण च तस्य नामात्मकानां शब्दानां वैशद्यविशेषपरम्परा भवति। एवं क्रमेण तदानीं सततव्यवह्रियमाणानां गन्धरसरूपस्पर्शशब्दानां पानभोजनानाञ्च द्रव्याणां पयोऽम्बुलड्डुकादीनां शय्यासनवसनकन्दुकक्रीडनकादीनां परिकररूपाणां सम्बन्धिनां च जनन्यादीनां यथायथनामावधारणं, यथासम्भवं तदभिव्याहारशक्तिश्च संवर्तते। समं च तेनैव नयनादीनामिन्द्रिययन्त्राणां पुष्टिवृद्ध्यनुरूपं सर्वेषामेव व्यवह्रियमाणानां विशेषणसमूहाभिज्ञता, तदनुरूपं च तेषां परस्परपार्थक्यादिज्ञानं तदनुसारिणी च व्यवहारपरिपाटी जायते। अनेन च द्रव्यादिव्यवहारेण सहैव देहयन्त्रैः सेन्द्रियाग्रहस्यमन्तःकरणानां प्राणानां च, तैश्च सममात्मनस्तादात्म्य-

सम्बन्धेन व्यवहारः सम्प्रवर्त्तते, सत्यपि कार्य्यकारणकर्त्तृत्व-भेदे विषयविषयिभेदे च सम्भूय क्रियाकारकत्वेन प्रत्येकं क्रियाभेदे सत्यपि सङ्करेणोद्भासनात् । तत्र शरीरयन्त्रैः सममिन्द्रियाणां प्राणानां च क्रिया भवति, तैश्च सह मनसः, मनसा चाहङ्कारस्य, तेन बुद्धेः, बुद्धिवृत्त्या चात्मनः प्रकाशः । एवं च सति आत्मनो बुद्धिवृत्तितादात्म्यादहङ्कारतादात्म्यं, तत्तादात्म्यान्मनसस्तादात्म्यं, तत्तादात्म्यादिन्द्रियाणां प्राणानां च, तत्तादात्म्याच्च देहस्य, इत्येवं सर्वेषामेकीभाव उपजायते । ततश्चानुकूलप्रतिकूलपरामर्शाभ्याममीषामेकतमे परामृष्टेऽन्यतमोऽपि ताभ्यां परामृश्यत इत्येवं परस्पराभिसम्बन्धः प्रवर्त्तते । तस्माच्च ममेयं माता, ममायं पिता, अयं भ्राता, इयं भगिनी, क्षुद्रोऽहं, एते बृहन्तः, दुर्बलोऽहं, एते बलीयांसः, मया गन्तव्यं दण्डायितव्यं वक्तव्यं कर्त्तव्यमित्येवमाद्या व्यवहारधाराः प्रसरन्ति । इत्येवं आगर्भसेकाद् आ च पंचमहायनात् प्राथमिकी बालव्यवहारभूमिरित्याख्यातुं शक्यते, तथा प्रत्यक्षात् ।

तत्रागर्भवासात् सत्यपि व्यवहारे तस्याकर्मण्यत्वं प्रदर्शितम् । जन्मनस्तु परं प्रकृतव्यवहारारम्भ इत्यवोचाम । तस्य च व्यवहारस्य स्वारूप्यभेदेन पर्वभेदं कल्पयित्वा प्रथमद्वितीयादिभूमय उपन्यस्यन्ते । तत्कल्पनया च आ पंचमवर्षात् बालव्यवहाराणां प्रथमभूमिरुक्ता, अतः परमा षोडशाद् द्वितीया भूमिः ततश्चापञ्चविंशात् षड्विंशाद्वा तथा दर्शनात् तृतीया भूमिः कल्पनीया । अतः परन्तु ज्ञानानुशीलनाभावे

आ शततमवर्षादपि तस्य प्रथमव्यवहारभूमित्वं नान्तर्धत्ते, ज्ञानानुसारिणी हि प्रथमभूम्यादिकल्पना। यस्य वार्द्धक्येऽपि क्षितिजलादिभूतानां तन्निर्मितानाञ्च सर्वप्रकारदृश्यानामापातदृष्टिजनितज्ञानमेवावतिष्ठते स तावत् पर्य्यन्तं व्यवहाराणां प्रथमभूमावेवावस्थित इति वक्तव्यम्। यत्तु आ पञ्चविंशात् तृतीयभूमित्वं कल्पितं तत् स्वाभाविकशारीरयन्त्रावलिपरिपुष्ट्या सह स्वभावत एव या ज्ञानस्य वृद्धिर्भवति तदपेक्षया वेदितव्यम्। शरीरपुष्टिर्हि आजन्मनः पञ्चविंशे षड्विंशे वा वर्षे समाप्नोति क्रियाप्रवाहश्च तत्पुष्टेः कारणमित्युक्तम्। तथा च ज्ञान-प्राण-परिचालनक्रियाणामवश्यम्भावित्वात् ता आदाय व्यवहारभूमयः परिकल्पिताः। पञ्चमवर्षात् परन्तु तादृशपुष्टेः क्रियाणाञ्चाप्रवृत्तेस्तावत् पर्य्यन्तमेव प्रथमभूमित्वं परिकल्पितम्। अतः परन्तु विशिष्टज्ञानाभावात् प्रथमभूमित्वे सत्यपि नैवं दृष्ट्या तत्त्वमिति तस्य पञ्चविंशतिवर्षोऽवधिरुक्तः। एतद्भूम्यवस्थितानामेव मानवानां परवर्त्तिभूमिप्रवेशाधिकाराय तदुपयोगिज्ञानप्रसारार्थं कणादादिभिर्भगवद्भिर्नानाविधसिद्धान्ताः प्रकटिताः।

अत्रावश्यकत्वात् कार्य्यकारणयो र्भेदाभेदौ चिन्तयामहे। तत एतत् प्रकरणं समाप्तिमेष्यति। तत्रायं प्रश्नः, यानेतान् विषयभेदान् समाश्रित्येयं व्यवहारभूमिः प्रवर्त्तते, विचारदृष्ट्या तेषां कारणातिरेकसिद्धेर्यद् घटपटादिवत् कारणेभ्यो भिन्नताज्ञानं तत् किं भ्रमात्मकं, उत प्रमा वेति? कारणानामभ्योऽपि

कार्य्याणां भिन्नवस्तुवद् यद् भिन्ननाम व्यपदेशः, सोऽपि भ्रान्ति-मूलको न वेति च? अत्र कारणशब्देन घटपटादिकार्य्याणां मृत्तूलकादिवत् कपालसूत्रादिवच्चोपादान-समवायिकारणे लक्ष्येते। तत्र मृद्घटावुरीकृत्य प्रथमं वस्त्रतूलके एव उपस्थाप्य विचार्य्यते। किं वस्त्रं तूलकाद् भिन्नं आहोस्विदभिन्नं वा? तथा सूत्रेभ्योऽपि तूलको भिन्नोऽभिन्नो वेति? तत्रोभयोरेव पक्षयो र्व्यवहारो दृश्यते; तदेतेन मीमांसनीयम्। अनेनैव च सर्वेषां कार्य्यकारणानां मीमांसा सेत्स्यति। तथाहि,-तूलका एव हि परस्परं सुदृढं सम्बद्धा एकीभूता इव सूत्रनाम्ना आख्यायन्ते। त एव पुनः समावेशवैचित्र्येण वस्त्रमिति, न तूलकेभ्यः सूत्राणि वस्त्रं वा तत्त्वतो भिद्यते। व्यवहारस्त्वेतेषां भेदमुपपादयति। न हि कश्चिद् वस्त्रं सूत्राणि वा तूलकरूपेण व्यवहरति, तूलक-नाम्ना वा वस्त्रञ्च सूत्ररूपेण सूत्रनाम्ना वा तूलकाभिधेयं वस्तु सूत्रवस्त्रयोश्च तूलकपरिणामत्वं विजानन् प्रौढोऽपि। शिश-वस्तु द्वित्रिचतुःपञ्चहायनाः प्रायेण प्रथमं वस्त्रमेव वस्तुविशे-षत्वेन विजानन्ति ततो वा सूत्राणि। तूलको येषां व्यवहारभूमि-मापतति, ऋते तेभ्यः केचन वस्त्रसूत्रयोः तूलकं नैव विजानन्ति यथानियमं कार्य्यकारणभावञ्चैतेषाम्। तस्माच्छिशव इतरे वा वस्त्रादीन्यानयनादिव्यापारेषु भेदेनैव सर्वाणि व्यवहरन्ति। अन्येषामपि सर्वेषां परिकरद्रव्याणां तूलकरोमदार्वादिप्रकृतीनां आशिशुभ्यः आ च वृद्धानां व्यवहार एवमेव लक्ष्यते। तथा क्षितिसलिलमयानां अन्नव्यञ्जनदुग्धादीनां भक्ष्यपानानां तेभ्यो

भेदेन व्यवहारः । तन्मयानाञ्च पुनारसरुधिरादीनां मांसास्थिमेदोमज्जशिराधमन्यादीनां तेभ्यो भेदेन, तेभ्यश्चापि भेदेन तत् समष्टिरूपाणां शरीराणां व्यवहारो दृश्यते । इत्थं भेदव्यवहारपरम्पराप्रसिद्धिः । विचारतस्तु तूलकसूत्रादीनां रोमदारुकम्बलपीठादीनां क्षितिजलान्नपानादीनामन्नव्यञ्जनरसरुधिरादीनां रसरुधिरमांसास्थिमेदोमज्जस्नायुशिराधमनीशरीराणां न शक्यते प्रत्याख्यातुमभेदः । अत्र भेदाभेदयो विरुद्धत्वान्न द्वयमवस्थातुं शक्नोति प्रमाभ्रमयोश्च तथैव । तस्मादेक एव पक्ष आश्रयणीयः । तत्र चेद् वस्त्रादीनां तूलकादितोऽभेद एवाश्रीयेत भ्रमत्वञ्च भेदप्रत्ययस्य उभयस्यैवानुपपत्तिः अभेदत्वभ्रमत्वलक्षणयोरव्याप्यत्वात् । अतद्वति हि तत् प्रकारिका बुद्धि भ्रमः, अभेदत्वञ्च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावाभाववत्त्वम् ।

येनार्थक्रियाकारित्वरूपेण धर्मेण वस्तु वस्त्रमित्यभिधीयते, स धर्मस्तत्र नास्ति येन तदतद्वत् स्यात्, सन्नेव तत्र वयनव्यापारसाध्य ओतप्रोतभावः । आच्छादकत्वादियोग्यत्वञ्च वस्त्रीयव्यवहारमापादयन् तत्र तूलकादिभ्यो भेदं प्रत्याययति । तथा प्रतीत्य च तस्य तूलकसूत्रनामानि परित्यज्य वस्त्रमिति नामान्तरं व्यवहरन्ति लौकिकाः । तस्मादियं बुद्धिर्न तद्वति तत् अतो न भ्रमः । इत्येवमस्याः प्रतीतेः प्रमात्वे । अत्रैव पुनस्तूलकादीनामभेदप्रत्ययः, अनेनैव भ्रमपक्षे निक्षिप्यते । न हि एकस्मिन्नेव वस्तुनि भेदाभेदप्रत्यययोरुभयोरेव प्रमात्वमुप-

पद्यते । तस्मान्नास्ति वस्त्रतूलकादिनामभेद इति वक्तव्यम् । अतोऽनुवृत्तेष्वपि कारणधर्मेषु कार्याणां भेदपक्ष एवाश्रयणीयः व्यवहारबलात् । अभेदप्रतीतिश्च यत् कार्यकारणयोः प्रमात्वमावहति, तत् कार्यकारणयोर्नामव्यवहारभेदनिर्वर्तकान् संस्थानादिरूपान् विशेषधर्मानपोह्य कारणानां कार्याणां चावयवगतसामान्यधर्मेण, न तु तेषां भेदव्यवहारनिर्वर्तकधर्मेण । तथा हि,-यदा वस्त्रं पश्यन् समुद्भासितपरिधाननिर्वाहकसंस्थानादिरूपविशेषधर्मान् वस्त्रेति नाम च प्रत्येति. तूलकस्यापि समुद्भासितविश्लथावयवनाडिकापुञ्जरूपसंस्थानादिविशेषधर्मान् तूलकेति नाम्नश्चानुस्मरति तदा भेदमेवोभयोः प्रत्येति प्रत्ययश्च स प्रमैव । यदा तु तथाविधवस्त्रतूलकधर्मान् नाम च तयोरन्तरालीकृत्य लघुत्वशुक्लत्वमृदुत्वादिमन्ता नाडिकादिरूपास्तूलकांशा आभिमुख्येनावद्योतन्ते प्रत्येतु र्मनसि, तदा प्राक् परिदृष्टे तूलके वर्तमाने च वसने तूलकस्वजातीनां तादृशनाडिकानां सत्त्वात् तेनैव सामान्येनोभयो रेकत्वप्रतीतिर्भवति यच्च वस्त्रं तूलकाभिन्नमित्येवमादिकमभेदज्ञानं तत् वस्त्रतूलकयोः परस्परभेदप्रत्यायकविशेषधर्मान् विजहदेव बुद्धितः सामान्यधर्मवत् तादृशनाडिकादिमात्रं लक्षीकृत्य भवतीति वक्तव्यम् । एवं रीत्या वस्त्रतूलकयो र्भेदाभेदप्रत्यययोरेव प्रमात्वमुपपद्यते । सूत्रवसनयोश्चेत्थमेव भेदाभेदौ व्यवस्थापयितव्यौ । अन्येषामपि कार्यकारणानामेवमेव योजनीयम् । ये पुनस्तूलकस्य सूत्राणां वा स्थूला-

विशेष एव वसनकारणत्वेन मन्यन्ते, मृदादीनां वा आपिण्डा दिसंस्थानं घटादिकार्याणां तेषां कार्य्यकारणयोरपाक्षिक एव भेदः । भेदाप्रतीतिरेव च प्रमा ।

एवं न्यायेन कार्य्यकारणानां विचारतो भेदो ऽभेदो वा स्यात्, क्रियागुणादिभेदस्य कार्य्यकारणयो र्भेदमूलत्वं न व्याहन्यते सर्वेषामेव वादिनां विभिन्नव्यवहारनिर्वाहकश्च वस्तूनां क्रियागुणादिभेद एव, नामधेयानि च भिन्नानि क्रियागुणादिभेदत एव प्रवर्त्तमानानि पुनर्व्यवहारमनुकूलयन्ति । इत्येवं वस्तूनां कार्यकारणरूपाणामसम्बद्धानां वा क्रिया गुणो व्यवहारः नाम च इत्येतानि परस्परेणाभिसम्बद्धानि परस्पर-भेदहेतुत्वेन परिकल्प्यन्ते ।

वस्तुतस्तु कारणेभ्यः कार्य्याणामन्यत्वमनन्यत्वं वा स्यात् अन्यत्वानन्यत्वे उभे एव वा स्यातां तत्तद्व्यवहारभूमौ तत्तद् व्यवहारोपयोगिनामरूपविशिष्टानां वस्तूनां सत्यता न केनापि निवारयितुं शक्यते, न वा तत्सत्यतावादिनां प्रमातृत्वम् ।

जगतो हि सत्ता व्यवहारमूलैव । तत्तत् क्रियागुणादि-दर्शनादेव तु वस्तुनः सत्ता उपलभ्यते । व्यवहारश्च तादृशा-दर्शनगर्भ एवेत्यवोचाम । तस्माद् यादृशक्रियागुणादिभिर्यद् वस्तु उपलभ्यते, तद्रूपेण तत् सत्यमेव । तदवस्थाभिव्यञ्जकं नाम च तस्य नितरां सत्यार्थप्रकाशकमित्यङ्गीकार्य्यम् । एवं च सति शारीराणां रसरुधिरमांसास्थिमेदोमज्जादीनां अन्नव्यञ्-

नादिपरिणामानामपि तेभ्यो भिन्नत्वेन सत्यता, तन्नाम्नां च सत्यार्थप्रकाशकता क्षित्यादिपरिणामानां चाम्नव्यञ्जनादीनां तेभ्यो भिन्नतया सत्यताङ्गीकार्य्या। एवमेव हि क्षित्यादिनामधेयभाजां गन्धादितत्तद्धर्मवतां आस्थूलेभ्यो यथासंभवं परमाणुपर्य्यन्तानां क्षित्यप्तेजोमरुद्व्योम्नां कारणविशेषपरिणामानामपि सतां सत्यतैवाङ्गीकर्त्तव्या, कारणतो भिन्नत्वेन क्षित्यादिनाम्नाञ्च सत्यार्थप्रकाशकता। तत्र येषु सूक्ष्मपिण्डेषु पारिमाण्डल्यपरिमाणेषु क्षित्यादिनामधेयभाक्षु गन्धादीनां क्षित्यादिगुणानां सीमा प्रवर्तते। येभ्यः परं तेनाभिव्यज्यन्ते ते सत्स्वपि स्वापेक्षया सूक्ष्मतमेषु अवयवेषु तन्मात्रनामधेयेषु विशेषेषु क्षितिजलादीनां सूक्ष्मत्वपरिसमाप्तेः क्षित्यादिपरमाणुनाम्नाभिधातुं नासाम्प्रतम्। तस्मादेव च भगवता कणादेन एते परमाणुतया व्याख्याताः, भूतत्वेन च परिभाषिता इति।

जातमात्रस्य प्रागुक्तात् आवाह्यसमीरणादिसंस्पर्शात् एतावानेव प्रथमव्यवहारभूमेः प्रसारः। स्वाभाविकेन्द्रियाधिकारश्चैतावानेव। यदि चेदृशपरमाणवोऽपि स्वाभाविकेन्द्रियसम्बन्धात् बाह्या एव, तथापि स्थूलक्षित्यादीनां चतुर्दशगुणानां सत्त्वात् तत्साजात्यात् प्रथमव्यवहारभूमिर्नातिवर्त्तत इत्यवोचाम।

तामेनां प्रथमभूमिं सहैव जन्मना आवाह्यसमीरणादिस्पर्शात् क्षित्यादिपरमाणुज्ञानपर्यन्तानां उक्तरीत्या सोपानपरम्प-

रया निरवशेषमनतिक्रम्योल्लङ्घनेन न कश्चिद्द्वितीयां भूमिमवतरीतुं शक्नोति । समाधितत्त्ववोऽपि नैतद्विज्ञायोत्तरां भूमिमारोढुं शक्नुवन्ति । तस्मादस्ति आपरमाणुभ्य उपदेशस्य सार्थक्यं तदुपदेष्टृणाञ्च भगवतां कणादादीनां प्रामाणिकत्वम् । इत्येवं प्राथमिकव्यवहारभूमौ क्षित्यादीनि पञ्चैव भूतानि तैर्निर्णीतानि । तत्र क्षितेश्चतुर्दशगुणत्वेऽपि गन्धवत्त्वमेव लक्षणं. क्षितिरन्यारब्धा भवतु मा भवतु वा आरब्धत्वे येन यैर्वारब्धा तस्य तेषां वा विजातीयधर्मत्वेऽपि यदवस्थे वस्तुनि गन्धवत्त्वमनुभूयते, तदवस्थमेव क्षितिनाम भूतम्। गन्धसमवायिकारणतावच्छेदकतया क्षितित्वजातिरङ्गीकृता । एवं चतुर्दशगुणमपि जलं सांसिद्धिकद्रवत्वेन लक्षितम् । तथा एकादशगुणं सदपि तेजः परप्रकाशकरूपवत्त्वेन, यथा वायुर्नवगुणोऽपीतरविशेषगुणासमानाधिकरणस्पर्शेन, आकाशश्च शब्दसमवायिकारणत्वेन निरूपितः । एते गन्धद्रवत्वरूपस्पर्शशब्दा अन्यव्यवहारभूमौ अन्यरूपा भवन्तु न वा भवन्तु प्रथमव्यवहारभूमौ पृथिव्याद्याधेयत्वेनैव प्रतीयमानत्वात् तथैव स्वीकृताः ।

एवं च अन्नव्यञ्जनमांसास्थ्यादिपरिणामसहिता मृद्वालुकापाषाणगन्धकक्षारभेदचूर्णभेदादयो ये गन्धवन्तस्ते सर्व एव कणादादीनां मते क्षितिपदार्थान्तर्गताः गन्धावसानाश्च । तेषां सूक्ष्मावयवाः क्षितिपरमाणवो ज्ञातव्याः । करकाहिमान्याः परिणामानि च सांसिद्धिकद्रवत्ववन्ति जलानि तत्परमाणवश्च सांसिद्धिकद्रवत्वावसानाः सूक्ष्मावयवाः । सुवर्णर-

जतादिसर्वधातुसहिता विद्युदेव तेजः । पाश्चात्य पण्डितगण-परिदृष्टा अमिश्रिता अक्सिजेन, हाइड्रोजेन. नाइट्रोजेन, कार्बण नामधेयाः । मिश्रिताश्च अक्सिडाइड्प्रभृतयो ग्यासनामानः सर्वसाधारणतः स्पर्शमात्रेण ज्ञेया वायुपदार्थान्तर्गताः । रूपासमानाधिकरणस्पर्शावसानाश्च ये सूक्ष्मावयवा स्ते वाययीयपरमाणुत्वेन कल्पिताः, आकाशश्च शब्दसमवायिका-रणमात्रमित्येवं तेषां पञ्चभूतव्यवस्था । अत्र यद्यपि समीरणा-न्तर्गतैरेव हाइड्रोजेनाक्सिजेनाख्यैर्जलीयपरमाणूनामारम्भाज् जलस्य वाय्वन्तर्गतत्वेन न वायुतः पृथगुपदेश उपपद्यते, तथापि भेदनिर्देशस्य व्यवहारमूलकतया जलसमीरणयो र्भेदव्यवहा-रादेव जलस्य वायुतो भिन्नत्वमङ्गीकृतम् ।

एवं चेत् शर्करादीनामपि वायुभेदपरिणामानां सतां वायुतो भिन्नत्वेन व्यवहारात् कुतो न वायुतो जलवद् भूता-न्तरत्वेन निर्देशः कृत इति चेत्, सिद्धमेवापाद्यते भवद्भिः । यदि च तेषां शर्करादिरूपा पृथग्भूतसंज्ञा नास्ति, तथापि क्षितिलक्षणापतितत्वेन क्षितिसंज्ञयैव परिगृहीतत्वाद् वायुतो भिन्नत्वेनैव निर्देशो वेदितव्यः । जलं पुनर्न क्षितितेजसोरन्तर्भ-वितुमर्हति, वायुतश्च भिन्नत्वेनैव व्यवह्रियते । तस्माज्जलेति संज्ञान्तरोपदेशः ।

रूपादयो गुणा उत्क्षेपणादीनि कर्माणि तेषामाधेयत्वेन प्रतीयमानत्वाद् द्वितीयतृतीयव्यवहारभूमावेतत्स्वरूपतोऽनन्य-त्वेऽपि सिद्धे भिन्नत्वेनात्र प्रथमभूमौ निर्दिष्टानि ; इति

प्रथमव्यवहारभूमिज्ञानञ्च तदीयमेतावत् सर्वं ज्ञानमूर्त्तेर्जङ्घायामन्तर्भवति ।

# अथ द्वितीयव्यवहारभूमिः ।

तत्राजन्मतः प्रथमां भूमिं पर्य्यटन्तो ये भूततत्त्वाभिमुखीभूय परमाणुपर्य्यन्तमुपतिष्ठन्ति, तेषामेव द्वितीयभूमिगमनाधिकारः । सेयं द्वितीयभूमिः प्रथमभूमितः कथञ्चिदेव भिद्यते । तस्मादियमस्मद्देशीयैर्न तथा आदृता । समाधिभूमौ च नेयमत्यन्तमुपयुज्यते । उत्तरभूम्यारोहणे त्वेतज्ज्ञानं कथञ्चिदभ्यर्हितं स्यात् ।

तदेतद् भूतानामेवान्तरभेदज्ञानरूपम् । पृथिव्यादीनि यानि भूतत्वेनाभिमतानि, तदन्तर्गतानि यानि चूर्णसिकतादीनि बहूनि द्रव्याणि वर्त्तन्ते, तद्विषयकज्ञानम् । तत् पुनारसायनविद्याधीनम् । येदानीमस्मद्देशायानयोग्यपुत्रानवज्ञया दुःखेनैव वा त्यक्तवती, पश्चिमसमुद्रे निमज्ज्य तद्देशान्तिके उन्मज्जन्ती, उत्थाय तद्देशमलङ्करोति । अतः सा भ्रान्तिदुष्टा अदुष्टा वा भवतु, तामेवानुसृत्य तद्देशीयविपश्चितां भाषयैव तद्दृष्टाः पदार्था अभिलप्यन्ते । तत्र पाश्चात्त्या रासायनिका जगतो मूलतत्त्वमन्विच्छन्तः क्षित्यादीनि भूतानि जलरहितानि वाय्वादीनि त्रीणि भूतानि विभज्य एकाशीतिसंख्यया व्यवस्थापयन्ति, ततोऽप्यधिकानि एकव केचिन्मन्यन्ते । क्षित्यादिविषये एवं ते ब्रुवन्ति—

काठिन्यादिगुणापेता न मृदः परमाणवः ।
तथा स्नेहादिसम्पन्ना जलानामपि केचन ।
दृश्यन्तेऽनुवीक्षणादियन्त्रैः सम्यक् प्रयत्नतः ॥

तत्र क्षितिभेदानां तेजोभेदानां वायुभेदानां च परमाणूनां प्रत्येकस्मिन् यावन्त इलेक्ट्रनाणवो यथा वर्त्तन्ते, तदन्तराले च यथा इथार स्तैर्मन्यते तत् सर्वं प्रदर्श्यते । एतेषाञ्चेलेक्ट्रणा-मिथारस्य वा परिकल्पितस्य भूतप्रकृतितया सत्यत्वेऽपि भूतलक्षणेनाऽव्याप्यत्वान्न भूतत्वं न वा तेन भूतानां पञ्चसंख्या-तोऽधिका संख्या न्यूना वा सम्भवति । गन्धादिविशेषगुणवत्तया क्षित्यादिपञ्चान्यतमत्वेनैव हि भूतान्यस्माभिर्लक्षितव्यानि । तेषाञ्च भूतानामन्यारब्धत्वेऽपि न स्थूलपिण्डारम्भकत्व-हानिः । इत्येवं द्वितीयव्यवहारभूमिमारूढानामन्यदेशीयानां रासायनिकानां विपश्चितां पञ्चभूतेभ्यः परस्तादिथार-पर्यन्तं जगतः प्रकृतितत्त्वदृष्टिः । तत्रेलेक्ट्रनेथारदृष्टिस्तृतीय-भूमावन्तर्भवति । विद्यायाश्चोरु स्थानम् । अस्मद्देशीयास्तु श्रुतयः पुराणानि च धर्मसंहिताश्च काश्चन परमाणूनां जन्यत्वं निरूप्य ततः परस्तात् पुनर्भूताभिधानेनैव सूक्ष्मत्वेन विशेष्य क्षित्याद्याकाशान्तानि उत्तरोत्तरकारणत्वेन पञ्चतन्मात्राणि दर्शयन्ति । कापिलपातञ्जलादीनि च सांख्यशास्त्राणि उत्तरो-त्तरकारणत्वमपहायान्यस्मात् कारणात् तथाविधानि पञ्चै-वोत्पन्नानि इत्येवमाहुरिति प्राक् प्रदर्शितम् ।

अथेदानीं चेतनपिण्डानां मानवशरीराद्यभिधेयानां संग्रहं चिन्तयामः ।

एतत् पुनः शारीरतत्त्वमित्याख्यायते । एतज् ज्ञानं चतुर्थ-व्यवहारभूमावन्तर्भवति । स्थूलसूक्ष्मभेदेन च विद्यामूर्तौ रुद्रात् कण्ठावयवपर्य्यन्तेन परिकल्प्यते । एतज् ज्ञानवन्तः पुनर्मनुष्यसमाजे प्रौढत्वेन व्यपदेश्या भवन्ति । तत्र मानवादि-शरीरं भूतारब्धमपि सन्मृत्पिण्डादिवद् रूपान्तरेणापरिणम्य न केवलं भूतरूपैरेवारभ्यते किन्तर्हि उद्भिज्जप्राणशक्ति-बलेनोद्भिज्जशरीर उपचित्य रूपान्तरेण च परिणमय्य वृक्षीय-वल्कलदारुफलपुष्पाद्यवयवत्वेन स्वीक्रियमाणानि भूतानि पुनर्मनुष्यादिभि र्भक्षितानि मनुष्यादिप्राणशक्त्या तदधीन-रासायनव्यापारेण चापूर्वविविधाकारैः परिणमय्य मनुष्यादि-शरीरारम्भकतयोपनीयन्ते । केचन तु भूतपदार्था मनुष्यादिदेहं निविश्यमाना अपि रूपान्तरेणापरिणम्य कस्मिंश्चित् कस्मिं-श्चिदवयवे स्वरूपेणैवावतिष्ठन्ते । ते पुनर्न शरीरस्यारम्भकत्वेन परिगण्यन्ते, किन्तु सहायतामात्रेण । यथा शरीरस्थं जलमम्ल-जनकादिरूपा वायवश्च । तदेतद्विस्तरतो यथाक्रममुच्यते ।

अत्र मानवशरीरमेव प्रथमं व्याख्यास्यामः । अस्मिन् हि विज्ञाते सर्वेषामेव जीवानां शारीरतत्त्वं विज्ञातं भवति । एतद्धि पूर्णमायतनं सर्वासामात्मशक्तीनां स्वस्वविषयव्यापा-रेषु, अन्यशरीराणि तु कियतीनां कियतीनामेव शक्तीनां

कियन्मात्रमेव क्रियाप्रकाशनायालम् । तस्मात् तेषां सत्यपि शरीरत्वे न तत् तथाद्रियते । अयमेवार्थः प्रत्यक्षसिद्धोऽपि प्रकारान्तरेण श्रुत्योपपादितः । तथाहि,—"ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतन् ताः प्रजापतिमब्रुवन् आयतनं नः प्रजानीहि, यत्र स्थिता वयमन्नमदाम इति ताभ्यो गामानयत् ता अब्रुवन् न वै नोऽयमलमिति । ताभ्योऽश्वमानयत् ता अब्रुवन् न वै नाऽयमलमिति, ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं वा वतेति पुरुषो वाव सुकृतमिति ।"

मोक्षोपकरणसंजिघृक्षूणां च मानवानां स्वशरीरतत्त्वज्ञानमेव विशेषेणोपकरोति । मोक्षश्च सर्वेषु फलेषु मुख्यतमफलरूप इत्यतो मनीषिणां सर्वप्रारम्भेषु मुख्यतम उद्देश्यः । मूढानाऽन्वानुव्यवसायविषयताशून्योऽपि न मुख्योद्देश्यतां विजहाति मोक्षः, सुषुप्त्यवस्थारोहणप्रवृत्तेः । सुषुप्तौ हि तात्कालिको मोक्षो भवति । तस्मात् मानवशरीरविज्ञानमेव तत्त्वज्ञाने विशेषेणाभ्यर्हितम्, अतस्तदेवाद्याववताय्यंते । तदेतस्मिन् मानवशरीरे सर्वैर्वा किञ्चिन्न्यूनैर्वा भूतान्तरगणैर्निर्म्मीयमाणेऽपि षोड़श एव भूतान्तर्वर्त्तिनः पदार्था विशेषेणोपलभ्यन्ते । तस्मात् प्रथमोद्घाटे षोड़शपदार्थै रेवोपचितमिदमित्येतदंगीकृत्य तत् तत्त्वमेवोपव्याख्यायते । ते च पदार्थाः प्रत्येकमस्मदाचार्य्यकृतविशेषसंज्ञाभावाद् विदेशीयविपश्चित्कृतसंज्ञा एवानूद्य सह तत्संज्ञाभिरभिधीयन्ते । यथा,— अम्लजनकः ( अक्सिजेन् ) गन्धकं ( सालफार् ) क्षारः

( सोडियम् ) ( सिलिकन् ) जलजनकः ( हाइड्रोजेन् ) प्रस्फूरकं ( फस्फरस् ) ( पटासियम् ) ( फ्लुयोराइन् ) अङ्गारकः ( कार्बन् ) ( फ्लोरिन् ) ( म्यागृनिसियम् ) ( लिथियाम् ) यवक्षारजनकः ( नाइट्रोजेन् ) ( चूर्णविशेषः ) ( क्याल्सियम् ) लोहः ( आयरन् ) ( म्यान्गानिज् ) एतेषां षोड़शानां पदार्थानां मध्येऽम्लजनकजलजनकयवक्षारजनकनामानस्त्रयोऽन्यैः पदार्थैरमिश्रितभावेनैव प्रायेणास्मिन् शरीरे समवतिष्ठन्ते। मिश्रितभावेन च कैश्चित् कैश्चिल्लक्ष्यन्ते। तद् यथा,—अम्लजनकस्तावत् निःश्वासव्यापारेण बाह्यसमीरणतः फुस्फुस्द्वये प्रवेशितः सन् स्वरूपेणैवावतिष्ठमानस्तत्रत्यं रुधिरं संस्कुर्वन् रुधिरीयाङ्गारकेण मिलित आम्लिकाङ्गारकनाम्ना विषरूपेण परिणतः प्रश्वासव्यापारेण बहिर्निःसरति। तथाच,—यावदस्य फुस्फुसे स्थितिस्तावत् स्वरूपेणैव। सर्वत्रैव च शरीरस्य तरलपदार्थेषु तैः संयुक्तोऽपि स्वरूपेणैव वर्त्तमानो दृश्यते। जलजनकश्च भक्षितद्रव्याणां विगलितावस्थया परिणतानां क्षुद्रबृहदाद्यन्तेष्ववसृतानां तत्तदन्त्रीयपरिपचनव्यापारेण द्रवीभूतपदार्थे यथासम्भवं शोषिते सति तेषु भुक्तपदार्थेषु संसृष्टोऽप्यविकृतरूपेणैवावतिष्ठमानोऽन्यपदार्थेभ्यो विश्लिष्यन् तेष्वन्त्रेषूपचितो भवति। उपचीय चोपयोगित्वाद् बहिर्भूतश्चेत्, अन्त्राणि स्फाययन् मलद्वारेणावसरति। अवसारबाधायान्तु केनचित् कारणेनोदरमेवाध्मापयति। परिपाकक्रियाविकृतिश्चैतस्यार्थस्य कारणम्। यदि नाम पाचकरसविशेषः

क्लौमिकरसः (प्याङ्क्रियेटिक् जुस्) नामकोऽन्त्रेभ्यो यथाप्रयोजनमवस्कन्द्य वर्णितगलितद्रव्याणि सुष्ठु परिपचति, तदा यथाप्रयोजनमेव जलजनकः पृथग्भूतो भवति। अपृथग्भूतोऽशश्च तस्य स्वरूपेणैवावतिष्ठमानस्तेन गलितद्रव्यरसेन संसृष्ट एव सन् सहैव तेन रसेन यथासम्भवं शरीरावयवानभिव्याप्नोति। तथा सति नाध्मानमुदरस्य, न वा तद्गुत् परिपचनं तदैवास्याधिका अंशाः पृथग् भवन्ति; आध्मानादिकं च तदैव। एवं जलजनकस्य स्वरूपेणावस्थितिर्दृश्यते। यवक्षारजनकोऽपि वायुः शरीरेषु बहुषु तरलद्रव्येषु स्वरूपादप्रच्युत एव द्रवभावेणावतिष्ठते। रासायनादिव्यापारेण तु त्रय एवैते विजातीयपदार्थैर्मिलिताः सन्तोऽन्याकारैरवतिष्ठन्ते।

अथ शिष्टानां त्रयोदशानां यथाविधमवस्थानमुच्यते,—शिष्टास्त्रयोदशाङ्गारकाद्याः सर्व एव नास्मिन् शरीरे स्वरूपतः प्रत्यवभासन्ते। किन्तर्ह्यन्याकारेणैव परिणता दृश्यन्ते। तथाहि अङ्गारकाद्यास्त्रयोदश अम्लजनकाद्याश्च त्रय इति षाड्शानामेव परमाणवो यथासम्भवं यथानियमञ्च विजातीयपरमाणुभिर्विशिष्टसंयोगेन संश्लिष्यन्तो बहूनि रूपान्तराणि निर्मिमते। निर्माय च शरीरारम्भकांशेषु शरीरतन्त्रापरनाम स्ववतिष्ठन्ते। ते च रूपान्तरभूताः पदार्था अवान्तरभेदेन बहुविधा अपि साधारणासाधारणभेदेन द्विविधाः। तत्र साधारणा लवण इउरियादयः असाधारणास्तु एल्बुमिन् प्रभृतयः। तत्र लवणादयः सर्वेभ्य एव शरीरयन्त्रेभ्यः सर्वदा बहिर्निःसर-

न्तीत्यतस्ते निःसरणशीला इति कथ्यन्ते। एल्बुमिन्प्रभृत-यस्त्वसाधारणाः पदार्थाः तन्त्वपरनाम्नः कोषान् रचयन्ति ।

एते सर्वे पदार्थाः प्रकारान्तरेणापि द्वैविध्येन विभज्यन्ते। तत्र स्वस्वप्राणशक्तिसम्बलितरासायनशक्त्यादिजन्यत्वं, स्व-प्राणानपेक्षरासायनादिजन्यत्वं च। तत्र प्रथमे शर्कराभेद प्रो-टिड् जिलाटिन् जातीयपदार्थाः, द्वितीये जलाम्लक्षारलवण-जातीयाः। एतेषु यवक्षारजनकवायुर्न दृश्यते। अत्रयेऽम्लक्षार-पदार्थाः शरीरव्यतिरेकेणाप्युत्पद्यन्ते ते एव बोद्धव्याः। ये पुनः शरीर एवोत्पद्यन्ते, इउरिक् एसिडादयस्ते रासायन्यनुकूलितया प्राणशक्त्या एव। तत्र जलं शरीरे शतभागेषु सप्ततिभागाः, इदञ्च न शरीरावयवानां कस्यचिदपि निर्मापकं, किन्तु सर्वेषां भक्ष्यद्रव्याणां द्रवत्वकारणं देहस्य चार्द्रत्वे हेतुः। जलेन हि सर्वं द्रवीभूतं सत् रुधिरादिरूपेण परिणम्य सर्वान् देहावय-वान् व्याप्नोति।

अथेदानीं ये ये पदार्था येन येन रूपेण परिणताः शरीरस्य यस्मिन् यस्मिन् स्थानेऽवयवे वा दृश्यन्ते तदुच्यते। हाइड्रो-जेनः क्लोरिन् पदार्थेन मिलितः सन् अम्लविशेषरूपेण परिणमति तदिदं हाइड्रोक्लोरिकाम्लमित्याख्यायते। इदं पाकाशये ग्यास्-ट्रिक् जूस् नामकपाचकरसमध्ये स्वातन्त्र्येणावतिष्ठमानं दृश्यते। शरीरारम्भकतन्तुष्वन्यविधरसेषु चैतत् क्षारप-दार्थैः मिश्रितभावेन दृश्यते, तथा दन्तास्थ्नोश्च। कार्बनिका-म्लन्तु क्षारपदार्थेन मिलितं सद् रुधिरास्थिदन्तेष्ववतिष्ठते।

फस्फिउरिकाम्लमपि क्षारजातीयपदार्थेन संसृष्टं सत् दन्तास्थिरक्तकणिकासु मस्तिष्के च दृश्यते, गन्धकद्रावकन्तु शोणितशिरामयोः रसविशेषेषु च क्षारजातीयेनैव पदार्थेन मिलितं सत् लक्ष्यते। सिलिशिकाम्लं च क्षारमिश्रितमेव सत् रोमसु त्वक्षु च वर्त्तत इत्येवमम्लजातीय (द्रावकजातीय) पदार्थानामवस्थितेरारम्भकत्वस्य च नियमः।

अथेदानीं क्षारजातीयपदार्थानामारम्भकताया अवस्थानस्य च नियमो निगद्यते। तत्र सोडियम्नामकः क्षारजातीयस्तन्तुषु भुक्तपीतरसे च दृश्यते। तत्राप्यारम्भकतया तन्तुषु संश्लेषमात्रेण तु रसेषु।

पटासियम्नामकस्तत्रारम्भकतया पेशीलालारक्तकणास्नायुतन्तुष्ववतिष्ठते, सर्वप्रकाररसेषु च संश्लेषमात्रेण। एमोनियम्नामकस्तावत् पाचकरसेषु, ग्याष्ट्रिक्युस् नामकेषु, मूत्रेषु च संश्लेषमात्रेण, लालायान्त्वारम्भकतया दृश्यते।

कयाल्सियम् नामकस्तु अस्थिषु दन्तेषु चारम्भकतया रुधिरादितरलपदार्थेषु च संश्लेषमात्रेण। म्यागनिसियम् नामकस्तावद् यत्र यत्र कयाल्सियाम्पदार्थेन संसृष्टो दृश्यते। एते सर्व एव प्राणक्रियामनपेक्ष्य सत्तावन्तो भवन्ति। तत्र केचन उपादानमात्रव्यापारेणैवोद्भूताः केचन रासायनादिव्यापारप्रकाशितोपादानव्यापारजन्यसत्ताकाः। तत्र च हाइड्रोजेनादयः सोडियमादयश्च प्रथमश्रेण्यन्तर्भूताः। द्वितीयश्रेण्यन्तर्गतास्तु हाइड्रोक्लोरिकादयो द्रावकाः पदार्थाः इत्येवं प्राण-

क्रियानपेक्षसत्ताकानां पदार्थानामवस्थितेरारम्भकत्वस्य च व्यवस्था अवगम्यते। सर्वेषां चैतेषां भुक्तपीतवस्तुभ्यः पृथक्कारे पाकस्थल्यादितश्च निःसरणे प्राणशक्तिव्यापारापेक्षा अवश्यमेव वर्त्तते, जनकत्वमेव प्राणशक्तेस्तेषां निराकृतमित्यवधेयम् ।

अथ प्राणक्रियापेक्षजन्मनां पदार्थानामवस्थित्यारम्भकत्वे उपव्याख्यायेते । अस्मिन् देहे प्राणक्रियाजन्यानामेव पदार्थानां संख्ययाधिक्यं दृश्यते, तेषाञ्च सत्स्वप्यन्येषूपादानेषु नाइट्रोजेन् अव्यभिचारी, तेन सर्वेष्वेवैतेष्ववश्यमेव वर्त्तितव्यम् । अन्येषां च हाइड्रोजेनादीनां न सर्वेषामेव सर्वत्र सद्भाव इत्यतः सर्व एवैते नाइट्रोजेन् संश्रवेणैव नाइट्रोजानीय इति नाम्ना अभिधीयन्ते ।

तत्र प्राणव्यापारादेव नाइट्रोजेनादित एलबुमिनादिषु पदार्थेषूत्पन्नेषु सत्सु एल् बुमिन् नियतसत्ताकेष्वेव नाइट्रोजेनीयाः पदार्था दृश्यन्ते। ते च तेभ्यः प्राणव्यापारादेव तद्रूपेणाविर्भवन्ति ।

ते च प्राणव्यापारजन्याः पदार्था वक्ष्यमाणनामरूपाः प्राणव्यापारानपेक्षजन्मभ्यः पदार्थेभ्यः स्थूलतमाः। तत्राक्सिजेनादिपरमाणवः स्वोपादानापेक्षया स्थूला इत्यभिधीयन्ते। हाइड्रोक्लोरिकादिद्रावकास्तु रसायनादिव्यापारेण विजातीयेनैकेन द्वाभ्यां त्रिभिर्वा मिश्रणेन जातत्वादवयवबहुत्वेन स्थूल-

तमा इत्यभिधीयन्ते। ते च पाश्चात्त्यभाषया एवंनामभि-रभिधीयन्ते।

यथा–इउरिया, इउरिक् एसिड्, ज्यान्थिन्, हाइपोज्येन्थिन्, हिपुरिक् एसिड्, क्रियेटिन्, क्रियेटिनिन्, ल्याक्टिक् एसिड् इण्डिकान्, लिसिथिन्, निउरिन्, सेरिब्रिन्, लिउसिन्, टाइ-रोसिन्, कलेष्टरिन् इति।

१। तत्र इउरियानामकपदार्थविशेषो मूत्रस्य प्रधानतममु-पादानं रक्तेषु, लिम्फनामकरसविशेषेषु यकृति चास्य सत्ता दृश्यते। सा च सत्ता संश्लेषमात्रेण, न त्वारम्भकत्वेन। अयं हि पदार्थो न शरीरमुपकरोति, किन्त्वपकरोति। अयं हि शरीरावयवमारभमाणेभ्य एव पदार्थेभ्य आरम्भक्रियाविरो-धित्वात् प्राणविशेषस्यापानस्य व्यापारेण पृथग्भूतः सन् उत्पाद्यते। उत्पाद्य च निर्द्दिष्टप्रणालीभिः कीण्याख्ययोर्मूत्र-निर्म्माणयन्त्रयोरुपचीय पुनस्ताभ्यां तत्तत् प्रणालीभिर्मूत्राशये-ऽवस्कन्दय मूत्ररूपेण शेफसो बहिर्निःसरति। सोऽयं रुधिर-पूर्णशिरासु लिम्फ्याटिक् आद्यासु नलीषु यकृति च विशेषे-णोत्पद्यते। उत्पद्यमानश्च न यावत् तेभ्यो मूत्रनिर्म्माणयन्त्रे निःसरति, तावत् तेषु दृश्यते। तस्य पुन र्निःसरणे सति पुनरन्यस्तेषूपचिनोति। इत्येवमुपचयनिःसरणयोः सातत्यात् सर्वदैव रुधिरादिष्वयं इउरियाख्यः पदार्थः संलक्ष्यते। यदि नामास्य यथानियमं वर्णितरूपेण निःसरणं न स्यात् तदा शिरादिष्वाधिक्येनोपचयात् ग्राइटस् नामा रोगो भवति।

यस्य पूर्णतावस्थायां रुधिररसादयः सर्व एव तरलपदार्था इउरियाप्रधाना भवन्ति। ततश्चास्य विषोचितक्रियया रुधिरादीनामकर्म्मण्यत्वे जाते शरीरमेवैतद् विनश्यति, मरणापरनामोत्क्रान्तिश्च भवतीति।

२। अथेदानीं मौत्रिकाम्लस्य ( इउरिक् एसिड ) द्रावकविशेषस्य सद्भावादय उच्यन्ते, प्रदर्शितमौत्रिकाम्लपदार्थो यदा नियमात् प्रच्यवते, तदा स हाइड्रोजेन् वायुना रासायनेन मिलितः सन् अम्लविशेषरूपेण परिणमति। ततश्चाम्लस्वाभाव्यात् सोडियमपटासियमभ्यां क्षारपदार्थाभ्यां एमोनियाख्येन च पदार्थेन संयुक्तः सन् विकृतमूत्रे, प्लीहनि, यकृनि, वाताक्रान्तरक्ते, मूत्राश्मरीपीडायां मूत्रगताश्मकणिकासु च संदृश्यते, अयमपि देहस्य बाधक एव।

३। ज्यान्थिन नाम पदार्थस्तु पेशीषु प्लीहनि च इउरियावदुत्पद्यमानो विहितप्रणालिकया सहैव मूत्रेणोपचिनोति। तस्मात् पेशीषु प्लीहनि मूत्रेषु चास्य वृद्धिर्दृश्यते, अयमपि शत्रुरेव शरीरस्य।

४। अथ हाइपोज्यान्थिन्। अयमपि ज्यान्थिन् पदार्थस्यैव परिणामविशेषः। यथा इउरियापदार्थस्य इउरिकाम्लम्। अयमपि शरीरस्यारातिरेव। यदा खलु ज्यान्थिन् पदार्थ उत्पत्तिनिःसरणादिव्यापारेषु नियमं न सहते तदा विकृतीभूय रासायनव्यापारेण पदार्थान्तरसंसृष्टः सन् हाइपोज्यान्थिन्

इत्याख्यानं भजते। अयमपि रोगविशेषानुत्पादयिष्यन् प्लीहनि पेशीषु च उपचिन्वानो मूत्रं च विकुर्वाणः लिउकिमिया नामकरोगमाविर्भावयति। तदानीमयं मूत्रेष्वाधिक्येन संलक्ष्यते। तस्मादयमपि शरीरस्य प्रबाधकः।

५। हिपुरिक् नामकापरोऽम्लपदार्थः प्राणक्रियाजन्योऽस्ति। स शष्पभोजिनां प्राणिनां गवादीनां मूत्रेषु दृश्यते, न च मनुष्याणां शरीरे मूत्रे वा।

६। षष्ठः क्रियाटिन् नामकः पदार्थः, सोऽयं मनुष्यादीनां मांसेषु दृश्यते।

७। सप्तमः क्रियाटिनिन् नामकक्षारविशेषः। अयं मांसपेशीषूत्पद्यते। उत्पद्य च इउरियावत् मूत्रेण संसृज्यते।

८। अष्टमो ल्याक्टिकाम्लपदार्थोऽम्लीभूतदुग्धे, अन्नवहायां नलिकायां च वर्त्तते।

९। नवम इन्डिकान्। असौ मूत्रेष्वेव दृश्यते। तस्माच्छरीरबाधक एव।

१०। दशमो लिसिथिन्। असौ मस्तिष्के, डिम्बकुसुमे, पूये, रुधिरे, पित्ते चावतिष्ठते।

११। एकादशः सेरिब्रिन् तथा निउरिन् नामकश्चायं मस्तिष्केष्वेव दृश्यते।

१२। द्वादशो लिउसिन्, तथा टाइरोसिन्, इमौ द्वावपि सन्तौ मिश्रितभावेनैकत्र सद्भावादेक एव व्यपदिश्यते। तथाभूतौ चेमौ प्लीहनि, यकृति, क्लोमसु च दृश्येते ।

१३। कलेक्ट्रिन् त्रयोदशः; अयन्तु रक्ते, पित्ते, स्नायुषु तन्तुषु च दृश्यते।

१४। चतुर्दशः कार्बोहाइड्रेट्स्। अयं शर्कराजातीयः पदार्थ इति प्रागेवावोचाम। अस्य पुनर्बहुषु प्रकारभेदेषु सत्स्वपि षड़ेव तेषां विशेषेण मनुष्यशरीरेऽवतिष्ठन्ते। ते च द्राक्षा-शर्करा, मन्टोम, दुग्धशर्करा, इनोसिट्, ग्लाइकोजेन, डेक्स्ट्रीन्, नामधेयकाः। तत्र द्राक्षाशर्करा न द्राक्षाफलेष्वेवोत्पन्ना शर्करा, किन्तु तज्जातीया शर्करैव द्राक्षाशर्करेत्युच्यते वैशिष्ट्यबोधार्थम्। सेयं रक्तेषु, अन्नवाहिनलीस्थितभुक्तपीतद्रव्येष्वसम्यग् विग-लितेषु दृश्यते। शारीरक्रियानिर्वाहे तस्या अनुपयोगिनोऽशास्तु मूत्रेण संयुज्य निःसरन्ति। तेनासावमृतरूपाणि मूत्रेषु संदृश्य-ते। इयमपि शर्करा अत्यल्पतया वसादिषु लक्ष्यते। दुग्धशर्करा च दुग्धेष्वेवोत्पन्ना निपीतदुग्धस्य शरीरे रसादिषु दृश्यते। इनोसिट् नामिका च प्लीहनि, यकृति, मस्तिष्के च लक्ष्यते। इउरिमियारोगे जाते इयं मूत्रेषु दृश्यते। ग्लाइकोजेनपि यकृति, श्वेतरक्तकणिकासु ग्लेसेन्टादिस्थाने च संदृश्यते। डेक्स्ट्रीश्च शर्करा रक्ते, अन्नवाहिनलीषु च संदृश्यते। इति शर्कराजातीय-पदार्थविभागः।

१५ । अथेदानीं मेदोजातीयः पञ्चदशपदार्थो विभज्यते । अस्यापि सत्सु बहुप्रकारेषु भेदेषु न तेषां सर्वेषामेव शरीरे विशेषेणोपयोगित्वम् । तस्मादत्यल्पतयैव ते वर्ण्यन्ते, चत्वारस्त्वाधिक्येन तस्मात् त एव प्रधानानि । ते च ष्टियारिन्, प्याथेटिन्, डलियिन्, गिलसिरिन् नामधेयाः ।

१६ । षोड़शस्तु एल्बुमिनम् नामकः पदार्थः । सोऽयं शरीरस्य सर्वेषु तन्तुषु तरलपदार्थेषु च नानाकारेणावतिष्ठमानः शरीरमेतदारभते । तस्य रूपद्वयं, मुख्यमण्डाकारं, सिरामाकारं च गौणम्, अन्याकारेण परिणतत्वात् । तच्च त्रिविधं क्षारएल्बुमिन् केजिन् अम्लैल्बुमिंश्चेति । एते सर्व एव देहारम्भकावयवेषु यथायथं दृश्यन्ते इति ।

१७ । सप्तदशस्तावत् ग्लविलिन् नामकपदार्थः । अयमपि शब्दो जातिविशेषविशिष्टस्यैव वाचकः । अन्यप्रकारेण भिद्यमाना अपि ग्लविलिन् जातीया बहव एव सन्ति । तेषामपि सर्वेषामेवास्मिन् शरीरे विद्यमानत्वेऽपि येषां परिमाणमतीव स्वल्पं, ते न गण्यन्ते ।

येषान्तु मात्राधिक्यं ते प्रधानानि, ते च पञ्चैव । तत्रैको मुख्यो ग्लविलिन्, अपरे च पदार्थान्तरसंश्लिष्टाश्चत्वारः, यथा प्याराग्लबुलिन्, फाइब्रिनोजेन्, मायेसिन्, भाइटेलिन् इति ।

तत्र ग्लबुलिन् तन्त्वादिषु यथोपयोगं विद्यमानोऽपि न स्वरूपेणावतिष्ठमानः फाइब्रिन निर्म्माणायालम् । द्वितीयस्तु

पदार्थान्तरसंश्लिष्टः सन् प्याराग्लबुलिन्नाम्ना समुद्भूय श्वेत रक्तकणिकासु सिरामे च वर्त्तते । अयमेव मुष्कादीनां रसेन संश्लिष्टः सन् फाइब्रिन् नामकपदार्थविशेषं जनयति । तृतीयः फाइब्रिनोजेन्पदार्थः, अयं रक्तेषु दृश्यते, विशेषतस्तु हृत्-पिण्डावरणे फुस्फुसावरणेऽण्डकोषावरणसञ्चितरसविशेषे च दृश्यते ।

चतुर्थस्तु मायेसिन् नामकपदार्थः, अयन्तु पदार्थान्तर-संश्लिष्टो ग्लबुलिन् विकार एव, पेशीष्वेवास्यावस्थानम् । सोऽयं यदाधिक्येन पेशीषु समुपचिनोति, तदा शारीरक्रियायाः प्रतिष्टम्भे जाते जीव उत्क्रामति । तस्माच्छवपेशीष्वेवायं विशेषेणोपलभ्यते, अतोऽयं शरीरस्य बाधक इत्यवगन्तव्यम् । यः पुनरयं पञ्चमो भाइटेलिनाख्यपदार्थः, असौ शरीरावयवेषु सन्नपि न विशेषेणोपलब्धुं शक्यः, डिम्बानां कुसुमे तु कथ-ञ्चिद्विज्ञायत इति ग्लबुलिन् विवरणम् ।

१८। अष्टादशस्तु प्याराग्लबुलिन्निर्मितः फाइब्रिन् एव। अयं शरीरान्निःसृतेष्वघनीभूतेषु रुधिरेषु दर्व्यादिना संघट्टितेषूपचीयमानो दृश्यते ।

१९। एकोनविंशः पेप्टन् । अयन्तावत् एल्बुमिन एव जिलाटिनादिसहायस्य रूपान्तरम् । तस्मादेल्बुमिनयेड् इत्या ख्यायते । असावपि जातिविशेषविशिष्टस्यैव वाचकः । अयं चतसृभिर्विधाभिर्भिद्यमानो यथाक्रमं बहुप्रकारेषु तन्तुषूपादान त्वेन दृश्यते, तस्यास्य प्रकारभेदेन नामभेदाः । मिउसिन्

जिलाटिन्, करिड्रन्, इलाष्टिन् इति । तत्र मिउसिन् नामकपदार्थो भ्रूणस्य संयोगतन्तुषु पेशीकण्डारे श्लेष्मलालापित्तेषु ग्यास्ष्ट्रिक् युस् नामकाम्लरसेषु चारम्भकत्वेन दृश्यते । द्वितीयोऽस्य जिलाटिन् जातीयपदार्थविशेषः । अयमुपास्थीनि निर्मिमीते । चतुर्थ इलाष्टिनः । अयं सावफलेबादिबन्धनीनां पीतवर्णानि स्थितिस्थापकधर्माणि सूत्राणि रचयति, इति शारीरे बहवः प्राणक्रियाजन्याः पदार्थास्तदनपेक्षाश्च बहवोऽक्सिजेनादयो वायुविशेषा हाइड्रोक्लोरिकादयोऽम्लपदार्थाः सोडियमादयः क्षारपदार्थाश्च सर्वे परस्परं यथायथं सम्भूय, अस्थिमांसधमनीशिरास्नायुमेदोमज्जादिरूपैः परिणता मनुष्यादिशरीरपिण्डानि निर्मिमते । तत्र निर्माणप्रक्रियां श्लोकैरेवाभिधास्यामः ।

ये प्राणव्यतिरिक्तेभ्यः कारणेभ्यः समुत्थिताः ।
अक्सिजेनादयो भावास्तथा सोडियमादयः ॥
क्षाररूपास्तथा ये च तेभ्यो रासायनोत्थिताः ।
हाइड्रोक्लोरिक् प्रभृतयो येऽम्लरूपाः समीरिताः ॥
अन्ये च ये सुवर्णाद्या मुख्यधातुतया मताः ।
उद्भिदस्तान् समागृह्य प्रथमं प्रविकुर्वते ॥
अक्सिजेनादिकान् वायून् सुषिभिः पर्णसंस्थितैः ।
मुखाकारैः सहस्रैश्च शतानां बाह्यतः सदा ॥
गृह्णन्ति तरवो बल्यो मूलैश्च पार्थिवान् बहून् ।
जलमिश्रान् प्रगृह्णन्ति स्वात्मनः परिपुष्टये ॥

एवं प्रगृह्य तान् सर्वान् प्राणेनैव नियम्य च ।
यथोपयोगमाकृष्य नियोज्य च यथायथम् ॥
परस्परेण संयोज्य रासायनबलेन च ।
सौरतापं प्रगृह्यापि तत्क्रियाकौशलेन च ॥
सहायेन निबध्नन्ति येषां यैश्च युयुक्षुता ।
तांस्तथा रचयन्त्यन्यै रूपैर्विपरिवर्त्य च ॥
एल्बुमिनादिकान् भावांस्तांश्चैव निजशक्तितः ।
आयम्यायम्य संयोगविभागाभ्यां पुनः पुनः ॥
पुनरन्येन रूपेण परिवर्त्य पृथक् पृथक् ।
अन्यान् भावान् विकुर्वन्ति प्रोटिड्जिलाटिकादिकान् ॥
तानप्यथ विकुर्वन्तः कोषान् सृष्ट्वा पृथक् पृथक् ।
तेभ्यस्तन्तून् पुनः सृष्ट्वा तेभ्यस्त्वक्पल्लवादिकान् ॥
एवं वीरुत्तरूणां च तृणादीनां तथोद्भिदाम् ।
सर्वेषां पिण्डनिर्माणं प्रत्यक्षमवगम्यते ॥
तद्विशेषं च नैवात्र वक्ष्याम्यनुपयोगतः ।
एतदावश्यकं तत्त्वं मानवोत्पत्तिदर्शने ॥
एतावदेव विज्ञप्तं तस्मादस्मात् परं शृणु ।

इत्युद्भिदां शरीरनिर्माणक्रमः ।

## मानवदेहनिर्मितिः ।

अथ मानवदेहस्य निर्मितिक्रम उच्यते ।
तत्र येषां पशूनां च तिरश्चां च पतत्रिणाम् ॥

सामान्यमेतत् सर्वेषां देहपिण्डविनिर्मितौ ।
यत् साक्षादेव नोद्भिदुच्छक्तिभूतान्यथाकृतौ ॥
सौरतापग्रहेणापि तत्क्रियाकौशलेऽथवा ।
न मृत्तिकां समीरं वा भुक्त्वा पीत्वोदकान्यपि ॥
केवलानि न जीवन्ति देहस्यापरिपोषणात् ।
अत एते प्रतीक्षन्त उद्भिज्जानां सहायताम् ॥
तेषामेव हि सामर्थ्यं भूतानां विक्रियाकृतौ ।
त एव ह्यक्सिजेनादिभूतान्याहृत्य संक्रमम् ॥
अन्यरूपै विकुर्वन्ति तान्येवैते प्रगृह्य च ।
उद्भिज्जतो यथायोगं विकर्त्तुं शक्नुवन्ति हि ॥
अतएव चराणां स्युः स्थावराः प्राणहेतवः ।
न स्थावराद्गते कश्चिज्जङ्गमः स्थातुमर्हति ॥
साक्षात् परम्परा वापि स्थावराणां चरैः सह ।
सम्बन्धो नियतो ज्ञेयः कार्य्यकारणलक्षणः ॥

शाकमूलफलादीनि गृह्णन्ति मानवादयः ।
साक्षादेव तु तत्रास्ति सम्बन्धोऽथ परम्परा ॥
यत्र च्छागादिमांसानि भुक्त्वा गृह्णन्ति तान्नराः ।
उद्भिज्जनिर्मितान् भावानिति तत्त्वविदां मतम् ॥
पशवो हि तृणान्यत्त्वा पदार्थान् यान् विचिन्वते ।
तान् विकृत्य यथान्यायमस्थिमांसवसादिकान् ॥
रचयन्ति पृथग् भावान् स्वस्वदेहोपयोगिनः ।
तानप्यत्त्वा पुनर्मर्त्याः प्रपुष्णन्ति निजास्तनूः ॥

परस्परेण सम्बन्धो ज्ञेयोऽस्त्यन्योऽपि तं शृणु ।
पृथग्विधोऽयमेतस्मात् सम्बन्धत्रयपूर्वकः ॥
सम्बन्धद्वयपूर्वस्तु पूर्वो भेद इतीरितः ।
चतुःपञ्चादिपूर्वोऽपि दृश्यतेऽसौ कदाचन ॥
उद्भिदां भूतसम्बन्धं प्रथमं परिचक्षते ।
पशूनां मानवानां वा तैर्द्वितीय उदाहृतः ॥
पशुभिर्मानवैर्यः स्यात् तृतीयः स निगद्यते ।
पशुमांसानि भुञ्जानैर्यः पुनः कमठादिभिः ॥
मानुषाणां भवेत् सोऽयं चतुर्थः परिकीर्त्तितः ।
पञ्चमो वै चानेनैव प्रकारेणोपपद्यते ॥
एवं परम्परासाक्षाद् भेदैर्बहुविधैरयम् ।
सम्बन्धो मानवानां स्यात् स्थावरैर्बहुधा मतः ॥
न त्वेषामेकरूपेऽपि सम्बन्धेऽसति जङ्गमाः ।
प्राणिनः शक्नुवन्तीह जनितुं मानवा इयः ॥
इति निश्चितराद्धान्तविद्भिः सद्भिरुदीर्य्यते ।
विशेषन्तत्र वक्ष्यामो यथावदवधारय ॥
स्थावरैर्निर्मितान् भावान् भूताख्येभ्यः पृथक् पृथक् ।
शरीरं वर्त्तयन्ते यद् गृहीत्वा मानवादयः ॥
तत्रैवं नावगन्तव्यन्तेन तेनैव ते स्थिताः ।
येन रूपेण ये वृक्षैर्वल्याद्यैश्च विनिर्मिताः ॥
मानवानां शरीरेषु पश्वादीनां च मूर्त्तिषु ।
तेषां केचित् पदार्थास्तु तिष्ठन्त्येव स्वरूपतः ॥

अन्यरूपेण वै केचित् तिष्ठन्ति विकृताः पुनः।
तत्र यानीह वृक्षाद्या रचयन्ति पृथक् पृथक् ॥
भूमौ प्राथमिकायां च एलूबुमिन् प्रमुखा मताः।
त एव स्वेन रूपेण स्थिताः सर्वासु मूर्त्तिषु ॥
तेभ्यस्तु ये समुद्भूताः प्लाष्ट्ष्टाक्चारादिसंज्ञिताः।
यैः साक्षाद्वीरुधादीनां त्वक् च दारुदलानि च ॥
निर्मीयन्ते पृथग्भूता अंशा नानागुणान्विताः।
त एवाग्न्यादिभिः पक्त्वा विध्वस्य च यथायथम् ॥
निर्वर्त्यन्तेऽन्यरूपेण ततो मांसादिसम्भवः।
ष्टाक्चारः स्युः प्लाष्टरूपा विध्वस्ताः पाककर्मणा ॥
ते चाप्येलूबुमिनाद्यैस्तु रूपैः स्युः क्रमयोगतः।
परिणम्यावतिष्ठन्ते तान् पुनर्मनिवादयः ॥
विकुर्वन्त्यानुलोम्येन नानारूपेण यानिह।
यथाक्रमं विवृत्तास्त आरभन्ते पलादिकान् ॥
तत्र क्रमं प्रवक्ष्यामः सावधानमनाः शृणु।
एलूबुमिनादिकं रूपं पुनः प्राप्तेषु तेषु च ॥
उद्भिज्जीयपदार्थेषु तान् पुनर्निजकर्मणा।
निजशक्तिप्रचारेषु योग्यत्वमुपपादयन् ॥
अन्यरूपेण मर्त्यानां जीवो विकुरुतेऽनिशम्।
सर्वेषामेव भूतानां यतः प्राणाः पृथक् पृथक् ॥
जीवा अपि यतो भिन्नाः सर्वाणि करणानि च।
प्रवृत्तयोऽपि यद्भिन्ना धर्माधर्मादिसंज्ञिताः ॥

साधारणा विशेषाश्च ततस्तेषां पृथग् विधाः ।
ज्ञानशक्तिः क्रियाशक्तिः शक्तिश्च पोषणात्मिका ॥
तदधीनाश्चेन्द्रियाणां मनसाञ्चापि शक्तयः ।
क्रियाप्रवृत्तयश्चैव सर्वा एव पृथग्विधाः ॥
प्रत्येकमेव जीवानां स्वजातीनाञ्च सर्वदा ।
भिन्नप्रकारता दृष्टा द्वयोः करणजातयोः ॥
बाह्याभ्यन्तरभेदेन स्थितयोः सर्वयोरपि ।
बहुना किमिहोक्तेन द्वयोश्च पितृपुत्रयोः ॥
प्रकारभेद आभाति किं पुनर्भिन्नजातिषु ।
मनुष्याणां यथा प्राणो धर्माधर्मादिका अपि ॥
कामक्रोधादिकाश्चैव वृत्तयः सन्ति यादृशः ।
इन्द्रियाणां प्रवृत्तिश्च मनसामपि यादृशी ॥
यादृशी जीवशक्तिश्च न तथात्वन्यजातिषु ।
पशुकीटपतङ्गादिचरेषु स्थावरेषु च ॥
नैकस्या अपि शक्तेर्वा क्रियाया अपि वा पुनः ।
सत्यप्यन्येषु जीवत्वे प्रभेदो दृश्यते महान् ॥
मात्राया मर्त्यजीवानामन्येषां चापि सोद्भिदाम् ।
काचिच्छक्तिर्मनुष्येषु दृश्यते पूर्णमात्रया ॥
स्वल्पा च वानरादीनां मृगेष्वल्पतरा च सा ।
उद्भिज्जेऽल्पतमा भातीत्येवं न्यूनातिरिक्तता ॥
व्युत्क्रमञ्चास्य पश्यामो वृक्षादिष्वेव पूर्णता ।
शक्तेः कस्याश्चिदन्यश्च मृगादिष्वल्पतादयः ॥

सन्त्येवमपि बह्वयस्ता धर्मरूपेण या मताः ।
मानुषेष्वेव भान्तीह मात्रा न्यूनातिरेकतः ॥
न्यायजीवेषु ताः सन्ति स्वल्पया चापि मात्रया ।
अस्यापि नियमस्यायं व्युत्क्रमः पुनरीक्ष्यते ।
राजमाना यदन्यत्र मानवेनैव दृश्यते ।
वृत्तीनाञ्च क्रियाणाञ्च बाह्ये चाभ्यन्तरेऽपि च ॥
करणानाञ्च भावानां सर्वेषामेवमीक्ष्यते ।
इत्येवं बहुधा भेदाः प्रत्येकं प्राणिनां मताः ॥
शरीरस्यापि बोद्धव्यं तत्त्वमेवं विपश्चिता ।
साकं परिकरैरेषां जीवानां स्थूलवस्तुषु ॥
शक्त्यादीनां नियोगाय बाह्याभ्यन्तरवर्त्तिषु ।
नियतावश्यकानां वै यन्त्राणां सङ्घमात्रता ॥
अनेनैव सहायेन जीवाः शक्तिसमन्विताः ।
आयतन्ते वहिर्भूतान् पदार्थानान्तरानपि ॥
अन्तरेण तु यन्त्राणि रचितानि यथाविधम् ।
न च प्रवर्त्तितुं जीवाः शक्नुवन्त्येषु वस्तुषु ॥
नैतदेवं शरीरेऽस्मिन् क्वचित् किञ्चित् प्रदृश्यते ।
तथाविधं न यद्‌यन्त्रं यन्त्रांशो वा भवत्युत ॥
तस्मादेषां शरीराणां तत्त्वं स्यात् यन्त्ररूपता ।
न सौन्दर्य्याय देहस्य रचनैवं कदाचन ।
न द्रष्टुः प्रीतये वापि न वा कुत्सितदृष्टये ॥

निर्मातुः शिल्पिताया वा दर्शनायैतदीदृशम् ।
यदृच्छया च नैतस्य सम्भवेद्रचनेदृशी ।
प्रचारायात्मशक्तीनामित्वदमेवं विधं मतम् ॥
सुन्दरत्वस्य यज्ज्ञानं कुत्सितत्वादिकस्य च ।
सर्वमज्ञानसम्भूतं तस्मात्तद् भ्रम एव हि ॥
शरीरादीनि नामानि तदङ्गानां ततोऽस्तदा ।
यदासन् संप्रयुक्तानि पूर्वजैः प्रपितामहैः ॥
क्रियाविज्ञानपूर्वन्तु नत्तत्कर्मप्रकाशकैः ।
धातुभीरचितानीति सर्वत्रैवाधिगम्यते ॥
शीर्य्यते सर्वदैवैतद्बाह्यै द्रव्यैश्च पूर्य्यते ।
शरीरमिति नामास्य देहेति च निगद्यते ॥
विस्तीर्य्यते च तेनैतत् तनुरित्यभिधीयते ।
मरणान्मर्त्यसंज्ञा च कृता पूर्वविचक्षणैः ॥
एवं चान्यानि नामानि कीर्त्तितानि यथायथम् ।
रूपाणां प्रापणाच्चैव बाह्यानामात्मसन्निधौ ॥
चक्षुषो नयनं नाम कृतं शरीरकोविदैः ।
आलोचनज्ञानमात्रहेतुत्वाल्लोचनन्तथा ॥
रूपप्रत्यक्षहेतुत्वाद् दृक् च नाम प्रकीर्त्तितम् ।
तेषाञ्चैवात्मसात्कारे चक्षुस्तत् करणं च यत् ॥
शब्दानां ग्रहणार्थस्य श्रुधातोः करणाभिधात् ।
प्रत्ययाच्छ्रवणं नाम साधयित्वा प्रकीर्त्तितं ॥
कर्णनामाप्येवमेव रसनास्यादिकानि च ।
अन्येषामपि चाङ्गानां सर्वेषामेवमेव च ॥

अर्थयुक्तानि नामानि कीर्त्तितानीह पण्डितैः ।
तदानीन्तु क्रियामात्रं सर्वैरेवाभिगम्यते ॥
सर्वेषामेव नाम्नाञ्च श्रवणान्मानवैः सदा ।
प्रत्यक्षं च तथैवासीदन्ययन्त्रस्य यादृशम् ॥
तुरीवेमादिरूपस्य तत्तत् कर्मसमन्वितम् ।
केवलाकारदृष्टिस्तु न बभूव कदाचन ॥
ततः काले बहुतिथे व्यतीते सुधियामपि ।
व्यवहारादजस्रञ्च क्रियाज्ञानं विनैव हि ॥
यन्त्रत्वञ्च विहायैव सर्वाङ्गानां नृणां क्रमात् ।
नयनश्रवणादीनां मूर्त्तिमात्रं प्रगृह्य च ॥
आरेभे ज्ञानमुत्पत्तुं तदा स्वार्थे लयं गते ।
रूढत्वमगमंस्तानि नामधेयानि च क्रमात् ॥
तदा शारीरतत्त्वेषु सेन्द्रिये मानुषेऽपि च ।
अन्धानां सर्वमर्त्यानां यन्त्राणि विविधान्यपि ॥
आपेदिरेऽङ्गतामात्रं शरीरस्य पृथक् पृथक् ।
शरीरञ्च तथा स्वार्थमपास्य व्यक्तितां गतम् ॥
न ते व्यजानन् देहस्य शरीरस्याथवा पुनः ।
प्राक् प्रवृत्तेर्निमित्तन्तमर्थमङ्गचयस्य च ॥
अध्यात्मकुशला ये च वेदान्तादिप्रसादतः ।
ये च शारीरतत्त्वज्ञा अनूचाना महाशयाः ॥
रूढत्वेनावबुध्यापि ते स्वार्थञ्च विजज्ञिरे ।
तेषामवद्यसौन्दर्य्यविज्ञानं संस्पृशन्ति न ॥

अलं सम्यक् प्रभुत्वाय वालिशानान्तु का कथा ।
यद्यपीयमनेकेषां यन्त्राणां संहतिस्तनुः ॥
यद्यप्येतानि यन्त्राणि कफरक्तरसादिभिः ।
निर्मितानि तथा सार्कं मलमूत्रान्वितानि च ॥
यद्यप्येतान्यस्थिमांसशिरादीन्येव रूपतः ।
अनन्तच्छिद्रलोमाढ्यत्वग्वस्त्रेणावृतानि च ॥
अनन्तकृमिकीटादिपूरितानि च यद्यपि ।
यद्यप्येतत् सर्वमेव शाकसूपादि विक्रिया ॥
तथाप्येवंविधे देहे तेषां दर्शनमद्भुतम् ।
सर्वेषां नैव तत्त्वानामेषां स्फुरति किञ्चन ॥
सदा प्रत्यक्षसिद्धानां तेषां जडधियां हृदि ।
तत्र वात्र प्रपश्यन्ति वाल्ययौवनमाधुरीम् ॥
वार्द्धक्येऽरुचिरं रूपमरूपत्वमथापि वा ।
शितानीव च शस्त्राणि निर्मितानि दृढास्थिभिः ॥
पट्टनि दशनाख्यानि च्छेदभेदक्रियासु च ।
मुखनामकगर्त्तस्य द्वारे संसज्जितानि च ॥
मुक्ताकुन्दप्रसूनाद्यैः कल्पयन्त्यविवेकिनः ।
तं च गर्त्तं बहुविधैर्लालाद्यैः परिपूरितम् ॥
उपमीय पङ्कजाद्यैः सन्तुष्यन्ति भृशं नराः ।
प्राकृतांस्तांश्च लालादीनमेध्यान् गरलान्वितान् ॥
पश्यन्त्यमृतरूपेण किं मोहेनाकृतं भवेत् ।
नासेयं भस्त्रया तुल्या श्लेष्मलोमादिसङ्कुला ॥

किं रूपं ते प्रपश्यन्ति त एवात्र विजानते ।
नयनश्रवणे चापि नानाकारैः पृथग्विधैः ॥
बहुभिर्यन्त्रसङ्घातैराचिते कतिधैव तु ।
चकोरखञ्जनाद्यैस्ते वर्णयन्त्यद्भुतन्तु तत् ॥
एषां समष्टिभूतं यदाननं परिचक्ष्यते ।
तच्च पङ्कजचन्द्राद्यैर्बहुधा रूपयन्ति ते ॥
अन्यान्यप्येवमादीनि यन्त्राणि बहुधाद्भुतम् ।
वर्णयन्ति च पश्यन्ति तच्च नाविदितं तव ॥
परं तत्त्वन्तु विदुषां शरीरस्य सुचेतसाम् ।
केवलं यन्त्ररूपत्वं जागर्त्ति हृदये सदा ॥
सत्यरूपञ्च विज्ञानमपेक्षत इदं मतम् ।
चतुर्थव्यवहारस्य भूमाविति निगद्यते ॥
क्रियामात्रस्य निष्पत्तौ यन्त्रमावश्यकं भवेत् ।
तासां निर्वृत्तये चैषा नियता यन्त्रसंहतिः ॥
ता जीवस्यैव विज्ञेयास्तदर्थञ्चैतदिष्यते ।
जीवा एव च कर्त्तारः शरीराणां विनिर्मितौ ॥
सहायैर्वासनादृष्टै रानुकूल्ये तथेशितुः ।
उपरिष्टात्तु तत्तत्त्वं वक्ष्यामोऽत्र यथामति ॥
क्रमस्त्वादौ शरीरस्य निर्मितौ परिदृश्यते ।
सिद्धान्तश्चेदयं तात ! निश्चितस्तत्त्ववेदिनाम् ॥
आत्मशक्तिप्रचारार्थं देहानां यन्त्ररूपता ।
तनूनां निर्मिते भेदः प्रत्येकं तेन गम्यते ॥

तेनैव स्थावरान्तानां मर्त्यादीनाञ्च जीवताम्।
जातिभेदेन देहानां भिन्नाकारोऽत्र साध्यते ॥
प्रत्येकञ्च स्वजातीनां भेदस्तेनोपपद्यते।
यावन्तो मात्रया वापि विभिन्नाः सन्त्यनेकधा ॥
धर्माधर्मादयो भावा येऽत्र पूर्वं प्रकीर्त्तिताः।
आत्मस्थाः करणस्थाश्च तै स्तैस्तदनुसारतः ॥
स्फुरितै स्तत्क्रियाभिश्च संवृत्ताभिर्यथायथम्।
रचिता मूर्त्तिरेवन्तु देहनाम्नि पृथक् पृथक् ॥
यस्मिन् प्राणिनि या शक्तिर्वृत्तिर्वापि न विद्यते।
तत्प्रचाराय यद् यन्त्रं तस्मिंस्तन्न विरच्यते ॥
स्वल्पा स्वल्पतरा वापि मात्रा यासाञ्च विद्यते।
तासिस्तेनैव मानेन यन्त्राणां स्याद् विनिर्मितिः ॥
आधिक्येनैवमेव स्यान्मात्रायाः शक्तिवृत्तिषु।
बह्वय एव च ता याश्च विद्यन्ते मानवादिषु ॥
जङ्गमेषु न विद्यन्ते स्थिरेषु वीरुधादिषु।
तस्मान्न स्थावरीयेषु शरीरेषु विनिर्म्मितः ॥
तादृशो यन्त्रसंघातो यथैतेषु नरादिषु।
इति निर्धार्य्य हृदये सिद्धान्तमपरं शृणु ॥
ततो ज्ञास्यसि येनैते प्राणिनो मानवादयः।
उद्भिज्जनिर्मितान् भावान् विकृत्यैव यथाविधम् ॥
यथास्वं देहयन्त्राणि रचयन्ति पृथक् पृथक्।
उपादानगतं तं तु प्रत्यवेक्ष्याकृतौ न तु ॥

तदीय एव भेदो हि यथावदत्र वक्ष्यते ।
पृथग्विधानि यन्त्राणि यथाशक्त्यादिभेदतः ॥
तन्निर्मापकभावानामपि भेदस्तथेक्ष्यते ।
हृत्पिण्डं यैः पदार्थैस्तु फुस्फुसं निर्मितं न तैः ॥
एकैरस्थीनि रच्यन्ते मांसानि चापरैरिह ।
स्नायवो वा नाडिका वापि तथैवान्यैर्विनिर्मिताः ॥
प्रत्येकमेव यन्त्राणामेव भिन्नैर्विनिर्मितम् ।
पदार्थैर्नैव पश्यामो यत् समानैर्द्वयं कृतम् ॥
एवमुद्भिज्जजातीनामपि यन्त्रविनिर्मितिः ।
प्रत्येकं च भवेत्तेषां दारुपत्रत्वचान्तथा ॥
पदार्थैः पृथगाकारै रचितञ्च पृथग्विधम् ।
न चैवेदं कदाचिद् यत् कस्मिंश्चिदपि जङ्गमे ॥
जीवदेहे न पश्यामो दारवेनैव निर्मितम् ।
भावेन यन्त्रमंशो वा तथा यन्त्रस्य कस्यचित् ॥
ये भावाः प्राङ्महीजातै मूलभूतैर्विनिर्म्मिताः ।
एल्वुमिनादयस्ते तु दृश्यन्ते जङ्गमाकृतौ ॥
तस्मादुद्भिज्जसंघातै निर्म्मिताः प्रथमाद्भुते ।
ये भावा भूतजातीनां सर्वांश्चैतानशेषतः ॥
उपभुज्यान्यथाभावं प्रापय्यच शरीरिणः ।
मानवाद्याश्चराः सर्वे जनयन्त्यात्मनो हितान् ॥
यथा यत्परिमाणेन भात्रा एल्वुमिनादयः ।
संगृहीताः समर्थाः स्युस्तत्तच्छक्तिप्रसर्पणैः ॥

सर्वतस्तेन तेनैव परिमाणेन तेऽन्विताः ।
तत्र तत्र च यन्त्रे स्युराकृष्टाः प्राणकर्मणा ॥
किञ्चिच्चैवान्यथाभावं प्रापिता नात्र संशयः ;
एलुवुमिनादयस्त्वेवं विकाराः प्रथमाश्च ये ॥
सर्वं एवानुवर्त्तन्ते स्वस्वप्रकृतिसंस्थिताः ।
सर्वयन्त्रेषु देहस्य चराणां प्राणिनामिह ॥
विनाशे च न तेषान्तु कश्चिद्धेतुः प्रदृश्यते ।
आरम्भकाहि सर्वेषां यन्त्राणान्ते प्रकीर्तिताः ॥
न तेषां यन्त्ररूपत्वं कदाचिदिह दृश्यते ।
प्लाष्टिकाद्यास्तु ये प्रोक्तास्तेषां रूपद्वयं मतम् ॥
प्रकृतित्वञ्च यन्त्राणां सूक्ष्मयन्त्रत्वमेव च ।
तस्मान्न तेऽलमन्येषां प्रचाराय यथायथम् ॥
शक्तिवृत्तिक्रियाणां च प्राणिनां भिन्नवर्त्मनाम् ।
तस्मात्तदुपमर्द्देन स्वानुकूल्यं यथा भवेत् ॥
आरम्भकञ्च यन्त्राणां यन्त्ररूपञ्च सौक्ष्मतः ।
रचयन्त्यपरं भावं प्राणिनो मानवादयः ॥
अनेन हेतुनोद्भिज्जा भावाः स्युरुपमर्द्दिताः ।
सम्बन्धश्चैवमेवेह स्थानूनां जङ्गमैः सह ॥
अत्र चेत् त्वमिदं तत्त्वं पृच्छेः सूक्ष्मबुभुत्सया ।
कस्मादुद्भिद एवात्र भूतानामुपमर्द्दने ॥
समर्थाः प्रथमेनैव प्राणिनो मानवादयः ।
स्थिरे चैवंविधे तत्त्वे स्थावरा एव पूर्वजाः ॥

जङ्गमानां भवन्त्येवं सिद्धान्तश्च प्रसज्यते।
सोऽयं किं निर्विवादेन ग्राह्यः स्यादेवमादिकम्॥
उद्देशेनेह यत् किञ्चिद् वक्ष्यामस्तत्र दुर्ग्रहे।
पुनरध्यात्मविद्यायां वक्ष्यामो विस्तरादिदम्॥
प्राणस्यैवाल्पसामर्थ्यं हेतुरत्रानुमीयते।
यन्मत्स्या मूलभूतानि विकर्त्तुं प्रभवन्ति न॥
इह हि त्रिविधा जीवा ज्ञानादिशक्तिभेदतः।
केचिज् ज्ञानप्रधानाश्च क्रियाशक्तिपराः परे॥
अपरे प्राणशक्तिस्थाः प्राधान्येनैवमीक्ष्यते।
तत्र प्रथमजातीया मानवा एव केवलाः॥
द्वितीये पशवो ज्ञेयास्तिर्यञ्चश्चाप्यनेकधा।
वयांसि चापि सर्वाणि तृतीये स्थावरा मताः॥
तिर्य्यञ्चोऽपि च केचिद् ये जायन्ते मृत्तिकादिषु।
महीलतादयस्तेऽपि चोद्भिस्त्वेन हि कीर्त्तिताः॥
यस्माद् भूमित एवैते जायन्ते स्थावरा न तु।
एते स्थावरवच्चापि भूतानां विकृतौ क्षमाः॥
इति केचिद् वदन्तीह प्राणितत्त्वविदो जनाः।
तेषामेव मते तात! परतोऽपि निगद्यते॥
एतेषां सत्यपि ज्ञाने सति वा परिचालने।
प्राणेन ते ह्युभे चैव सान्तरालीकृते स्थिते॥
स्थावराणां चराणान्तु नोद्भिदां तादृगीक्ष्यते।
तेषां गतिः स्फुटतरा ज्ञानञ्च नोद्भिदां समम्॥

अयमेवात्र भेदोऽस्ति प्राणस्येष्टा तु तुल्यता ।
प्राणशक्तिस्ततस्तेषामलम्भूतविमर्द्दने ॥
एवं ब्रुवन्ति किन्त्वत्र नैकमत्यं निबोध मे ।
यदुक्तं स्थावरा एव शक्ता भूतविमर्द्दने ॥
गोमयादिविमिश्रायां भूमावेव मह्वीलता ।
अन्ये वा यदि केचित् स्युस्तिर्य्यञ्चस्तादृशा मताः ॥
तेऽपि तद्वत् प्रजायन्ते शुद्धभूमौ न तु क्वचित् ।
गोमयाद्याः स्थावराणां विकाराः सर्वसम्मताः ॥
तस्मात् स्थावरतस्तेषामुत्पत्तिरवधार्य्यते ।
स्थावरा एव तस्माच्च शक्ता भूतविमर्द्दने ॥
न शक्नुवन्ति तत् कर्त्तुं सर्व एवात्र जङ्गमाः ।
तेषां प्राणस्य तथात्वाच्छ्रेष्ठास्ते ज्ञानकर्मणोः ॥
मानवानां ज्ञानशक्तिर्यदि सम्यक् परिस्फुरेत् ।
किं न व्याप्नोति तत्त्वं तन्न पश्यामस्त्रिविष्टपे ॥
इन्द्रियाणि यथा तेषां यथान्तःकरणानि च ।
लघुसूक्ष्माणि शुद्धानि सर्वार्थग्रहणानि च ॥
पश्वादीनान्तु यज्ज्ञानमुल्लेख्यं नैव तत्र तत् ।
क्रियाशक्तिर्हि तेष्वास्ते ज्ञानात् प्राणाद्‌ गरीयसी ॥
अतो न प्रभवन्त्येते भूतानां विकृतौ क्वचित् ।
द्वितीयं प्रश्नतत्त्वन्तु संक्षेपादुच्यतेऽधुना ॥
यदुद्भिदो मनुष्याणां किमेतत् पूर्वपूरुषाः ।
तनूनां परिणामोऽयं प्राणिनां द्विविधेष्यते ॥

प्रथमे तत्र कल्पे तु स्थावरा एव पूर्वजाः ।
पाश्चात्याः पण्डिताः सर्वे कल्पयन्त्येवमेव च ।
यत् परम्परया मर्त्याः क्रमोन्नतिविधानतः ।
स्थावरेभ्यो हि जीवेभ्यः सञ्जाता वर्षकोटिभिः ॥
एवञ्चेन्मन्यसे सत्यमिष्टापत्तिस्तदा भवेत् ।
महानत्र विरोधस्तु क्रमावनतिवादिभिः ॥
ये त्वीश्वराद्देवसृष्टिं देवेभ्यश्चर्षिसम्भवम् ।
ऋषिभ्यः पुनरेतेषां मर्त्यानामुद्भवं क्रमात् ॥
प्रपश्यन्ति त एवेह क्रमावनतिवादिनः ।
सर्वं एवात्र बोद्धव्याः शब्दा जातिपरा इमे ॥
देवाद्यास्तत्वनेकाश्च प्रत्येकं जातयो मताः ।
प्रायेणैव च ताः सर्वा देवाद्यन्तर्गताश्च याः ।
तेषां प्रत्येकमापद्य जीवा मानवतां गताः ।
देवेभ्य ऋषयः स्थूला ऋषिभ्यश्चापि मानवाः ॥
क्रमादवनताश्चैव तेभ्यो ज्ञानादिशक्तिभिः ।
एवं क्रमेण या सृष्टिः क्रमावनतिरेव सा ॥
श्रुतिभिः स्मृतिभिश्चैषा सर्वत्रैव प्रकीर्त्तिता ।
क्वचित् क्वचिच्छ्रुतावेव प्रथमापीषदिङ्गिता ॥
सम्भवेत् त्वार्यवंश्यानां नैषा रीतिः स्मृता क्वचित् ।
क्रमावनतिरीत्यैव तेषामुत्पत्तिरीरिता ॥
प्रश्नभारोऽयमत्रैव पक्षे गुरुतयेक्ष्यते ।
यत् स्थावरपदार्थेन निर्मिता अपि मानवाः ॥

कथं तत्पितृका एते न भवेयुः क्रमादिति ।
यदुच्यतेऽत्र संक्षेपात् सावधानो निशामय ॥
यदि त्वया कदाचित्तु दृष्टो वा श्रुत एव वा ।
प्रेतैर्यथा स्वमूर्त्यङ्गे स्थूलभूतस्य संग्रहः ॥
क्रियते तद्वदेवात्र मानवैः पौर्वकालिके ।
स्थावरीयपदार्थानामभावेऽपि च सर्वथा ॥
सूक्ष्मभूतसमारब्धे देहे स्थावरसंग्रहः ।
प्रेता हि बाह्यभोगेषु यदा स्युरनुरागिनः ॥
अत्यन्तमात्रया नैव तेषां संग्रहणे क्षमाः ।
न हि तेषां तथा देहो विषयेषूपयुज्यते ॥
स्थूलभूतैर्हि भूतानामेषां सम्बन्ध ईक्ष्यते ।
तस्मान्नानाविधोपायैः प्रेतविद्यासु कीर्त्तितैः ॥
संश्लिष्य स्थूलभूतानि ते पुष्णन्ति निजास्तनूः
क्षणादेव पुनस्तेषां भूतानां जायते क्षयः ॥
किञ्चिद्भोगावसाने च जायन्ते पूर्ववत् पुनः ।
तथैवेहर्षिजातीयाः स्थूलभोगबुभुक्षया ॥
बलीयस्या प्रणुन्नास्ते क्रमात् स्थौल्यं प्रपेदिरे ।
वायुतः स्थूलभूतानि समाकृष्य पुनः पुनः ॥
स्वाभाविकानि यानीह रसायनभवानि च ।
कानिचित् स्थावरेभ्यश्च तत्फलेभ्यश्च कानिचित् ॥
विकीर्णानि मरुद्राशावितरैर्मिश्रितानि च ।
समगृह्णञ्छरीरेषु ऋषयः सूक्ष्ममूर्त्तयः ॥

शनैः शनैस्ततो याताः क्रमेण स्थूलमूर्त्तिताम्।
यदा चैवं शरीराणि तेषां स्थूलानि जज्ञिरे ॥
यदम्बुपय आदीनि सुद्रवाणि फलानि च।
कथञ्चिचच्छक्नुवन्त्येव संग्रहीतुं शनैः शनैः ॥
तदा मुखत एवैते भोक्तुमारेभिरे पुरा।
पातुं लेढुञ्च यद् यद्वत् तेषां स्वादानुरागतः ॥
शरीरस्य च पुष्ट्यर्थं शक्तेश्चैव यथायथम्।
ततः क्रमात् पुष्टिमापु र्बभूवुः शक्तिमन्ति च ॥
ततश्च मर्त्यरूपाणि कालेन बहुना शनैः।
ततो नानाविधोपायैः पानभोजनलेहनैः ॥
अपरोक्षपरोक्षाभ्यां स्थावरै रचितान् बहून्।
भावान् प्रगृह्य ये प्रोक्ता श्चक्रुर्देहांश्च तन्मयान् ॥
क्रमावनतिरीत्या तु परिणामोऽयमिष्यते।
एवं मानवजातीनां देवताभ्यः शनैः शनैः ॥
उत्पत्तिसम्भवं मन्ये तत्तज्जातिक्रमेण च।
अनुत्पत्तिः स्थावरेभ्यश्चातो मानवमूर्त्तिषु ॥
स्थावरोपचितत्वञ्च बभूवेत्यनुमीयते।
तस्मात् स्थावरजो भावो न लिङ्गं मर्त्यजातिषु ॥
स्थावरेभ्यः समुत्पत्तेरनुमाने भवेदिति।
असंशयन्तु विद्धयत्र पक्षयोरुभयोरपि ॥
एतेना मानवाः स्युरुद्भिज्जास्तु पुरातनाः।
क्रमावनतिराक्रान्ते मन्तव्यमेवमत्र च ॥

यन्मनुष्यादपि पराः सृष्टयः स्युरनेकधा ।
क्रमान्मानवशक्तीनामीषदीषत् परिक्षये ॥
वर्वरादिकजातीनां यावन्मानवसंस्थिति ।
वन्यान्तानां भवेत् सृष्टिस्तावद्वै मर्त्यनाम च ॥
तेभ्यो वा वानराद्याः स्युस्ततोऽन्ये पशवोऽपि च ।
ततो वा स्थावरान्ता स्यात् सृष्टिरित्यपि सम्भवः ॥
क्रमावनत्युन्नतिभ्यामेवमस्मिन् जगत्त्रये ।
प्रवर्त्तितं सृष्टिचक्रं विधात्रा कर्मयोगतः ॥
प्रत्यक्षपूर्वानुमानवलेनैतत् प्रकल्प्यते ।
दुरूहमेतत्तत्त्वन्तु वक्ष्यामीति यथामति ॥
प्रतिश्रुतं पूर्वमेव तदेवात्रावधार्य्यताम् ।
इदानीं श्रूयतां तात ! यत् तत्त्वं प्रकृतं पुनः ॥
विकृत्य स्थावरान् भावान्मानुषो जायते यथा ।
मृत्तिकाद्यानि सर्वाणि तत्त्वानि मानवो बलात् ॥
प्राणशक्तेरुपामृद्य भावेष्वेलवुमिनादिषु ।
प्रत्याहृत्य पुनस्तेभ्यो निर्मिमीते पृथक् पृथक् ॥
सूक्ष्मवीजानि देहस्य मर्त्याकारस्य सर्वशः ।
अणुवीक्षणदृश्यानि नानाकाराणि भूरिशः ॥
तेषां पुनः समाहारादन्येषाञ्च यथायथम् ।
अक्सिजेनादिवायूनामन्येषाञ्चैव तादृशाम् ॥
भूतानां गन्धकादीनां क्षारादीनान्तथैव च ।
रसायनेन जातानामम्लादीनाञ्च संग्रहात् ॥

पुष्णन्ति तानि वीजानि प्रकारैर्बहुभिः पुनः ।
सूक्ष्मकोषांस्ततस्तेभ्यो यान् प्रोट इति संज्ञया ॥
पाश्चात्याः पण्डिताः प्राहुरेल्बुमिनियमित्यपि ।
जीवकोषसमुत्पत्तिस्तेभ्यस्तेभ्यश्च तन्तवः ॥
मांसपेश्यादियन्त्राणि यानि यानीह सन्ति च ।
शरीरे तानि सर्वाणि तन्तुप्रकृतिकानि हि ॥
एवं मानवदेहोऽयं यथान्यायं विरच्यते ।
पदार्थै भुक्तपीतैस्तु ये यैर्यन्त्रैर्यथा इमे ॥
उद्भवन्त्यधुना तच्च समासेन निशामय ।
नाड्यो बहुविधाः सन्ति शरीरं व्याप्य सन्तताः ॥
तत्र याः स्नेहवाहिन्यो रक्तवाहिन्य एव च ।
काश्चित् तास्वेव जायन्ते वीजानि प्रथमानि नः ॥
द्रव्याणि भुज्यमानानि संयुज्यन्ते यदा मुखे ।
तदैव वीजसम्भूते रादिमः काल इष्यते ॥
स्नेहप्रवाहिनाडीषु मुखस्थासु पृथक् पृथक् ।
ततो मलाशयं यावदपसर्पन्ति तानि च ॥
तावत् कण्ठादिनालीषु पक्वपाकाशयादिषु ।
यन्त्रेषु सर्वरूपेषु भुक्तद्रव्यप्रवाहिषु ॥
अन्तस्ततासु नाडीषु रासायन्यभिधासु च ।
तथा रुधिरनाडीषु यास्तत्र तत्र संज्ञिताः ॥
सर्वास्वेवासु नाडीषु जायन्ते वीजराशयः ।
सर्वा एव हि ता नाड्यस्तत्र तत्र सुसङ्गताः ॥

विनिर्मितान् रसांस्तांस्तानामपक्वाशयादिकैः ।
यन्त्रै र्नानाविधान् सर्वान् नानोपादानमिश्रितान् ॥
प्राणशक्तेश्चोदनया विकुर्वन्ति यथायथम् ।
शोषितेभ्यो रसेभ्यस्तु तासु बीजसमुद्भवः ॥
तथा यकृति मज्जायां प्लीह्नि हृत्पिण्डफुस्फुसे ।
अन्यस्मिन्नपि कस्मिंश्चिद् दृश्यते बीजसंग्रहः ॥
उत्पत्तौ रसजातानां प्रक्रियामधुना शृणु ।
परिपाकक्रियां यां तु प्रवदन्ति विपश्चितः ॥
मुखे त्वर्पणमात्रेण द्रव्यं यद् भक्षणोचितम् ।
तत् सर्वं दन्तजातेन भूयो भूयश्च चर्व्यते ॥
यदा तदा जिह्वयापि तत् परावर्त्तते मुहुः ।
तदानीमेव दन्तेभ्यो गण्डाभ्याञ्च पुनः पुनः ॥
विनिःसरति पाकाय रसजातं पृथक् पृथक् ।
प्रथमो शाण्डिको नाम लालागण्डसमुद्भवः ॥
तत्र स्वल्पतरश्चाद्यो गण्डजोऽधिकमात्रया ।
पिच्छिलौ तावुभावेव क्लेदकौ चापि वस्तुनः ॥
श्वेतसारात्मकेभ्यश्च समर्थौ शर्कराकृतौ ।
उभाभ्यामेव चैताभ्यां क्रियमाणान् मुहुर्मुहुः ॥
भुक्तद्रव्यं रसाकारमंशान्; प्रतिपद्यते ।
श्लेष्मझिल्लया प्रगृह्यन्ते गण्डाभ्यां तद्रसाः पुनः ॥
देहोपयोगिभिस्ते च नानाभावैर्विमिश्रिताः ।
झिल्लीनामन्तरालेषु नाड्यो याः स्नेहवाहिकाः ॥

यासां मुखानि लग्नानि झिल्लीनां पृष्ठदेशतः।
सच्छिद्रत्वात्तु झिल्लीनां ताभ्यस्ताश्चैव तद्रसान्॥
गृहीत्वा जनयन्तीह देहबीजानि भूरिशः।
लालाभिः कृतपाकेन जातानि बहुवस्तुतः॥
ततः कण्ठादधस्तानि गच्छन्त्या पायुयन्त्रतः।
भुक्तपीतानि वस्तूनि तेष्वेव च यथाक्रमम्॥
पाकस्थल्यादियन्त्राणि संयुज्य विविधान् रसान्।
पचन्ति विधिना तानि प्रापयन्त्यन्यरूपताम्॥
तत्र पाकादियन्त्राणां स्थितिर्मूर्त्तिश्च कथ्यते।
प्रदर्श्यते च चित्रेण तेन सर्वमवैष्यसि॥
अधस्ताद्रसनामूलादागुह्यद्वारतस्तु या।
लम्बमाना नली प्रोक्ता सैवान्नवाहिनी मता॥
तत्र ये स्थानभेदेन नानाकाराः पृथग्विधाः।
नवभिश्च समाख्याभिः कथ्यन्ते ते पृथक् पृथक्॥
गलनाली तु कण्ठाधः पर्य्यन्तं तत्र कीर्त्यते (फेरिंस्)
तां तात! प्रथमे चित्रे निबुध्यस्व क चिह्नतः॥
तदधस्तादौरसीति नाम्नात्र कथ्यते मया (इसोफेनस्)
उरो यावत् तावदेव स्थानमस्या निगद्यते॥
गलनाली यथा तात! सरलैव विलम्बिता।
न तथेयं निम्नतस्तु किञ्चिद्वाममुपाश्रिता॥
ख चिह्नेन विजानीहि तातैनामन्नवाहिनीम्।
एतत् पर्य्यन्तमेवास्या व्याससाम्यञ्च विस्तृतेः॥

एनयोस्तु पाककार्य्ये न विशेषोपयोगिता ।
अन्नापसारणे त्वस्याः कारणत्वं प्रकल्प्यते ॥
द्वितीया न तथा पाकहेतुत्वादुपसर्पति ।
स्यन्दते हि रसोऽप्यस्याः स्तोकः स्तोकश्च पाचकः ॥
ततः पाकस्थली नाम्नी वक्षसोऽधोऽवतिष्ठते । (ष्टमाक्)
या सङ्कोचविकाशाभ्यां याति श्वाससहायताम् ॥
दृश्यते च बहिर्देशात् सन्नमन्त्युन्नमन्त्यपि ।
सोऽयमन्नप्रवाहिन्यास्तृतीयं रूपमिष्यते ॥
जलीयमशकाकारा वामतो दक्षिणं गता ।
व्यासोऽस्यास्त्वौरसीव्यासाद्धवेद्दशगुणोऽपि च ॥
ग चिह्नेनावगच्छैनां प्रधानां पाककर्मणि ।
अस्या गर्भाद्य य आग्नेयः स्यन्दते पाचको रसः ॥
अम्लमुख्यो महातेजा वरिष्ठः पाचकेषु यः । (ग्याष्ट्रिक्युस्)
सोऽयमन्नं विशेषेण द्रवयन् क्लेदयन्नपि ॥
नानारूपगुणैर्युक्तो विकरोति पृथक् पृथक् ।
तदानीं स्नेहजातीनां पदार्थानाञ्च योजकाः ॥
भवन्ति गलिता भुक्तास्तन्तवो न तु तत्कणा ।
ते स्वरूपेण तिष्ठन्ति नान्यो भावोऽत्र दृश्यते ॥
प्रोटिनाह्वास्तु ये सन्ति ते पेप्टोन् रूपताङ्गताः ।
पल्बुमिनीयमुख्यानि प्रायेण गलितानि च ॥
श्वेतसाराश्च निर्वृत्तिः शर्कराजन्मनस्तदा ।
श्वेतसारस्तथा पेप्टोन् गलिताश्चैल्बुमानिकाः ॥

अम्लादिरससम्मिश्रा याश्च स्नेहकणास्तदा ।
कार्ड् लिं नामा तु यो जातः पाकस्थल्यां रसोऽपरः ॥
दुग्धस्य केजिनं द्रव्यं घनीभवति तेन च ।
सर्वे सम्भूय ते येन रूपेण परिवर्त्तिताः ॥
उपादानदेश्यमेतदस्माभि विनिगद्यते । (काइम्)
एवं कृतात्तु तक्रुकात् पाकस्थल्यर्पिते रसैः ॥
द्रव्यात् सङ्कोचतस्तस्याः श्लेष्मझिल्लया च गर्भतः ।
नानापदार्थसम्मिश्राः प्रगृह्यन्ते रसाः पुनः ॥
तान् रसाञ्छोषयन्तीह नाड्यो रसवहाश्च याः ।
रसप्रवाहिकास्तत्र गृह्णन्ति स्नेहसंयुतान् ॥
असृग्वहास्तु नद्भिन्नान् काठिन्यादिगुणान्वितान् ।
याश्च रक्तवहा नाड्य स्तां झिल्लीं समुपाश्रिताः ॥
सम्पद्यते ततोऽधस्ताद् यादृग् भवति तच्छृणु ।
पाकस्थल्याः परं तात ! सैवान्नवाहिनी नली ॥
सदृशं व्यासमास्थाय पुनरौरस्यमान्नया ।
दक्षिणस्मात् परावृत्य मध्यदेशमुपागता ॥
उपरिष्टान्नाभिदेशादस्याः स्थानं निगद्यते । (भिडभिनम्)
त्रिस्रोतोनामिकाञ्चेमां विजानीह्यन्नवाहिनीम् ॥
यदुपादानदेश्यन्तदितः पूर्वं प्रकीर्त्तितम् ।
गृहीतशेषं तद् द्रव्यमनयाधः प्रसर्पति ॥
स्वगर्भात् स्यन्दितेनापि पच्यमानं रसेन च ।
पित्तनल्यर्पितो यश्च क्लोमनल्यर्पितश्च यः ॥

तौ चाप्यन्येन संयुक्तावनयाधः प्रसर्पतः ।
एवं स्रोतांसि त्रीण्यत्र त्रिस्रोतास्तेन कीर्त्तिता ॥
इमां च चिह्नतस्तात ! दृष्ट्वा प्रत्ययमाप्स्यसि ।
पित्तक्लोमनलीयोगस्थाने च ङ च लक्षणे ॥
तद्रसैः पच्यमानानि भुक्तद्रव्याण्यशेषतः ।
आपायोरवसर्पन्ति प्रक्रियाविधिना पुनः ॥
पाकस्थल्या अधस्तात्तु क्लोमनल्याश्च पूर्वतः ।
नल्यामन्नवहायान्तु पित्तनाल्याः समागमः ॥
यकृः समुत्थिता सा च क्रमात् सूक्ष्ममुखी सती ।
चतुः-पञ्चाङ्गुलीमाना पित्तनाली प्रकीर्त्तिता ॥
पित्तात्मको रसो यक्नो विनिर्गम्य नलीमुखात् ।
तस्यां नल्यामवस्कन्द्य भुक्तद्रव्येण मिश्रितः ॥
पुनः पचति तान्येव द्रावयन् क्लेदयन्नपि ।
ततः किञ्चिदधस्ताच्च क्लोमभ्यो नलिकागता ॥
तया क्लोमरसः श्रुत्वा पुनः पचति तद्गतम् ।
भुक्तपीतं तथाभूतं द्रव्यं निम्नाभिगामि यत् ॥
पच्यमानं ततः पित्तै रसैः क्लोमोद्भवैरपि ।
टिप्सिन् कार्ड् लि डयेस्टश्च चत्वारो ये तदुद्भवाः ॥
तैश्च विक्रियमाणन्तन्नानाभावविमिश्रितम् ।
त्रिस्रोतसमतीत्याथ गच्छत्यामाशयं पुनः ॥
त्रिस्रोतसस्त्वधस्तात् सा या प्रोक्तान्नवहा नली ।
अन्त्रनाम्ना समाख्याता तथामाशयनामिका ॥

अत्राप्युपादानदेश्यनामकं यदुदीरितम् ।
तदामेनैव रूपेण प्रायेण परिशिष्यते ॥
ततश्च पच्यते भूय स्तस्मादामाशयो मतः ।
अयञ्चानेकभङ्गीभिः सव्यापसव्ययो भृशम् ॥
परावृत्य परावृत्य नाभिनिम्ने ऽवतिष्ठते ।
त्रिस्रोतसोऽप्यल्पतरो व्यासोऽस्य परिदृश्यते ॥
अयमन्नवहायाः स्यात् पञ्चमांशश्चचिह्नितः ।
क्लिन्नरूपं तथाभुक्तं चतुर्भिः क्लोमजै रसैः ॥
सह पित्तेन चाश्रित्य यद् भवेत् तन्निशामय ।
तदानीं ते क्लोमरसाश्चतुर्भावानुपाश्रिताः ॥
पृथक् पृथग् विकुर्वन्ति तत्तद्द्रव्यं यथाविधि ।
टिप्सिन् क्षारेण संयुक्तः प्रोटिड् पेप्टोन् करोति च ॥
कार्ड्लिं च पूर्ववत् कर्म श्वेतसारांश्च शर्करान् ।
डयेस्टस् फेनिलं स्नेहं निर्माति विकरोति च ॥
ततश्चामाशयरसो यः स्वरूपेण तिष्ठति ।
क्लोम्नामपि तथाभूतस्तथा पित्तरसोऽपि च ॥
एकैकशो मिलित्वा च विकुर्वन्ति यथा यथा ।
तत् प्रत्येकं विस्तरेण न वक्ष्यामीह गौरवात् ॥
समासतस्त्विदं तात ! कार्य्यमेषां निशामय ।
सम्भूय सर्व एवैते रसा आमाशयाश्रिताः ॥
स्थावरै रचितान् भावानेलबुमिनादिकान् परान् ।
मर्दयित्वा यथाकामं करोति मानवोचितान् ॥

तत्र केचित् स्वरूपान्न वियुज्यन्तेऽर्हिता अपि ।
स्वरूपमपि केचिच्च हित्वा यान्त्यन्यरूपताम् ॥
तत्रैल्बुमिन् जिलाटींश्च ये चान्ये तद्विधा मताः ।
ते स्वरूपेण तिष्ठन्ति प्रायेणेति सतां मतम् ॥
प्लण्टराद्याः पुनर्ये च ते गच्छन्त्यन्यरूपताम् ।
रसांस्तत्रादिमानेते संयुज्य च वियुज्य च ॥
रूपान्तराणि कुर्वन्ति द्वितीयानपि सर्वशः ।
विमर्द्यैव विकुर्वन्ति नरवीजं यथा भवेत् ॥
रसायनक्रिया तत्र भूतानि च पृथक् पृथक् ।
अक्सिजेनादिनामानि नीतानि फुस्फुसादिभिः ॥
उपकुर्वन्ति सर्वाणि वीजानां निर्मितौ सदा ।
जीवशक्तिः कर्तृभूता प्राणेत्यभिहिता तु या ॥
सा ह्येव रसनिर्मात्री वीजादीनाञ्च सर्वशः ।
एवं रसायनोद्भूता भावाश्च वायवस्तथा ॥
अन्यांश्च यानवोचाम प्राक् पदार्थाननेकशः ।
यानि यन्त्रप्रवृत्त्या च सम्भूतानि पृथक् पृथक् ॥
तानि सर्वाणि सम्भूय तदुपादानदेश्यताम् ।
पाकस्थल्यान्तु संयान्ति तत्रैवामाशयं गतम् ॥
उक्तैरसैः समाश्लिष्टं श्रुतेनामाशयादपि ।
रसेन पूर्ववद्रीत्या यथावद्विक्रियां गतम् ॥
घनमण्डस्वरूपं तत् पक्वान्नमभिधीयते । (काइल्)
अवशिष्टन्तु यत् तिष्ठेदेवं पाकविधौ कृते ॥

मलप्रायेण रूपेण गच्छन् निम्नं क्रमादथ।
सन्धिसङ्कटमाप्नोति षष्ठांशो यः प्रकीर्त्तितः॥
ज चिह्नेन वेदितव्य श्चित्रे क्षुद्रान्त्रस्त्वयम्।
सन्तिष्ठते द्वयोः सन्धौ पथित्वेन च दुर्गमः॥
तेनास्यैतन्नामधेयं कृतं शरीरकाविदैः।
अत्रागत्य पुनस्तात! तत् पक्वान्नं मलीकृतम्॥
यद्ग्राह्यं शरीरस्य तत् प्रायमाहरिच्च तत्।
बृहदन्त्रेण संयाति क्रमादूर्ध्वं शनैः शनैः॥

(कोलन् वा लार्ज्ज इन्टाष्टाइन्)

क्षुद्रान्त्रं वेष्टयित्वेदमधोभागं विनैव तु।
मुहुः कुटिलगत्या च स्याद् यथामृतकुण्डली॥

(अमृत जिलापीति भाषा)

तथा दक्षिणमारभ्य वामदेशमुपागता।
क्षुद्रान्त्रस्य यथा व्यासस्तथैवास्यापि दृश्यते॥
क्रियाभेदाच्चतुर्भागैर्भिद्यमानं व्यवस्थितम्।
झादिढैश्चिह्नितांस्तांस्तु चित्रे दृष्ट्वाऽवधारय॥
दक्षे झचिह्नितोऽशो यः सन्धिसङ्कटतः परः।
तस्याधस्तात् पुच्छवांस्तु कश्चिदंशोऽस्य लम्बितः॥
अत्रागत्य तु पक्वान्नमसम्यङ्मलतां गतम्।
कञ्चित् कालमवस्थाय गच्छत्यूर्ध्वं ततः शनैः॥
मलविश्रामभूमित्वादंशोऽयं मलभूमतः। (छिकं)
अस्यारम्भे कवाटोऽस्ति सन्धिसङ्कटसीमनि॥

य ऊर्ध्वतः प्रसार्य्यं स्यान्नाधस्तात्तु कदाचन ।
आमाशयात् प्रसृतानां मलत्वमुपगच्छताम् ॥
अत्रोपागमनं तस्मादनायासेन सिध्यति ।
आगत्य च पुनस्तस्मिन्नवसृप्ति र्न सम्भवेत् ॥
संख्यातः सप्तमश्चासौ स पुच्छः परिकीर्त्तितः ।
अत ऊर्ध्वं यावदस्य विस्तृतिः परिदृश्यते ॥
ऊर्ध्वगं नाम तावत्तु स चिह्नोऽशोऽष्टमश्च सः ।

(एसिण्डिङ कोलन्)

त्रिस्रोतसा यदा चेदं पुनः सङ्गममागतम् ॥
अधोमुखं नोन्मुखं वा परावृत्तन्तु दक्षिणात् ।
ऋजुनामास्य विज्ञेयं नवमांशश्चिह्नितः ॥

(ट्रान्सभार्स कोलन्)

ततः परं यदाधस्तादपसर्पति वै पुनः ।
तदाधोगमिदं नाम दशमोऽशश्चलाञ्छितः ॥

(डिसेण्डिङकोलन् )

पाककारी रसश्चात्र स्यन्दते गर्भतः सदा ।
पक्वीभूतं मलप्रायं यदामाशयतः सृतम् ॥
असौ निःशेषतस्तत्तु पचतीत्यधिगम्यते ।
अस्मादधः पुनस्ताद ! कृशतामाप्नुवन्नयम् ॥
वक्रस्तृणजलौकेव गत्या पक्वाशयो भवेत् ।
ड चिह्नं पश्य चित्रेऽस्मिन्नंश एकादशस्त्वयम् ॥
ततः परमृजूभूय वपुः स्फीततरं वहन् ।

अवसर्पत्यधस्तात्तु यावदन्तोऽस्य जायते ॥
अयं मलाशयो नाम मलानामत्र संस्थितेः । (रेक्टम्)
पक्वाशयात् प्रसृतानां शरीरानुपयोगिनाम् ॥
वृषकङ्करशाकादिरूपाणां दुर्जरात्मनाम् ।
ढ चिह्नो द्वादशांशोऽयं चित्रेऽस्मिन् निम्नभागतः ॥
निम्नांशे तस्य तातास्ति यन्त्रमाकुञ्चने रतम् ।
प्रसारणे च तस्यागे यः पायुरभिधीयते ॥
तत्रावान्तरयन्त्राणि संदृश्यन्ते बहूनि च ।
नामतो वर्णनातश्च नात्यन्तमुपयुज्यते ॥
अस्मिन् प्रकरणे तात ! तद्व्याख्यानमतः स्थितम् ।
त्रयोदशोऽयमंशः स्यान्नल्या णेन च चिह्नितः ॥
आगलात् पायुपर्य्यन्तमेवमन्नवहानली ।
बहुभिर्नामभीरूपैः क्रियाभेदैश्च वर्त्तते ॥
अस्या गर्भे समं रूपं प्रायेण परिदृश्यते ।
निम्नांशे पिच्छिलं तत्तु श्लेष्मवल्लिन्दु चेक्ष्यते ॥
केशवद्भिस्तन्तुभिश्च निर्म्मितिः परिदृश्यते ।
(सिलियारि एपिथिलियम्)
ये निम्नाभिमुखाः सर्वे काशपत्रादिवत् सदा ॥
येषां साहाय्यतो भुक्तमथवा पीतमेव च ।
सर्वं द्रव्यमधो याति न चोर्ध्वं गीर्य्यते सदा ॥
स्थितिस्थापकधर्म्माणः केशास्ते सञ्जिताः पुनः ।
आगलान्निम्नपर्य्यन्तमस्या गात्रेषु सर्वतः ॥

श्लेष्मभिल्लयोऽन्तरे देशे स्वल्पा वाप्यथवाधिकाः ।
संसज्जिताः प्रवर्त्तन्ते रसादानाय वस्तुनः ॥
अन्यनिर्म्मितिद्रूष्यापि बहुधा साम्यमिष्यते ।
पेशीसूत्रादिसंस्थानं प्रभेदाद्भिन्नतापि च ॥
प्रतिखण्डममुष्याश्च दृश्यते बहुधा पुनः ।
गलनाल्यौरसीत्येवमादिकं यत् प्रकीर्त्तितम् ॥
पाचकानां रसानाञ्च निष्यन्दश्चापि सर्वतः ।
आमुखान्निम्नपर्य्यन्तं यदि च स्यात् तथापि च ॥
तेषां प्रभेदो बहुधा खण्डे खण्डेऽत्र विद्यते ।
एवमन्नप्रवाहिन्या नल्याः संक्षिप्तवर्णनम् ॥

अथान्येऽपि च यन्त्रे द्वे पाकहेतू ब्रवीमि ते ।
यकृत् तत्रादिमं यन्त्रं द्वितीयं क्लोमसंज्ञितम् ॥
यन्त्रमाहुः पाचकानां रसानां प्रभवं बुधाः ।
यकृतस्त्वन्यानि कर्म्माणि बहूनि विविधानि च ॥
निरूप्यन्ते बुधैस्तत्र वक्ष्यन्तेऽत्रैव तानि च ।
प्रत्येकमनयोः स्थानं रूपादीनि च भावय ॥
तत्रोरसो दक्षिणस्मिन् निम्नतः पञ्जरावृतम् ।
पाकस्थलीदक्षिणतो यकृद्यन्त्रं प्रवर्त्तते ॥
चम्पाफलयुगं चेत् स्यादेकवृन्ते व्यवस्थितम् ।
यस्यैकं बृहदाकारं क्षुद्रञ्चैव द्वितीयकम् ॥

तयोरर्द्धार्द्धभागौ चेत् क्षीणौ स्यातां द्वयोरपि ।
मिलितौ च तदैवास्य कथञ्चिदुपमा भवेत् ॥
एवमंशयुगं यक्नि दक्षिणस्तु वृहत्तरः ।
वामांशात् तत्र बोद्धव्य एवमेकं द्विधा भवेत् ॥
दृश्यन्ते बहवोऽप्यंशाः प्रत्येकञ्च तयोरपि ।
बहूनाञ्चैव कोष्ठानां संहत्यैतद् विनिर्म्मितम् ॥ (लविउल्)
रसप्रवाहिनीभिर्यं पेशीसूत्रैरनेकधा ।
शिराभिर्धमनीभिश्च निबद्धा भान्ति दक्षिणे ॥
त एवावयवाः सर्वे तन्मयं यकृदुच्यते ।
विचित्रवर्णमप्येतद्दारक्तञ्चैव लक्ष्यते ॥
क्रियाश्चास्य प्रवक्ष्यामि विपश्चिद्भिरुदीरिताः ।
प्रथमा निर्म्मितिस्तासां शर्कराप्रायवस्तुनः ॥

(ग्लाइकोजिन्)

निर्म्माणमण्डलालस्य द्वितीयात्र निगद्यते ।

(एल्वुमिनास्)

भ्रूणस्य रुधिरश्वेतकणानां निर्म्मितिः परा ॥

(ह्वोयाइट् कर्‌पासेल्)

रसानां पाचकादीनां जननं रेचनन्तथा ।
क्रिया चतुर्थी यकृः स्यादिति पाश्चात्यसम्मतम् ॥
यथैताः स्युश्चतस्रस्तु तन्मे निगदतः शृणु ।
वस्तु यच्छर्कराप्रायं तच्छुभ्रं चूर्णमीक्ष्यते ॥
गन्धः स्वादश्च नास्यास्ति तथाप्यन्येन संयुतम् ।

निर्मातृ स्यादिदं वस्तु शर्कराभेदवस्तुनः ॥
शर्कराप्रायनाम्नैतदेतस्मात् समुदीरितम् ।
आकृत्या श्वेतसारेण सममेतच्च दृश्यते ॥ (ष्टार्स्)
अम्लद्रावकवच्छुभ्रशर्करास्मात् प्रजायते ।
ततोऽपि शर्कराप्रायमिदं वस्तु निगद्यते ॥
अत्युष्णेन जलेनैतद् द्राव्यमाणञ्च दृश्यते ।
सुरासारेण तु क्वापि द्राव्यते नेति लक्ष्यते ॥
शते सार्द्धैकभागात्तु मानमस्य परीक्षितम् ।
सार्द्धद्विभागपर्य्यन्तं यकृत्कोषेषु तस्थुषः ॥
मस्तिष्के मांसपेशीषु तथाश्वेतकणादिषु ।
अनेकेष्वेव भावेषु शर्कराप्रायमीक्ष्यते ॥
तदप्येतस्य कार्य्यं स्यादिति चात्रानुमीयते ।
भुक्तानां शर्कराजातिद्रव्यादस्य समुद्भवः ॥
अनेनाङ्गारको वायुर्जलभूश्चापि चीयते ।
इदं द्रव्यविशेषेण युज्यमानं यथाविधि ॥ (फार्मेण्ट्)
शर्कराभेदरूपेण यकृन्येव प्रवर्त्तते ।
रक्तस्रोतसि पश्चात्तु मिलित्वा तत् क्रमादथ ॥
कौषिकासु वर्त्तमानं संयुज्याग्निभुवा पुनः ।
(अक्सिजेन्)
वायुना मांसपेशीनां शक्तिं तापांश्च सर्वशः ॥
रक्षतीति वदन्त्येके केचिच्चान्यविधेन तु ।
तथाविधं तनोस्तापं पेशीशक्तिञ्च रक्षति ॥

नियमेन यथोक्तेन प्रवदन्तीति ते पुनः।
द्वितीयमस्य यत् कर्म तदित्थं ते प्रचक्षते॥
अण्डलालविशेषन्तु नोत्वैतदन्यरूपताम्। (पेप्टोन्)
शोणितेषु योजयित्वा पुष्टिहेतुरिदं भवेत्॥
अथ येऽन्यविधा भावा अण्डलालस्य कीर्त्तिताः।
तेषामपि बहूनेतद्भिन्नरूपं विकृत्य च॥ (इउरिया)
प्रापय्य चान्ययोगेन बहूपायैः पृथग्विधैः।
शरीरे योजयत्येतदिति चापि प्रचक्षते॥
नाड्यो याः स्नेहवाहिन्यो धमन्यो वा तदाश्रयाः।
यकृदभ्यन्तरं प्राप्ताः पाकस्थल्यादितो गताः॥
ताभिर्भक्षितपीतानां द्रव्याणां बहुसंख्यकान्।
पदार्थान् संप्रगृह्यैतदेवं कर्मणि वर्त्तते॥
अन्यानपि बहून् भावान् निर्मिमीते पृथग्विधान्।
(एल्वुमिन्) (क्रियेटिन्) (लिउसिन्) (टाइरोसिन्)
आवश्यकाञ्छरीरस्य रक्षार्थे कर्मणे तथा॥
कौषिकाभिस्ततस्तेषां प्रत्यर्पयति कांश्चन।
देहस्य सर्वशाखासु कांश्चिच्चैवान्यवर्त्मभिः॥
एवं यकृः क्रिया तात! द्वितीया तैर्निगद्यते।
तृतीया भ्रूणदेहे या समुद्दिष्टास्य तु क्रिया॥
तस्या विवरणं नास्मिन् प्रसङ्ग उपयुज्यते।
एतत् तत्रावगन्तव्यं यच्छ्वेतकणनिर्मितिः॥
अन्या अपि च याः प्रोक्ता भ्रूणेष्वेव न ता अलम्।

वालादीनाञ्च देहेषु पश्यन्ति सकलाश्च ताः ॥
आधिक्यात्तु भ्रूणदेहे तथात्वेन प्रकीर्त्तिताः ।
चतुर्थी पित्तनिःसारस्तद्दया रूपाण्यनेकधा ॥
परिणामो न चैवैकरूपः कश्चन दृश्यते ।
पित्तनाम्ना यकृद्यन्त्रे बहूनेव तु लक्षयं ॥
अम्लरूपांस्तथा तिक्तालुँवणाञ्छर्करादिकान् ।
समवायस्तु सर्वेषां तेषां पित्तमिहोच्यते ॥
यकृदङ्गाद्बहुविधा जायमानाः पृथक् पृथक् ।
भुक्तवस्तु गृहीतेभ्यः पदार्थेभ्यो यथायथम् ॥
पित्तस्थल्यां विनिष्क्रान्ता यकृदङ्गात् पृथक् पृथक् ।
वर्त्मभिः समवेत्याथ तद्रसैश्च पृथग्विधैः ॥
श्लेष्मादिबहुधाकारै रन्यरूपेण वर्त्तते ।
तत्र स्वादा अनेके स्यु र्गन्धरूपाणि चैत्र हि ॥
तदेव पित्तमाख्यातं कर्माणि च बहून्यपि ।
तेषां पित्ताभिधेयानां पदार्थानां पृथक् पृथक् ॥
कर्माणि चोपलभ्यन्ते बहूनि बहुवर्त्मसु ।
तत्र केचन पित्तांशाः सुसंसृष्टेन वर्त्मना ॥
रक्तेनैव गृहीताः स्युस्तथा नलिकयापरे ।
त्रिस्रोतसि विनिःसृत्य याति चामाशये पुनः ॥
ततस्तद्गतभावानां परिपाकाय वर्त्तते ।
एवमादीनि कर्माणि दृश्यन्ते पित्तवस्तुनः ॥
एतत् पित्तमहोरात्रे क्षरत् सततमेव च ।

चत्वारिंशत्तोलकेभ्यः पञ्चाशत्तोलकावधि ॥
मानमृच्छति किन्त्वेतदाहारे समुपस्थिते ।
स्यन्दतेऽधिकमन्यत्र पित्तस्थलयाञ्च चीयते ॥
क्षरत्यपि कियन्मात्रमिति तत्त्वविदां मतम् ।
अत्रास्मदीयदोषज्ञाः सुश्रुताद्या वदन्ति यत् ॥
तदपि श्रूयतां तात ! संक्षेपात् किञ्चिदुच्यते ।
पित्तं ते पञ्चधा प्राहुः कर्म चैषां पृथक् पृथक् ॥
रागः पाकस्तथा मेधाकरणं तेजसस्तथा ।
ओजोनाम्नस्तथा चोष्णकरणं रुधिरादिषु ॥
पञ्चतय्यः क्रिया एताः पित्तस्य प्रब्रुवन्ति ते ।
तत्र रागं न लौहित्यमत्र मन्येऽत्र संगतम् ॥
किन्तु पीतादिवर्णं च करोतीदं तथेक्षणात् ।
सोमरूपं भवत्योजस्तद्बलञ्चापि कथ्यते ॥
अत्यल्पमपि तद्देहे सर्वत्रैव च विस्तृतम् ।
अष्टबिन्दुमितं तावत् प्राणस्यैति सहायताम् ॥
लावण्यरूपं तेजश्च स्वरूपमस्य कीर्तितम् ।
एवं क्रियाणां पञ्चत्वात् पित्तानामपि पञ्चता ॥
विज्ञापिता विपश्चिद्भिराचार्य्यैः प्राक्तनैरिह ।
न चैकेनैव रूपेण क्रिया पञ्चविधा क्वचित् ॥
इत्थम्भूता भवेच्छक्या पित्तस्येत्यनुमीयते ।
तस्मादेवमभ्युपेयं ते सर्वे पित्तसंज्ञिताः ॥
यकृतो ये समुद्भूता भावा वै भिन्नजातयः ।

तत्र ये रसरूपेण निःसरन्ति पृथग्विधाः॥
स्थल्याञ्च सञ्चिता ये स्युर्नल्या चैवाप्यधोगताः।
पित्तनामार्थमात्रेण ते पित्तत्वेन कीर्त्तिताः॥
इदानीं चिन्त्यतां तात! यथा पाश्चात्यकोविदैः।
अस्माकं बन्धुनाबन्धो यकृत्कर्मनिरूपणे॥
यत्रान्तर्भवतोऽस्माकं द्वितीयं प्रथमं तथा।
नल्या निस्यन्दिता भावा रागकर्मणि संस्थिताः॥
ये चोर्ध्वनलिकाक्रान्ता हृत्पिण्डाभिमुखं सदा।
तेषाञ्च रागकर्तृत्वमवश्यमिह बुध्यताम्॥
अधोगतरसानान्तु पाककर्मापरं पुनः।
यद्द्वितीयमिह प्रोक्तमेवं कर्म्मास्य पञ्चता॥
तत्र यच्छर्करापायं वस्तु तैः परिदर्शितम्।
तदौष्ण्यजनकं पित्तं सुश्रुताद्यैः परीक्षितम्॥
अण्डलालमयं यत्तु द्वितीयं परिकीर्त्तितम्।
रूपभेदात्तु तस्यैव मेधाया ओजसस्तथा॥
कर्त्तृत्वमिति विज्ञेयं तृतीयं तत्र हीयताम्।
बालेष्वेव निबद्धत्वाच्चतुर्थन्तु विभाव्यताम्॥
इत्थमत्रास्मदीयानां पाश्चात्यानाञ्च मिश्रता।
रक्तसंस्कारकर्मादौ विशेषेणैव यद्यपि॥
अभ्यर्हितत्वमस्यास्ति तत्कर्मपरतापि च।
दृश्यतेऽभ्यधिकत्वेन प्रसङ्गादिव पक्तृता॥
भ्रूणयकृतो न पक्तृत्वमस्त्येवेति हि निश्चयः।

असम्भवात् तदा रक्तं प्रत्येवास्य क्रियेत्यतः ॥
असृक्संस्कारकेष्वेतदन्तर्भवितुमर्हति ।
परिपाकक्रियायास्तु दर्शनायात्र संग्रहात् ॥
अंशतश्चापि पक्त्वं पाकयन्त्रेषु लक्षितम् ।
एवं यकृद्विवरणं संक्षेपात् समुदीरितम् ॥
क्लोमतत्त्वमतस्तात ! किञ्चिदेव निगद्यते ।
पाकस्थलीनिम्नभागे क्लोमयन्त्रन्तु वर्त्तते ॥
त्रिस्रोतसाभिसंसृष्टं दक्षे प्लीहा तु वामतः ।
सम्बन्धोऽत्र योगमात्रं नल्या त्रिस्रोतसा पुनः ॥
कर्म दृष्ट्वा त्विदं कश्चिद्वदत्याग्नेयसंज्ञया ।
कुत्रचिद् वैद्यके दृष्टं क्लोमनामन्यत्र कीर्त्तनम् ॥
विभक्त्या चैकवाचिन्या निर्द्देशस्तत्र दृश्यते ।
वयन्तु श्रुतिनिर्द्देशात् तथा शांकरभाष्यतः ।
विभक्त्या बहुवाचिन्या निर्दिशाम इदं पुनः ॥
"यकृच्च क्लोमानश्च पर्वताः" । ( बृहदारण्यकम् )
यकृच्च क्लोमानश्च हृदयस्याधस्ताद्दक्षिणोत्तरौ मांसखण्डौ
क्लोमान इति नित्यं बहुवचनमेकस्मिन्नेव । (शाङ्करभाष्यम्)
इदं कुक्कुरजिह्वावद् वर्णतोऽपि तथैव तु ।
प्लीहत्रिस्रोतसोर्मध्ये नल्या चाङ्गुलमानया ॥
तयोर्निबद्धवद्भाति षट्सप्ताङ्गुलमानकम् ।
क्वचिदष्टाङ्गुलमिदं दीर्घतायां समीक्ष्यते ॥
प्राशस्त्ये द्व्यङ्गुलीमानं क्वचित् सार्द्धाङ्गुलीमितम् ।

अन्तरञ्चास्य खण्डैस्तु बहुभिर्निर्मितं पुनः ॥
बाह्ये त्वग्रूपभावेन संवृतं परिदृश्यते ।
एवमेकमनेकञ्च बाह्याभ्यन्तरभेदतः ॥
क्लोमयन्त्रं प्रपश्यामो नानागुणरसाकरम् ।
अहोरात्रे रसः सोऽयमर्द्धसेरप्रमाणतः ॥
प्रायेण क्षरति क्लोमयन्त्रात् तत्र विशेषतः ।
यामार्द्धमात्रमाहाराद्राधिक्येनेति निश्चयः ॥
याममात्रं ततः किञ्चित् ततश्चाधिकमात्रया ।
एवं सर्वसमाहारादर्द्धसेरमिति भवेत् ॥
बहुभ्योऽस्य ततो मानं रसेभ्यो न्यूनमेव हि ।
आवश्यकत्वदृष्ट्या तु न तेभ्योऽस्य कनिष्ठता ॥
परिपाके रसः क्लोम्नां गरिष्ठश्चैव दृश्यते ।
स चातुर्विध्यमापन्नः क्रियागुणविभेदतः ॥
भुक्तपीतानि वस्तूनि नानाभावान्वितानि च ।
पाकस्थल्यादियन्त्रैश्च कृतपाकानि सर्वथा ॥
सर्वाणि तानि संश्लिष्य पाककर्मणि वर्त्तते ।
एकैकेन च रूपेण तेषामेकैकशः क्रमात् ॥
संयुज्य विपचत्यन्यरूपेण विकरोति च ।
प्रागुक्तया तु नल्यायं रसः क्लोम्नां चतुर्विधः ॥
त्रिस्रोतोनामिकां गत्वा तत्र पिण्डरसैरपि ।
मिलित्वाधःप्रसृत्या च तया त्रिस्रोतसा पुनः ॥
आमाशये समागम्य यथावोचाम तत्र च ।

तथा तद्रससंयुक्तः पाककर्मणि वर्त्तते ॥
एवं तात ! क्लोमकर्म संक्षेपाद् विनिवेदितम् ।
इदं यन्त्रं कचिद्देन खचिद्देनास्य नालिकाम् ॥
पश्य त्रिस्रोतसा युक्तां तृतीयचित्रपृष्ठतः ।
अथ पाकसहायत्वात् प्लीहानञ्च प्रवेदये ॥
असृक्संस्कारकार्य्यादावयञ्चापि नियुज्यते ।
प्रायेण यकृतः साम्यं क्रिययास्य च कर्मणः ॥
गित्तनिःसारणं तत्र नास्ति पित्तस्थली नली ।
न चास्यान्यनली वापि तथापि पाककर्मणः ॥
क्लोम्नां सहायतामेति नाडीयोगेन तत्र च ।
परिपाचकयन्त्रेषु तत एष प्रदश्यते ॥
इदं यन्त्रन्तु पाश्चात्त्यैः प्रायेणानुपयोगि च ।
कथ्यते पण्डितैस्तात ! तथाप्यस्य क्रियापि तैः ।
रक्तनिर्माणसंस्कारप्रयोगादिषु कीर्त्यते ।
क्लोम्नाञ्च रसनिर्य्यासे हेतुतास्य निगद्यते ॥
अत्यन्तावश्यकत्वञ्च भ्रूणदेहेऽस्य कथ्यते ।
तथाप्येतन्महायन्त्रमन्यथासिद्धवत् कथम् ॥
दृश्यते तैर्विपश्चिद्भि स्तत्र तानेव पृच्छथ ।
वृक्णेऽप्यस्मिन् प्लीहयन्त्रे न मृत्युर्दृश्यते क्वचित् ॥
तस्मादेतदकर्म्मण्यं प्रवदन्ति परे बुधाः ।
यद्येवं स्यात् तदैकस्मिन् वाहौ छिन्नेऽपि जीवनात् ॥
तथा परेण तत्कार्य्यसाधनात् किमसौ वृथा ।

भवतीत्येव वक्तव्यं न तु तत् कैश्चिदिष्यते ॥
तथा क्वचिदभावेऽस्य जीवनाश्च वृथात्मता ।
आस्तामेतदथेदानीं तत्त्वमन्यन्निगद्यते ॥
यन्त्राणां निर्नलीनान्तु प्लीहयन्त्रं बृहत्तमम् ।
पाकस्थलीवामपार्श्वे पर्शुकास्थि समावृतम् ॥
क्लोमाग्रस्य च वामांशे संश्लिष्टप्रायमीक्ष्यते ।
त्रिकोणाभासनिर्म्माणं प्लीहपिण्डं व्यवस्थितम् ।
अत्रान्तर्धमनीसङ्घः शिरासङ्घश्च विस्तृतः ॥
तथा रसवहाश्चापि बहुशो नाड्योऽत्र संश्रिताः ।
सुकोमलमिदं यन्त्रं स्थितिस्थापकधर्म च ॥
गर्भतो रुधिरैः पूर्णं वर्णेन कृष्णलोहितम् ।
ऊर्ध्वतोऽस्यैककोणञ्च पार्श्वगन्तु द्वितीयकम् ॥
अधस्तृतीयमीक्ष्येथा त्रिकोणमेवमीक्ष्यते ।
तत्र पाकस्थलीश्लिष्टो भागः कुब्जोऽस्य दृश्यते ॥
न्युब्जः पार्श्वसमाश्लिष्ट एवमस्याकृतिर्मता ।
सूत्रैः श्वेतैस्तथा पीतैः पेशीसूत्रैश्च कैश्चन ॥
परस्परव्यवच्छिन्ननिर्माणा गर्भतोऽस्य च ।
बहवोंऽशाः समीक्ष्यन्ते नानाभावप्रपूरिताः ।
एवमंशसहस्रैस्तु प्लीहगर्भः प्रपूर्य्यते ॥
यच्चापि तच्छिराजालं प्रविष्टं प्लीहगर्भतः ।
तच्चाप्यपरिसंख्येयशाखाभिर्विस्तृतं पुनः ॥
वर्णितांस्तानसंख्यातान् क्षुद्रानंशानशेषतः ।

पृथक् पृथक् समाश्लिष्य जालवत् परिदृश्यते ॥
तेष्वेषु जालसूत्रेषु योगतन्तुकनीनिकाः।
दृश्यन्ते तत्र चैत्रापि सूक्ष्मात् सूक्ष्मतराः पुनः ॥
डिम्बरूपा बीजकोषाः पीताभाश्चापि केचन।
अतिसूक्ष्माः प्रदृश्यन्ते बन्धुरावयवाश्च ते ॥
अन्तराले पुनश्चैषां सर्वेषामेव दृश्यते।
स्वाभाविकश्वेतरक्तकणाजातिरसृक्श्रिता ॥
अथान्येऽपि श्वेतवर्णा बहवो बिन्दुवत् स्थिताः।
प्लीहगर्भे प्रदृश्यन्ते कीटानुकारिणश्च ते ॥
एषां पिण्डारम्भकेषु रसायनशिराश्रयाः।
तन्तुबीजानि दृश्यन्ते तेषु श्वेतकणापि च ॥
प्रत्येकस्मिन्नमीषाञ्च बिन्दूनां गर्भतः पुनः।
संप्रविष्टा शिराशाखा तेन जालवदीक्ष्यते ॥
एवं विचित्रनिर्म्माणं प्लीहस्तात ! प्रदर्शितम्।
चतुर्थचित्रं दृष्ट्वास्य किञ्चिन्मनसि धारय ॥
यक्रा सहास्य सम्बन्धो विशेषेण च दृश्यते।
धमनीवर्त्मना ह्येदं यक्रे रक्तं ददाति च ॥
अथास्य कर्म वक्ष्यामि यथामति समासतः।
यथैव यकृतः कर्म प्रायेणास्य तथैव च ॥
सामान्यतस्तु तत् कार्य्यमेवं निर्द्दिश्यते बुधैः।
यदुपादानसंस्कारो बीजानाञ्चैव निर्मितिः ॥
रुधिरस्थमुपादानं यद्वा रासायनीस्थितम्।

स्वकर्मस्वसमर्थं स्यात् पोषणादिष्वनेकधा ॥
तद्रासायननाडीभिः शिराभिश्च समर्पितम् ।
प्लीहा संस्कृत्य कार्य्येषु तेषूपयोजयेत् पुनः ॥
निर्म्मिमीते च बीजानि रासायन्यर्पितै रसैः ।
असृजः कणिकाश्चापि श्वेताश्च लोहितास्तथा ॥
निर्मिमीत इदं यन्त्रं स्वगतैरेव तै रसैः ।
शिष्टं यकृति यच्छ्लेष्म धमन्या तद्रसं पुनः ॥
तच्च तत् संस्करोत्येवं नियमः सम्प्रवर्त्तते ।
न पाकाभिधया चैतत् कर्म संगृह्यते यदि ॥
रसाद् बीजादिनिर्म्माणं तथापि पाक एव च ।
गुणान्तराधीनरूपस्तापात् पाको हि कथ्यते ॥
यद्यपीदं कदाचिन्न यकृद्वत् स्रावयेद्रसम् ।
पाकस्थल्यादिवद् वापि स्वगर्भे पाककारिणम् ॥
तथापीदं स्वगर्भस्थतापेनैव यथोदितम् ।
निवर्त्तयति तत्कर्म रीत्या च वक्ष्यमाणया ॥
रसस्यन्दनकार्य्ये च न चैकान्तिकयोगिता ।
वक्तुं शक्यास्य यन्त्रस्य कारणत्वं हि दृश्यते ॥
रक्तानां रक्षकत्वाच्च सामञ्जस्येन चार्पणात् ।
संस्कारकरणाच्चापि साहाय्यमवलम्बते ॥
पाकस्थल्यास्तथा क्लोम्नां रसनिर्म्माणकर्मणि ।
रक्ताद्धि पाचकाः सर्वे सम्भवन्ति रसाः सदा ॥
अतः प्लीहविकारे च क्लोमादीनां यथायथम् ।

न रसो जायते नापि स्यन्दते स्वस्ववर्त्मना ॥
ईदृग्हेतुतया वास्य पाकयन्त्रेषु संग्रहः।
एवं पाकक्रिया तात ! देहेऽस्मिन् सम्प्रवर्त्तते ॥
रसनिर्म्माणमेनाञ्च पण्डिताः परिचक्षते।
एवं बहुविधाकारैः संवृत्तास्ते रसाः पुनः ॥
नाडीभेदेषु संसृप्य बीजानि जनयन्ति ते।
परिणम्य पुनस्तानि लब्ध्वा च रुधिराकृतिम् ॥
ततो नानाविधान् भावान् जनयन्ति यथाविधि।
एवंविधा रसा याभिर्गृह्यन्ते रुधिराणि च ॥
तासां रूपाणि नामानि कर्माणि च निशामय।
पाचकानां रसानान्तु समुत्पत्तिमनन्तरम् ॥
प्रवक्ष्यामि प्रसङ्गोऽयं तदा परिसमाप्स्यते।
नलिकान्नवहा नाम या प्रोक्ता गलदेशतः ॥
तस्याः सम्मुखतस्तात ! वर्त्ततेऽन्या नली पृथक्।
श्वासनालीति सा ख्याता कण्ठनाली च कथ्यते ॥
जिह्वामूलाद्भवत्यस्या आरम्भः कण्ठदेशतः।
समाप्तिर्दृश्यते चास्या अधस्तात् किञ्चिदेव हि ॥
स्वरयन्त्रमिदं तात ! वाग्यन्त्रञ्च निगद्यते।
पञ्चमं चित्रमालोक्य कथञ्चिदवगम्यताम् ॥
स्वरोत्पत्तिप्रसङ्गे तद् यथावदभिधास्यते।
श्वासनाल्यास्य निम्नांशः श्वासनिःसारणात् सदा ॥

इयं समाश्वाहिन्या व्यासेन निर्म्मितौ न तु।
अङ्गुरीयाण्यनेकानि सज्जितान्यध ऊर्ध्वतः॥
संदृश्यन्ते यथा तात! तथेयमपि दृश्यते।
द्वितृतीयांशयोस्त्वेवं शिष्टः पश्चात् स्थितः समः॥
निर्म्मितः श्लेष्मझिल्लीभिः श्लेष्माणञ्च स्रवत्यसौ।
तथान्यावपि वर्णेन श्वेतेयं नलिका मता॥
उपास्थिनिर्म्मितौ तौ च तथा संयोगतन्तुभिः।
ग्रन्थिभिः श्लैष्मिकैश्चापि शिराधमनिभिस्तथा।
मेदोजातितन्तुभिश्च निर्म्मिता सा च सन्तता।
सर्वेषामङ्गुरीयाणां योगं रक्षति सर्वदा॥
ततो वास्थीनि झिल्ल्याञ्च संयुनक्ति निरन्तरम्।
या चात्र श्लैष्मिकी झिल्ली दृश्यते सा चतुर्विधा॥
स्तम्भाकारैस्तन्तुभिश्च तथा लोमानुकारिभिः।
निर्म्मितैका द्वितीया तु श्लेष्ममात्रेण निर्म्मिता॥
अपरा कैशिकासङ्घै रसतन्तुसमन्वितैः।
स्थितिस्थापकसूत्रैस्तु चतुर्थी कथिता पुनः॥
एवं श्वासनली तात! नानाभावविनिर्म्मिता।
अस्याः प्रथमखण्डे च द्वादशेभ्यश्च षोड़श॥
संख्यास्तथाङ्गुरीयाणां दृश्यन्ते तद् दिदृक्षुभिः।
इह षष्ठेन चित्रेण तदाकारोऽवधार्य्यताम्॥
अस्याः शाखाद्वयं तात! प्रसृतं सव्यदक्षयोः।
एवं रीत्यैव निर्म्माणं तयोरपि च दृश्यते।

अत्राङ्गुरीयसंख्यानं नवतो द्वादशावधि ॥
वामभागस्य दक्षे तु षट्तोऽष्टावधि दृश्यते।
क्षुद्रत्वञ्च द्वयोर्व्यासे पूर्वखण्डात् समीक्ष्यते ॥
ताभ्यामधोऽप्यनेकानि मूलानि सन्ततानि च।

(ब्रण्काइ)

द्वित्रिचत्वारि षट् सप्त ततोऽनन्तानि तेनिरे।

(ब्रङ्कियोल्)

विवराण्यासु सर्वासु दृश्यन्ते च यथाकृति ॥
अत्रैव श्लेष्मनिर्वृत्तिं प्रवदन्ति विपश्चितः।
श्वासप्रवाहश्च सदा भवत्यासु शनैः शनैः ॥
एतान्येव च वृन्तानि द्वयोः फुप्फुसयोरपि।
प्रवदन्ति विशेषेण शारीरतत्त्वकोविदाः ॥
सप्तमं चित्रमालक्ष्य तत्र कं खञ्च लक्षय।
सूक्ष्मावस्थासु चैतेषां नैवं निर्म्माणमीक्ष्यते ॥
नास्त्युपास्थ्यङ्गुरीयं वा तत्र झिल्ली च केवला।
पेशीसूत्रशिराद्यैश्च जडिता दृश्यतेऽन्वहम् ॥
तैरेवापरिसंख्येयैरनुविद्धे पृथक् पृथक्।
फुप्फुसाख्ये तु यन्त्रे द्वे राजेते वामदक्षयोः ॥
यद्वत् पुष्पकफिस्तात! मुकुलैः पूर्णतां गतः।
अनयोस्तद्वदाकारो दृश्यतेऽन्तः प्रदेशतः ॥
तद्वत् कोष्ठसहस्राणि बहूनि चोभयोरपि।
वृन्तनालेन विद्धानि सर्वाण्येव पृथक् पृथक् ॥

बाह्यतस्त्वनयो स्तात ! श्लेष्मप्रायत्वगावृता।
द्वे वर्त्तेते तयोरन्तस्तैलवद् द्रव्यसंस्थितिः॥
व्यथा स्याद् यस्य शुष्कत्वे दारुणा मृत्युरेव वा।
श्वासप्रश्वासयोः कष्टं वलवच्चापि दृश्यते॥
झिल्लीद्वयेन चानेन यदस्यावरणं कृतम्।
न तत् सर्वाङ्गतो व्याप्तमूर्ध्वतस्तु कियन्मितम्॥
तस्मान्न घर्षणं दृष्टं सन्निकर्षेऽपि च द्वयोः।
अस्य युग्मस्य वामात्तु दक्षिणः स्याद् बृहत्तरः॥
हृदावरणपर्य्यन्तन्तूभयोरेव विस्तृतिः।
स्फीतं स्याद् द्वयमेवैतत् प्रश्वासे समुपस्थिते॥
पुनः सङ्कोचमाप्नोति निःश्वाससमये सदा।
निःसारात् पूरणाच्चापि वायोरेतत् प्रजायते॥
गलनल्या अधस्तात्तु युग्ममेतत् व्यवस्थितम्।
औरस्याः सम्मुखे चैव बहुभिर्बन्धनैः पुनः॥
बह्वाकारैः समासक्तं तयैतत् परिदृश्यते।
वर्णतश्च पाटलाभं वक्षोगह्वरपूरकम्॥
हृत्पिण्डेन सहायेन समं क्रोड़ीकृतेन च।
अष्टमं चित्रमालक्ष्य ज्ञायतां रूपमेतयोः॥
अनयोर्निर्म्मितिस्तात ! जटिलातीव दृश्यते।
तस्माद् विशेषतो नात्र व्याख्येयानुपयोगतः॥
सामान्यतस्त्विदं विद्धि या प्रोक्ता श्वासनालिका।
तस्या एव च सूक्ष्मातिसूक्ष्माः शाखाः सहस्रशः॥

अङ्गुल्याख्यस्य मानस्य चत्वारिंशांशमानतः ।
वर्त्तमानाः सूक्ष्मसूक्ष्मडिम्बाकारमुखा यदा ॥
तेषामेव च संहत्या निर्म्माणमनयो र्द्वयोः ।
श्वासनाली यथा तात ! स्थितिस्थापकधर्म्मिका ॥
स्थितिस्थापकधर्म्माभ्यां तथेमावपि सर्वदा ।
तस्या एवाग्रभागेषु वायुकोशाः सहस्रशः ॥
सहस्रशश्च सम्भूय ये प्रोक्ता डिम्बसन्निभाः ।
सच्छिद्रास्ते बहून्यत्र खण्डानि रचयन्ति हि ॥
ग्रहणाद्बाह्यवायूनां तथैव च विरेचनात् ।
वायुकोषाः समाख्याता झिल्लीगात्रेषु संस्थिताः ॥
तैः खण्डैर्निर्म्मितावेतौ बहुकोष्ठविभागतः ।
सर्वेषु वायुकोषेषु तथा श्वासनलीषु च ॥
एवं भावविशेषोऽस्ति सञ्चलन् परमाद्भुतः । (छिलिया)
यः श्वासेन प्रविष्टानि रजांसि विषवन्ति च ॥
प्रविशन्ति च सर्वाणि तान्येभ्योऽपाकरोत्यसौ ।
वायुप्रवेशनिर्य्याणन्त्वेभ्य एव प्रजायते ॥
पेशीसूत्रसमूहैश्च निजस्यान्तर्गतैः सदा ।
पिष्टत्वादुदरेणाधो वक्षसाप्यनुकूलितैः ॥
वायवोऽतो विनिर्यान्ति विकाशे प्रविशन्ति च ।
एवं वायुप्रचारात्तु रुधिराणां परिष्क्रिया ॥
भवत्यस्मिन् महायन्त्रे तत् प्रकारं निबोध मे ।
अनयोर्गर्भतस्तात ! ये वायुकोषनामकाः ॥

कैशिकास्तत्र संज्ञाप्ता बह्वंशान् केशमानतः ।
याः सुरक्तवहा नाड्यो वक्ष्यन्तेऽतः परं क्रमात् ॥
सर्वदेहेषु संज्ञाप्ता हृत्पिण्डयोनयः सदा ।
तासां सूक्ष्मातिसूक्ष्मा याः शाखास्तन्तूनुपाश्रिताः ॥
कैशिकानामिकास्ताः स्युस्ताश्च तन्तुरसाप्लुताः ।
तेभ्य आङ्गारिकाम्लेन संसृष्टाः स्युर्यदा तदा ॥
सुसूक्ष्मधमनीनाम्ना कथ्यन्ते ताश्च कैशिकाः ।
गृहीत्वा दूषितं रक्तं फुप्फुसाभिमुखं गताः ॥
रक्तसंस्कारकार्य्यार्थं मिलित्वा बहुशः क्रमात् ।
स्थूलीभूय फुप्फुसान्तः प्रविष्टाः पुनरेव च ॥
बहुशाखाप्रशाखाभिः पूर्ववत् सूक्ष्मतां गताः ।
ताश्चात्र कैशिका ज्ञेया विषाक्तरुधिराश्रयाः ॥
झिल्लयन्तरालसंस्थाश्च तस्य निर्म्माणकौशलात् ।
सङ्कोचेनैनयो स्तात ! मुञ्चन्ति तद्विषं तनोः ॥
स समाश्रितपेशीनां बलान्निर्वर्त्तते तथा ।
उदरस्योरसश्चापि पेशीनां शक्तिचालनात् ॥
सङ्कोचः फुप्फुसस्य स्याद् विकाशोऽपि तथैव च ।
स सङ्कोचः पुनर्हेतुः कैशिकाविषमोक्षणे ॥
तदानीमेव निःश्वासवायुना सह तद्विषम् ।
आङ्गारिकाम्लनामाढ्यं नासिकाभ्यां विसर्पति ॥
पुनर्विकाशकाले च शून्यगर्भत्वकारणात् ।
बहिःस्थप्राणवायुश्च सहान्यैरपि मिश्रितः ॥

एतद्गर्भे प्रविश्याथ प्रविशेत् कैशिकास्वपि ।
प्राणस्तत्राग्रगो वाव ! किन्तु जीवोऽत्र कारणम् ॥
तेन संस्क्रियते रक्तं कैशिकास्थं मुहुर्मुहुः ।
धरागतं विषञ्चापि पुनर्मुञ्चन्ति कैशिकाः ॥
प्राणं पुनश्च गृह्णन्ति धारावाहिक्रमेण च ।
श्वासनिःश्वासकर्मेत्थं सततं सम्प्रवर्त्तते ॥
एवं फुप्फुसयोः कर्म निर्माणाकृतिभिः सह ।
उद्दिष्टमिह संक्षेपादथातः श्रूयतां परम् ॥
अनयोस्तु द्वयोर्मध्ये देहस्य स्वामिवत् स्थितम् ।
हृत्पिण्डनामकं यन्त्रं प्रधानं प्राणकर्मणि ॥
चतुःकोष्ठमधोवक्त्रं पद्मकुट्मलसन्निभम् ।
नवमेन तु चित्रेण तस्याकारो निबुध्यताम् ॥
प्राधान्येन तु पेशीभि र्यन्त्रमेतद् विनिर्म्मितम् ।
भावैरन्यैश्च बहुभिरग्रे तदभिधास्यते ॥
तस्मादेतत् सर्वदैव सङ्कोचशीलमीक्ष्यते ।
तस्यावरणयोर्मध्ये समन्तात् सम्प्रतिष्ठितम् ॥
सूत्रझिल्लीमयं तत्र बहिस्तः सम्प्रदृश्यते ।
अन्तरावरणं दृष्टमसृग्रसमयं पुनः ॥
प्रथमं तत्र दुश्छेद्यं सुदृढ़ञ्चापि दृश्यते ।
उरःकवाटसंसृष्टो निम्नांशश्चास्य सर्वदा ॥
प्रधानशिरया (डायाफ्राम्) त्वस्य श्लिष्टोर्ध्वदेश एव च ।
असृग्रसमयं यत्तु द्वितीयं समुदाहृतम् ॥

तस्याप्यंशद्वयं तात ! समन्तात् परिदृश्यते ।
प्रथमांशस्तु यस्तस्य सा झिल्ली प्रथमाश्रिता ॥
द्वितीयपिण्डसंश्लिष्टा झिल्ली तात ! समीक्ष्यते ।
साक्षात् तत्रैव हृत्पिण्डमाधेयत्वेन दृश्यते ॥
बाह्याभ्यन्तरभेदेन चैतदावरणत्रयम् ।
बृहदारण्यकश्रुत्या पुरीतदभिधीयते ॥
ऊर्ध्वदेशोऽस्य सततं पिण्डस्य दक्षिणानुगः ।
किञ्चित् पृष्ठानुगश्चापि विपरीतस्त्वधोगतः ॥
अयं वामानुगश्चापि सम्मुखञ्चानुवर्त्तते ।
या नाड्योऽस्मात् प्रसृतास्तु मेरुदण्डमुपाश्रिताः ॥
ताभिरेवोर्ध्वभागेऽस्य पश्चादभिनिबध्यते ।
अधोभागः समुन्मुक्तः सदैव त्वस्य दृश्यते ॥
पश्चाद्भागश्चिपिटोऽस्य सम्मुखं न्युब्जमेव च ।
दक्षो दीर्घतरो भागः क्षुद्रः प्राशस्त्यदूषितः ॥
तथाप्यल्पदृढत्वाच्च किञ्चिद्वामोपरिस्थितः ।
फुप्फुसस्याभिसंश्लेष स्तस्यैकं कारणं मतम् ॥
निर्माणतोऽपि भागौ न समाविति च दृश्यते ।
तत्र सव्यस्य पेशीनां निर्मात्रीणाञ्च संहतिः ॥
आधिक्येनैव दक्षांशात् स्वभावाद् दृश्यते सदा ।
अधोऽशस्य च तत्रापि वामस्य संहतिर्दृढा ॥
मध्यभागेऽधिकाश्चापि तस्माद्दृढतरोऽप्यसौ ।
पेशीभिर्याभिरेतत्तु महायन्त्रं विनिर्म्मितम् ॥

ताश्चापि मांसपेशीभ्यः सुदृढा घनसंस्थिताः।
तत एव च दुश्छेद्या दृश्यन्ते ताः सुसंहताः॥
सूत्रगुच्छानि चैवासां घनानि तन्तवोऽपि हि।
आसां सूत्रेषु संयोगतन्तवोऽपि व्यवस्थिताः॥
तैरेव तानि गुच्छानि संयुज्यन्ते परस्परम्।
प्रत्येकं सूत्रतन्तूनां समाश्लिष्य प्रवर्त्तते॥
स्नायुः शिरा च नाड़ी च धमन्याख्या यथायथम्।
रासायन्यश्च संविष्टा रसदानाय सर्वदा॥
मंदसां तन्तवस्तात ! द्वयोरेव प्रकोष्ठयोः।
नीचस्थयोर्मूलदेशे तथैव विवरान्तिके॥
संयुज्यन्ते तथान्यासां नाडीनां सर्वसन्धिषु।
द्वयोश्च कोष्ठयोः सन्धौ योजकास्तन्तवोऽपि च॥
मांससूत्राणि चेक्ष्यन्ते तैश्च सर्वैर्यथायथम्।
द्वयोः प्रकोष्ठयोः सन्धिरन्ध्रे श्रेष्ठशिरोद्भवे॥
स्थाने चोपास्थिजनका दृश्यन्ते तन्तवः सदा।
तेन स्थानानि तान्यत्र दृढान्यधिकमात्रया॥
तन्तुनिर्मापका ये च पदार्था अत्र संस्थिताः।
तेषां परीक्षया ये ये संगृह्यन्ते पृथक् पृथक्॥
न तेषां दृश्यते शक्तिरस्य मुख्यक्रियां प्रति।
असृजां संस्कृतिं तस्मात् तत्समर्थान्यवस्तुनः॥
सत्तात्र कल्प्यते तत्तु परीक्षाया अगोचरः।
अनुमेयन्तदाग्नेयं यः प्राणवायुरुच्यते॥

पाकाः सर्वविधास्तस्य कार्य्यत्वेन निरूपिताः ।
पेशीभिस्तत्र निर्म्माणे विशेषमवधारय ॥
पेशीस्तरद्वयं दृष्टमूर्ध्वयोः कोष्ठयोर्द्वयोः ।
बाह्याभ्यन्तरभेदेन प्रथमं तत्र तूभयोः ॥
एकमावरणं दृष्टं द्वितीयञ्च द्वयोः पृथक् ।
बाह्यदृष्ट्या ततश्च द्वावेक एवावभासते ॥
उन्मुक्तौ पुनराद्यस्य द्वावेव स्तः पृथक् पृथक् ।
अन्तस्तरेण विच्छिन्नावित्थं निर्म्मितिरेतयोः ॥
अधःस्थयोस्तु दृश्यन्ते पेशीनां बहवः स्तराः ।
निर्म्मातारो घनीभूताः पूर्वा दृढतरा अपि ॥
दक्षाच्च सुदृढं तत्र वामकोष्ठद्वयं मतम् ।
प्रदर्शितञ्च तत् पूर्वं तत्र कोष्ठे च दक्षिणे ॥
उभे विस्तृतगर्भे स्तो गर्भतो वामकोष्ठयोः ।
ततोऽस्त्राण्यधिकान्यत्राध्रियन्ते सव्यकोष्ठतः ॥
सर्वेषु कोष्ठगर्भेषु जालवत् सूत्रसंहतिः ।
दृश्यते परितस्तात ! पेशीनां सज्जितेव च ॥
दक्षभागोर्ध्वकोष्ठेऽस्य चत्वारि सुषिराणि च ।
स्थूलरूपाणि दृश्यन्ते सूक्ष्माणि चापराणि च ॥
कवाटद्वयमप्यत्र निर्म्माणद्वयमेव च ।
फुप्फुसीयधमन्यास्तु मुखे तत्रैकमीक्ष्यते ॥
द्वितीयं विवरं दृष्टमधःस्थाया मुखेऽपि च ।
तृतीयं पिण्डविद्धाया धमन्या मुख ईक्ष्यते ॥

ऊर्ध्वाधः कोष्ठसन्धौ च चतुर्थं सुषिरं स्थितम्।
तत्र द्वितीयरन्ध्रादौ तृतीयस्यापि सञ्जितम्॥
कवाटं दृश्यते सम्यक् कोष्ठगर्भोन्मुखं सदा।
कोष्ठासृक् क्वापि ते येन धमन्यावुपसर्पति॥
ताभ्याञ्च सततं कोष्ठे गन्तुं शक्नोत्यनर्गलम्।
अन्यासामपि सूक्ष्माणां धमनीनाञ्च सम्मुखे॥
सूक्ष्माण्येव कवाटानि सन्ति तानि न लक्षये।
निर्म्माणं गुटिकाकारं प्रथमच्छिद्रनिम्नतः॥
विज्ञेयं प्रथमं तात! द्वितीयं तदधः स्थितम्।
डिम्बाकारं तदाभाति गर्त्तोगर्भे समन्ततः॥
हृत्पिण्डे सुषयः पञ्च श्रुत्या यदिति कीर्त्यते।
प्रकोष्ठगर्भे तल्लक्ष्यमिदं स्यात्तत्र पञ्चमः॥
अनेन चैकतादृष्ट्या गर्भस्योर्ध्वस्थितस्य तु।
चत्वारः सुषयः प्रोक्ताः शारीरतत्त्वकोविदैः॥
अधः कोष्ठस्य चास्यास्ति गर्भे श्वभ्रद्वयं पुनः।
कवाटद्वयमप्यस्ति न निर्म्माणान्तरं तथा॥
तत्रोर्ध्वं ऊर्ध्वखण्डस्य निम्नच्छिद्रादधो वपाः।
प्रथमा स्याद् द्वितीया तु तदधो गर्भपार्श्वतः॥
पश्चाद्भागे शिराख्या या नाड़ी फुप्फुसगामिनी।
तदारम्भप्रदेशेऽस्ति कवाटौ तूभयोर्मुखे॥
येनासृगूर्ध्वतो गन्तुं नैव शक्नोति कर्हिचित्।
तच्छिरायाश्च हृद्गर्भे तस्मात्तु तत्र यानि च॥

एवं कवाटसंस्थानं कोविदैः परिदृश्यते ।
अथ वामोर्ध्वकोष्ठस्य छिद्रादीनि निशामय ॥
प्रायेण तत्र पञ्चैव दृश्यन्ते विवराणि च ।
क्वचिच्चत्वारि दृश्यन्ते त्रीणि चैवात्र कस्यचित् ॥
फुप्फुसाभ्यां समायाता धमन्यो याः पृथग्विधाः ।
तासां व्यतिक्रमादेव संख्याभेदोऽत्र दृश्यते ॥
तासां मुखेषु चत्वारि कोष्ठाधश्चैक मीक्ष्यते ।
अधःकोष्ठानुगं छिद्रमेवं पञ्च विलानि हि ॥
एकैकैव यदा द्वाभ्यां फुप्फुसाभ्यां समागता ।
कस्यचिद्धमनी तात ! तदा श्वभ्रत्रयं भवेत् ॥
एकस्माद् द्वे तथान्यस्माद् यदैकैव प्रसर्पति ।
तदा रन्ध्राणि चत्वारि दृश्यन्तेऽस्मिन् प्रकोष्ठके ॥
कवाटन्त्वत्र नास्त्येव तदस्त्येकं बृहत्तरे ।
अधःप्रकोष्ठके सव्ये कवाटे द्वे विले तथा ॥
ऊर्ध्वप्रकोष्ठगन्तत्र शुषिरं सकवाटकम् ।
अधः शिरामुखे तस्मादपरं विलमीक्ष्यते ॥
सुलोहितमिदं पिण्डं सर्वदा परिदृश्यते ।
उरसो मध्यरेखायाः सव्येऽस्यांशद्वयं स्थितम् ॥
दक्षे त्वेकस्तृतीयांशो यन्त्रस्यास्ये व्यवस्थितम् ।
वामपार्श्वेन शयने चानुत्तानेन वा पुनः ।
उर आवरणे लग्नं यन्त्रमेतन्निरीक्ष्यते ॥
मध्यभागोऽस्य मूलं तु द्वयोः फुस्फुसयोर्मतम् ।

उदरोरोऽवयवच्छेदत्वक्स्पर्शि चैतदग्रतः ।
फुप्फुसौ परिपूर्णौ स्तो यदैव प्राणवायुना ॥
प्रायेणाव्रियते चैतदन्यदा न च तादृशम् ।
यदैतत् स्पन्दते पिण्डं सङ्कुचद्विकसत् पुनः ॥
तदा तत् स्पन्दनं सम्यग् बहिस्तस्याधिगम्यते ।
षष्ठपञ्चमयोर्मध्ये पञ्जरास्थ्नोः परिस्फुटम् ॥
स्पन्दनाघातशब्दश्च कर्णाभ्यामपि गृह्यते ।
सव्यस्तनादधोभागे संलग्नाभ्यां समाधिना ॥
द्वौ भागावस्य दृश्येते प्रायेण सव्यदक्षयोः ।
समानौ तत्र च द्वौ द्वौ प्रत्येकं संव्यवस्थितौ ॥
द्वयोरेवानयोर्भागौ बृहत्क्षुद्रत्वभेदतः ।
द्वौ द्वौ सम्प्रतिपत्तौ स्तः पृथग्भूतौ च सर्वदा ॥
ऊर्ध्वभागौ द्वयोरेव क्षुद्राविति विनिश्चयः ।
बृहत्तरौ च निम्नांशौ सर्वे च सुषिगर्भकाः ॥
चतुःप्रकोष्ठं तेनेदं हृत्पिण्डं परिकीर्त्त्यते ।
पाश्चात्त्यैः कोविदैः किन्तु वेदैस्तत् पञ्चकोटरम् ॥
कोष्ठपञ्चकमेवं नो हृत्पिण्डं यैर्विनिर्म्मितम् ।
पदार्थैश्चैव भावेन तद्व्याख्यानं विशेषतः ॥
नात्रोपयुज्यते तस्माद् दिङ्मात्रं तत् प्रदर्शितम् ।
अत्र चैकद्विचिह्नाभ्यां द्वौ भागावस्य लक्षय ॥
दक्षवामौ तत्र चापि कादिघान्तै र्यथाक्रमम् ।
ऊर्ध्वकोष्ठमधः कोष्ठं द्वयोरेवाधिगम्यताम् ॥

प्रत्येकमस्य कोष्ठानां पृथग्भावैर्विनिर्मितम्।
रक्तसंस्कारकै स्तात ! तदेतदनुमीयते ॥
एतस्मिन् नीरवाः सर्वे पाश्चात्त्या देहदर्शिनः।
ते कर्मणी वदन्त्यस्य रक्तग्रहणमोचने ॥
एतावदेव चेत् कर्म हृत्पिण्डस्येति निश्चयः।
पिण्डस्रष्ट्या कृतं तर्हि नास्य किञ्चित् प्रयोजनम् ॥
धमन्यश्च शिराश्चापि या याः पिण्डसमाश्रयाः।
फुप्फुसावेव ताः सर्वा आश्रयिष्यन् यथायथम् ॥
असृग्ग्रहणदाने च तावेव चाकरिष्यताम्।
तयोः सहायतार्थं वा यद्यस्य सृष्टिरिष्यते ॥
परिपाटीक्रमेणेष्टसिद्धौ फुप्फुसयोस्तदा।
एकप्रकोष्ठकेनैव द्विप्रकोष्ठेन वा पुनः ॥
हृत्पिण्डेन सुसम्पन्नमभविष्यद् यथायथम्।
कुतं तर्हि चतुःकोष्ठैः सङ्गमेन कृतं तथा ॥
दक्षिणस्योर्ध्वकोष्ठस्य नीचनाडीमुखेन च।
अधःकोष्ठं समासन्नं विहायेति विभाव्यते ॥
तस्मादेवंविधाया हि सृष्टेरन्यत् प्रयोजनम्।
अनुमातव्यमस्तीति तच्चासृक्संस्कृतिक्रिया ॥
एवं रीत्यास्रसंस्कारकर्त्तृत्वं प्रब्रुमो हृदः।
उपरिष्टाद् यथास्थानं विस्तारोऽस्य भविष्यति ॥
यन्त्रराजमिदं तात ! यच्च तत् फुप्फुसद्वयम्।
असृक्संस्कारनिर्वृत्तौ मुख्यं कारणमुच्यते ॥

एतत् त्रयं तथा मुख्यं प्राणव्यापारसंश्रयः।
तथा रक्तवहानाञ्च नाड़ीनां प्रभवस्त्रयम् ॥
अप्ययश्चापि वक्तव्यं त्रयमेव यथायथम्।
हृत्पिण्डं निम्नकोष्ठाभ्यां शिराणां प्रभवं विदुः॥
उभाभ्यान्तूर्ध्वकोष्ठाभ्यां धमनीनां तदप्ययम्।
ऊर्ध्वतो न च कस्याश्चिन्नाड्या उत्पत्तिरीक्ष्यते॥
नाधस्तादप्ययश्चापि कस्याश्चिदिति निश्चयः।
एकस्या एव नाड्यास्तु फुप्फुसावप्ययौ मतौ॥
दक्षस्याधः प्रकोष्ठाद् या निःसृता चोर्ध्वगामिनी।
द्विद्विक्रमेण चैकैकक्रमेण वाथ कुत्रचित्॥
असमेन कदाचित्तु फुप्फुसौ प्रभवौ विदुः।
सव्यस्योर्ध्वेऽनयो र्ह्यासामधस्त्वेका समुद्भवा॥
ऊर्ध्वशाखात एका या या चाधस्तो विनिःसृता।
तयोः स्वतश्च याताया दक्षोर्ध्वांशोऽनयोर्मतः॥
धमन्यः क्षुद्रजातीया अन्या बह्व्यः स्वतः स्थिताः।
एतस्मिंश्च लयं प्राप्ता अप्रधानास्तु ता मताः॥
सर्वेष्वेव च कोष्ठेषु सन्त्यन्या अपि सन्तताः।
प्रत्येकमेव तन्तूनामवोचं तदिहैव तु॥
सर्वासामेव नाड़ीनां प्रभवं विलयन्तथा।
यथाक्रमं क्रियाश्चापि कोष्ठानाञ्च पृथक् पृथक्॥
नाड़ीनां निर्म्मितिञ्चापि कथयामि यथायथम्।
नानाविधानां नाड़ीनां शास्त्रेष्वाख्यानसङ्करात्॥

नान्तरेण पृथक् संज्ञां प्रकृतार्थोऽवगम्यते ।
अत्रादौ नाडीभेदानामतः संज्ञाऽवधार्य्यते ॥
नीरन्ध्रा वा सरन्ध्रा वा स्थूलाः सूक्ष्माश्च वा पुनः ।
तिरश्च्यः सरला वापि दृढा वाप्यदृढा अपि ॥
ह्रस्वा दीर्घाश्च या अस्यां वर्त्तन्ते सूत्रवत् तनौ ।
ताः सर्वा एव विज्ञेया ग्रन्थेऽस्मिन् नाडीसंज्ञया ॥
तासां च बहवो भेदास्तेषां संज्ञा ब्रवीम्यथ ।
शुद्धलोहितवाहिन्यस्तत्र सर्वास्तु नाड्यः ॥
स्थूलरूपाः शिरासंज्ञास्तासामत्रावधार्य्यते ।
यानि सूक्ष्मातिसूक्ष्माणि क्रमाद् विस्तृतिकौशलात् ॥
तासां भवन्ति रूपाणि व्यापकानां तनोरिह ।
सर्वाङ्गेष्वेव तन्तूनां प्रत्येकं सङ्गतानि च ॥
ताः कैशिकाशिरानाम्ना वक्ष्यन्तेऽस्माभिरत्र च ।
अग्रभागाः पुनस्तासां प्रगृहीतेषु तन्तुभिः ॥
दुष्टभावेषु दत्तेषु तासान्तदसृजान्तथा ।
लौहित्यमुपमृद्याथ समुद्भवति नीलिमा ॥
तदा ता एव विज्ञेया धमनीमूलसंज्ञया ।
कैशिकामात्रनामापि तासामत्र भविष्यति ॥
तास्वनेकास्वनेकासु मिलितास्वप्यनेकधा ।
पुनः स्थूलत्वमाप्तासु धमनीनाम कीर्त्तितम् ॥
अशुद्धासृग्वहत्वन्तु धमनीत्वं निरूप्यते ।
ताः पुनः फुप्फुसौ प्राप्य यदातिसूक्ष्मतां गताः ॥

तद्दापि कैशिका एव वक्ष्याम्यत्र पुनश्च ताः ।
सस्नेहरसवाहिन्यो रासायन्योऽत्र सम्मताः ॥
एवं विवरगर्भाणां संज्ञा अत्र निरूपिताः ।
नीरन्ध्राणाञ्च नाड़ीनां त्रिशक्तीनां समाश्रयाः ॥
यास्तासां स्नायुसंज्ञात्र सर्वासाञ्च प्रकीर्त्तिता ।
तत्र प्राणाश्रिता नाड़ी जीवनीति निगद्यते ॥
ज्ञानाश्रिता ज्ञापिनी च चालिनी चलनाश्रिता ।
बन्धनार्थं समुद्भूता अन्या याः काश्चन स्थिताः ॥
सर्वासामेव तासान्तु बन्धनीनाम कीर्त्तितम् ।
स्मरणीयानि सर्वत्र नामान्येतानि पाठकैः ॥
अथ फुप्फुसहृत्पिण्डसंश्रिता याश्च नाड्यः ।
तासां विवरणं तात ! संक्षेपेणावधारय ॥
देहे रक्तवहा नाड़ी मतैकैव विचारतः ।
नानाप्रस्थानभेदैः सा बहुरूपाण्युपागता ॥
नामभिर्बहुभिः ख्याता तथा कर्मविभेदतः ।
सव्यस्याधःप्रकोष्ठस्य मध्यदेशान्महाशिरा ॥
ऊर्ध्वाभिगामिनी सा च पश्चाद्देशे विनिःसृता ।
मध्यदेशे च सरला द्वयोरेवोर्ध्वकोष्ठयोः ॥
वक्रीभूय पुनः सा च सरलत्वमुपागता ।
अवसर्पत्यधोदेशे हृत्पिण्डस्यैव पृष्ठतः ॥
प्राधान्यादस्रनाड़ीनां कीर्त्तितेयं महाशिरा ।
वर्णेन लोहिता येयं सदा शुद्धास्रवाहिनी ॥

वक्त्रदेशात् पुनस्तस्याश्चतस्रो निःसृताः शिराः ।
वाहू संलक्ष्य तासां द्वे द्वे चापि स्तः शिरोगते ॥
कण्ठस्योभयपार्श्वाभ्यामेते सूक्ष्मतरे ततः ।
शाखारूपाः पुनस्ताभ्योऽप्यन्या बह्वयो विनिर्गताः ॥
ऊर्ध्वशाखानुगाः सर्वाः शरीरस्यास्य पुष्टये ।
ताभिरेवानुविद्धौ च फुप्फुसौ पिण्डमेव च ॥
कण्ठयन्त्रं तथा वाहू ग्रीवा च सशिरा तथा ।
मस्तिष्कस्नायुपेश्यश्च सर्वमेतत् समन्ततः ॥
अनुविद्धं यथाश्वत्थमूलैः स्याज्जीर्णमन्दिरम् ।
या चाधस्तादवारूढा तस्याश्चैवंविधा गतिः ॥
बह्वीः शाखाश्च सा चापि वितरन्ती पुनः पुनः ।
पाकस्थल्यादियन्त्रेभ्य आ पदेभ्यः पृथक् पृथक् ॥
अधःशाखाविभागेभ्यः पादाग्रं समुपागता ।
सौक्ष्म्यमापद्यमानानां क्रमादत्यन्तसूक्ष्मता ॥
तदा भवति तासाञ्च शिराणां देहतन्तुषु ।
यदा ता एव चोच्यन्ते सर्वगाः कैशिकाः शिराः ॥
रक्तशेषं वहन्त्यस्ताः प्रत्यायान्ति पुनर्हृदि ।
क्रमात् स्थूलत्वमापन्ना यावत् सूक्ष्मतमाकृतिम् ॥
धमनीमूलनाम्ना ताः प्रोच्यन्ते तत्त्वकोविदैः ।
स्थूलत्वे पुनरारब्धे धमनीसंज्ञिताश्च ताः ॥
धमनीनाम लब्ध्वा च पुनः सा महती शिरा ।
अधस्तादुपसर्पन्ती हृत्पिण्डमभिगच्छति ॥

दक्षभागोर्ध्वकोष्ठस्य निम्नांशात् किञ्चिदूर्ध्वत: ।
दुष्टशोणितगर्भेयं तद्धदेवोर्ध्वदेशत: ॥
धमनीत्वं समापद्य पुनस्तत्पिण्डमागता ।
अनेनैव प्रकोष्ठेन मूलदेशेऽस्य दृश्यते ॥
एताभ्यां धमनीभ्याञ्च यत् स्रोतोऽस्मिन् समर्पितम् ।
रुधिराणां पुनस्तच्च नीत्वा निम्नप्रकोष्ठतः ॥
निर्गता धमनी स्थूला सा चैवोर्ध्वाभिगामिनी ।
विभज्यमाना शाखाभ्यां फुप्फुसद्वयमागता ॥
ततः शतसहस्रैस्तु सूक्ष्मसूक्ष्माभिरेव च ।
शाखाभिर्विस्तृतिं प्राप्य कैशिकाख्यं पुनर्गता ॥
स्वात्मगं रुधिरं तत्र विषमिश्रं यथाविधि ।
पूर्वरीत्यैव संस्कृत्य पुनः स्यात् कैशिका शिरा ॥
स्थूलभावात् पुनस्ताभ्यः स्वल्पसंख्याभ्य एव च ।
फुप्फुसद्वयतस्तात ! तदसृक्स्रोतसः पुनः ॥
संस्कृतस्य चतस्रश्च वाहिका निर्गताः शिराः ।
युज्यन्ते पिण्डवामोर्ध्वस्योर्ध्वकोष्ठे यथायथम् ॥
ततोऽधःकोष्ठमापद्य तत् स्रोतः पुनरेव हि ।
प्रधानशिरया याति प्रोक्तरीत्या ततस्ततः ॥
पुनश्च पूर्वरीत्यैव प्रयाति फुप्फुसद्वयम् ।
ततो हृत्पिण्डमायाति पुनस्तस्मात् ततोऽपि च ॥
पुनः पूर्वोक्तरीत्यैव तन्महाशिरया सरेत् ।
निरन्तरं प्रवृत्त्यैवं दृश्यते चक्रवद्गतिः ॥

तस्मादस्मिन्नेकमेव स्रोतो रक्तस्य दृश्यते ।
हृत्पिण्डावधिकञ्चैव तन्मर्य्यादकमेव च ॥
तत् स्रोतोवाहिनी नाड़ी चैकैवेत्यवधार्य्यते ।
एतद्दृष्ट्या तु हृत्पिण्डं फुप्फुसद्वयमेव च ॥
असृग्वहानां नाड़ीनां ग्रन्थित्वेन प्रकल्प्यते ।
तासां तदुपकारित्वात् सासृजां गुणतापि च ॥
प्राधान्यञ्च भवेत् प्रोक्तदृष्ट्येति ज्ञेयमत्र च ।
अथैतस्याश्चिह्नभेदैः शाखाभेदान्निवोधत ॥
महाशिरां ङ चिह्नेन सरलामूर्ध्वगामिनीम् ।
वक्रभागं पुनस्तस्याश्च चिह्नेनावगच्छत ॥
छेन जानीत तस्याश्च रूपं निम्नाभिगामि यत् ।
ततोऽस्याः कैशिकारूपाण्यग्रतः सन्ततानि च ॥
निरीक्षध्वं जचिह्नेन तेषामेवाग्रतः पुनः ।
धमनीमूलनामानि झचिह्नेनेह पश्यत ॥
ततोऽस्या धमनीरूपं दक्षभागादधःस्थितम् ।
ञ चिह्नेन विजानीत तदूर्ध्वस्थां परामपि ॥
धमनीं टेन चिह्नेन ठ चिह्नेनान्तरालतः ।
तस्याश्च प्रथमायाश्च धमन्याख्यामथापराम् ॥
फुप्फुसाभिद्रुतां नाड़ीं चतस्रश्च तदुद्भवाः ।
शिरा हृतपिण्डसंलीना ड चिह्नैः परिपश्यत ॥
प्रथमा वक्रसंस्थानाच्चतस्रो याश्च निर्गताः ।
ऊर्ध्वतस्तास्तु जानीत चतुर्भिश्च ढ लक्षणैः ॥

शाखाश्चाह्या बहुविधा धमन्या अप्यनेकधा ।
निर्गताः सर्वयन्त्राणां प्रत्येकमनुविद्धय च ॥
पृथग्भूतेन रूपेण प्रवर्त्तन्ते समन्ततः ।
सर्वेषु पिण्डकोष्ठेषु द्वयोः फुप्फुसयोरपि ॥
श्वासनाल्यां तथा कण्ठे गलनाल्यादिकेषु च ।
मस्तकाङ्गेषु सर्वेषु मस्तिष्कादिविभेदतः ॥
बाह्वोः पेश्यस्थिमज्जासु वक्षसोऽन्यत्र च द्रुताः ।
तथैव निम्नगामिन्यो बह्व्यः शाखाः समन्ततः ॥
पाकस्थलीमूत्रयन्त्रयकृत्प्लीहसु सर्वतः ।
त्रिस्रोतः क्लोमपक्वामाशयशिश्नगुदादिषु ॥
सपेश्यादिषु सर्वत्र शिराद्याख्या उपाश्रिताः ।
समन्तात् सन्तताः सर्वाः प्रत्येकञ्चापि तन्तुषु ॥
बहुना किमिहोक्तेन यत्रैताः सन्तता न हि ।
शरीरेऽस्मिंस्तथाभूतमापादतलमस्तकात् ॥
केशभागसहस्राणां भागैकोऽपि न दृश्यते ।
शिरा याः सन्ततास्तत्र हृत्पिण्डस्याङ्गपुष्टये ॥
तत्कैशिकाभ्य उत्पन्नाः सर्वा धमनीसंज्ञिताः ।
दक्षोर्ध्वकोष्ठगर्भस्य नयन्ति दुष्टलोहितम् ॥
तासां स्थूलतमा पिण्डधमनीत्यभिधीयते ।
सकवाटं मुखं तस्या अन्यास्तु नैव लक्षिताः ॥
अनेनैव कवाटेन सुशिरालेन च क्रमात् ।
द्विकवाटं चतुश्छिद्रं कोष्ठमेतत् प्रकीर्त्तितम् ॥

एवं रक्तवहानाञ्च नाड़ीनां गतिरीक्ष्यते ।
अथैतासामुपादानं निर्म्माणञ्च निबोधत ॥

तत्र खलु सर्वाः शिरा धमन्यश्च सकैशिका धमनीमूला नलिकारूपा एव। तत्रापि त्रिभिः स्तरभेदैः शिराणामाकृतयः संघटिताः। स्तराणाञ्च बाह्यमध्याभ्यन्तरभेदै निर्माणभेदा दृश्यन्ते। तत्र बाह्यस्तरः, आवरणं वा संयोगतन्तुभि र्निर्मितः। आभ्यन्तरिको लाङ्गुलाकारलोमशतन्तुभिः स्थितिस्थापकसूत्रैश्च। मध्यमस्तु स्थितिस्थापकधर्मपेशोसूत्रैरिति। एवं निर्म्माणं यदैवासु हृत्पिण्डाद् रुधिरमपसरति, तदा तस्य सर्व्वासु देहशाखासु यथाक्रममपसरणमनुकूलयति, उद्गमनञ्च बाधत इति। अस्त्यन्यदपि कार्य्यं तद् रक्तस्रोतोव्याख्यायामनुव्याख्यास्यामः। कैशिकाशिराणां पुनरेवमेव निर्म्माणम्।

अग्रभागाणां पुनरासामावरणमेवं सूक्ष्मत्वमापन्नं येन तन्तुषु तद् रुधिरमनायासेनैवापसरति। तान्तवीयाश्च पदार्था स्तत्रेति विशेषः। धमनीनामपि सकैशिकानां प्रायेणैवमेव निर्म्माणं दृश्यते। तत्राप्यावरणत्रयमेव वर्त्तते, तत्र स्थूलत्वादिना विशेषो लक्ष्यते। शिरावरणापेक्षयासामावरणानि सूक्ष्माणि दृश्यन्ते, स्थितिस्थापकधर्मश्च न तथा। पेशीसूत्राणि च कुत्रचिदल्पानि कुत्रचिदधिकानि कुत्रचिद् नैव सन्ति। कवाटगुम्भान्यासामनेकासु गर्भतो बहूनि दृश्यन्ते। यैः प्रवहमाणरुधिराणां पुनः कैशिकास्ववसर्पणं बाध्यते। मूलानान्त्वासा-

प्येवं रीत्यैव निर्म्माणं विशेषश्च वर्त्तते। एवं समूलधमनी-निर्मितेः संक्षेपः।

अथेदानीं सह संस्कारकर्मणा रक्तप्रवाहक्रमं सकारणं प्रवेदयिष्यामः।

तत्र सह स्थितिस्थापकधर्मेण पेशीव्यापार एव रुधिर-प्रवाहे कारणमिति निश्चयः। अत्र तावद् रुधिरप्रवाहपथ-वर्त्तीनि शिरा-कैशिकाधमनी-मूलधमनी-फुप्फुसहृत्पिण्डानि सावयवानि सर्वाण्येव यन्त्राणि स्थितिस्थापकधर्माणि, सङ्कोच-विकाशपरायणपेशीसूत्रानुविद्धानि च। पेशीनां ससूत्राणां सङ्कोचविकाशाभ्यान्तु यथैतेषु रुधिरं चक्रवत् परिभ्रमति तदिदानीं प्रदर्श्यते। तत्र प्रथमं हृत्पिण्डस्य सङ्कोचविकाशप्र-क्रिया प्रोच्यते। अस्य पुनश्चत्वार्य्येव कोष्ठानि न युगपत् सङ्कुचन्ति विकसन्ति वा, क्रमेण तु सङ्कोचविकाशौ प्रत्या-वर्त्तेते। यदा दक्षिणोर्ध्वप्रकोष्ठं सङ्कुचति तदा तदधःप्रकोष्ठं विकशति। यदा पुनराद्यस्य विकाशस्तदा द्वितीयस्य सङ्कोचः, एवं सव्येऽपि ऊर्ध्वप्रकोष्ठं सङ्कुचति, अधःस्थं विकशति। तथाद्यस्य विकाशे द्वितीयस्य सङ्कोच इति सङ्कोचविकाशयोः सातत्येन क्रम आशरीरनिर्म्मितेः संवृत्तः।

तत्र यदा दक्षिणोर्ध्वं सङ्कुचति तदा तदीयं रुधिरं तदधः प्रकोष्ठेऽवसर्पति। तत्सङ्कोचाच्च पुनरूर्ध्वाभिमुखायां फुप्फु-सगामिन्यां धमन्यां प्रसर्पति, एवं सव्येऽप्यूर्ध्वप्रकोष्ठे सङ्कु-

चति, तदीयं रुधिरं तदधःप्रकोष्ठेऽवसर्पति। तस्मिन् पुनः सङ्कुचति, ऊर्ध्वगामिन्यां सहस्रमुखायां महाशिरायां प्रसर्पति। इत्येवं सङ्कोचविकाशयोश्च कालो यद्यपि स्वल्पीयानेव तथापि तस्मिन्नेवावसरे चतुर्भिरेव कोष्ठै र्यथा-सम्भवं तद् रुधिरं संस्क्रियते। स च संस्कारो रुधिरस्य दूषितांशपृथक्करणरूपः। हृत्पिण्डं तावत् चतुर्भिः कोष्ठैस्तथा-भूतं संस्कृत्य स्वावयवानुविद्धासु धमनीषु स्वाङ्गानुविद्धशिरारु-धिरेण सह दूषितांशं समर्पयति। तत् पुनर्दक्षिणोर्ध्वप्रकोष्ठे ताभिर्धमनीभिः समर्प्यते। तेनापि तथैव संस्कृत्य पुनर्विशेष-संस्काराय फुप्फुसाभिगमनार्थमधःप्रकोष्ठे समर्प्यत इत्येवमनु-मीयते। अत्र लिङ्गं प्रागेवावोचाम। एवं संस्क्रियमाणं रुधिरं हृत्पिण्डस्य यथोक्तसंङ्कोचव्यापारेण दक्षिणाधः-प्रकोष्ठधमन्यां फुप्फुसाभिगमनार्थं वामाधः प्रकोष्ठशिरायाञ्च सर्वशरीरावयवव्याप्त्यर्थमूर्ध्वगामिन्यां प्रसर्पति। धमनी-शिराश्च स्थितिस्थापकधर्म-कुञ्चनशील-नलिकाविशेष इत्य-वोचाम। तत्र बृहच्छिरा अतिशयेन स्थितिस्थापकधर्मिण्यः, न तु तथा कुञ्चनशीलाः। क्षुद्रशिरास्तु तद्विपरीतधर्मिण्यः। तासां पुनः कुञ्चनशीलतैवाधिक्येन वर्त्तते, स्वल्पन्तु स्थिति-स्थापकत्वम्। तदेतत् स्थितिस्थापकधर्मत्वादेव बृहत्कायाः शिरा वामाधःप्रकोष्ठकुञ्चनदशायां तद्गतरुधिरावसर्पण-काले स्फीतीभवन्ति, न तु भिद्यन्ते; तस्मादेव धर्मात् पुनस्तद्-रुधिरं प्रवाहयति च कैशिकाभिमुखं; कुञ्चनधर्मश्चैवं व्या-

पारस्य सहायतो भवति । अतिसूक्ष्मशिरासु पुनः कैशिका-शिरानामिकासु स्थितिस्थापकसहायकुञ्चनधर्म्मः प्राधान्यमापद्य रुधिरं परिचालयन् एवं कर्म्माणि साधयति ।

तद् यथा सर्वयन्त्राणां तदवयवानाञ्च सर्वेषां प्रत्येकं तत्तत् तन्तुद्वारेण यथायथं रुधिरदानं तथा तन्तुद्वारेणैव कस्मिंश्चि दङ्गेऽस्त्रादिना विक्षते रुधिरक्षरणनिवारणं, रक्षणञ्च सर्वावयवव्यापिनीषु शिरासु रुधिराणाम् । असति पुनराकुञ्चनधर्मे केवलं स्थितिस्थापकधर्मेण परिचालितं रुधिरं विस्तृतेभ्यः सर्वेभ्यः शिरामुखेभ्यो निःशेषतयैवावसर्पेत् । तथा सति नैवं क्रियानिष्पत्तिः सम्भवतीति । वामाधःप्रकोष्ठाकुञ्चनानां प्रत्येकं तन्मध्यतः प्रायेण द्वादशतोलकपरिमितं रुधिरं तदुत्थित-बृहच्छिरायां प्रक्षिपति । तदनुरूपमेव तस्याः शिरायास्तदनु-गतानाञ्चान्यासां स्फीतता भवति । यथोक्तरीत्या प्रवहमाणं रुधिरं धमनीतः कैशिकासु प्रसर्पति; तास्वपि प्रक्षीणस्थिति-स्थापकसहायः प्रधानतया आकुञ्चनधर्म्मो वर्त्तमानः तासां त्वचाऽतीव सूक्ष्मत्वात् शिथिलत्वाच्च तत्स्थितरुधिराणां बहिर्गमनं बाधमानोऽपि न तदीयाङ्गारिकाम्लजनकवाय्वादीनामपसरणं परिबाधते । तस्मादेव कारणात् तद्वायुकोषे च आग्नेयादिवायुप्रवेशश्च भवति कैशिकाशिराश्च सर्वेषामेव स्थूलसूक्ष्मावयवानामारम्भकेषु तन्तुनामधेयेषु प्रत्येकं यथायथं प्रसृताः सत्यो यथोक्तकारणादेव सर्वेभ्यस्तन्तुभ्यः परिपोषणाय

स्वगात्रेभ्यो नानोपादानसहितं रुधिरं समर्पयन्ति। ततस्ते तन्तवः स्वार्थोपयोगिरुधिरं यथायोग्यं समादाय स्वव्यापारेणैव स्वगर्भजाताङ्गाराम्लरूपविषमिश्रितं अतएव दूषितं रुधिरं तासु प्रत्यर्पयन्ति। तत् पुनर्व्युत्क्रमगमनासम्भवात् तन्मुखोत्पन्नासु धमनीमूलाख्यासु नाड़ीषु गत्वा हृत्पिण्डदक्षिणोर्ध्वकोष्ठाभिगामिनीं बृहद्धमनीं प्राप्य तत्रैवोद्गच्छति। यथा च तन्तूनां प्रत्येकं कैशिकासु दूषितरुधिरं समर्पयति, धमनीमूलाख्यासु च तत् पुनः प्रसर्पति। तथैव स्वानुप्रविष्टासु तासु पाकस्थल्यामाशयश्च भुक्तपीतवस्तूनां श्वेतसारादिजनकपदार्थान् सह रसेन समर्पयति। ते च पुनस्तथैव धमनीमूलाख्यासु प्रविश्य यकृत्कोष्ठानि प्रविशन्ति। यकृच्च तान् यथासम्भवं संस्कृत्य रूपान्तरेण च परिणमय्य याकृतिकीर्धमनीर्गमयति। ताः पुनस्तद्रसविशेषान् रक्ताकारेणैव हृत्पिण्डाभिगामिनीं बृहद्धमनीं प्रापयन्ति। ते च प्राग्वर्णितदूषितरुधिरैस्तत्र मिलित्वा दक्षिणोर्ध्वप्रकोष्ठेन हृत्पिण्डमुद्गच्छति। मास्तकाद्याद्यूर्ध्वशाखातश्च बहुशाखाविस्तृताशिरारुधिराणि प्रोक्तेनैव क्रमेण कैशिकास्वभिगम्य तत्तत्तन्तुषु संसृत्य तान् पोषयित्वा तेभ्यः पुनरागतेनाङ्गाराम्लमिश्रितदूषितरक्तेन मिलित्वा धमनीमूलाख्यासु नाड़ीषूपगम्य बृहद्धमनीमाश्रित्य तस्मिन्नेव प्रकोष्ठेऽवसर्पन्ति। हृत्पिण्डाच्च स्वान्तःप्रसूतधमनीभि र्यथोक्तक्रमेण दूषितमेव रुधिरं निःसरति। एवं तानि सर्वाणि रुधिराणि सम्भूय दक्षिणाधः-

प्रकोष्ठप्रसूतायां फुप्फुसद्वयाभिसर्पिण्यामूर्ध्वमुख्यां निःसृत्य फुप्फुसद्वयमभिगम्य ताभ्यां यथोक्तप्रकारेण संस्कृत्य तत्-प्रसूताभिः चतसृभिः शिराभिः सव्योर्ध्वप्रकोष्ठेऽवतार्य्यन्ते। तेन च संस्कृत्य पुनस्तदधः प्रकोष्ठे समर्प्यन्ते। ततश्चाशेष-संस्कारानन्तरं पुनरूर्ध्वगामिन्यां तत्प्रसूतायां महाशिरायां तेन निक्षिप्यन्ते। ततश्च वर्णितक्रमेण पुनस्तदूर्ध्वाधः-शाखासु तत्तच्छिरापथैरेव परितो भ्रमित्वा पुनर्हृत्पिण्ड-मूर्ध्वप्रकोष्ठेन प्रत्यागच्छन्तीत्येवं रुधिरस्रोतः सातत्येन संवर्त्तत इति।

अथेदानीं रुधिरप्रवाहकारणरूपहृत्पिण्ड-फुप्फुसशिरा-धमनीनां स्थितिस्थापकधर्मसङ्कोचविकाशादिकारणं रुधिरो-त्पत्तिमूलकारणञ्च सपरिकरं व्याख्यातुमारभ्यते। तद्विज्ञाने च वीजतत्त्वज्ञानमतीव संश्लिष्टतया व्याख्येयम्। तद्व्याख्याने पुनः प्रकृतमपि सेत्स्यति।

अस्य च रुधिरप्रवाहस्य प्रधानतया द्वे प्रभवस्थाने पाकस्थल्यामाशयाख्ययन्त्रे ततश्चागलनलीतः आ च पक्वाश-याद् अन्नवाहिन्या नल्या सर्वाण्येवाङ्गानि रुधिरप्रभवस्थानानि भवन्ति। तत्प्रदर्शनाय तावत् रसवाहिनाडीतत्त्वं संक्षेपतः किञ्चिद् व्याख्येयमतस्तदादावुच्यते।

अस्मिंस्तु शरीरे यथा रक्तवहाशिराधमन्यश्च आमस्त-कात् पादतलपर्य्यन्तानि स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमभेदैः सर्वा-

ङ्गाणि परिव्याप्यावतिष्ठन्ते । रसवाहिन्योऽपि नाड्यस्तथैवाव-स्थिताः । तासां पुनरुत्पत्तिस्थानानि पेश्यादीनि सर्वा-ण्येव ऊर्ध्वाधःस्थितयन्त्राणि सर्व एव च संयोगतन्तवः । अन्नवाहिन्याश्च नल्या आगलदेशात् पाकाशयपर्य्यन्तानि सर्वाण्येवाङ्गानि विशेषतस्तु पाकस्थल्यामाशययन्त्रे तत्रोत्-पत्तिस्थानभेदादाशु प्रवहमाणानां रसानां प्रकारद्वयं भवति । तेन चासामपि प्रकारद्वयं, तदिदमधस्तादुच्यते, तत्रैका रासा-यन्यो रुधिरोत्सृष्टरसवाहिन्यः । द्वितीया नवरुधिरोपादान-रसवाहिन्यः । अत्र प्रथमो रसस्तान्तवः पक्वरस (प्लाज्मा) इति चाख्यायते । एतद्रसवाहिन्यश्च ( लिम्प् ) रासायन्यः तान्तविकाख्यां भजन्ते । द्वितीयस्तु रसो यान्त्रिकः (काइल) । तद्वाहिन्यश्च रासायन्यो यान्त्रिक्य इत्याख्यायन्ते । प्रथमास्तु संयोगतन्तुभ्य उत्पद्यमानाः, तत्र कैशिका-शिराभिः समर्पितमतिरिक्तमनावश्यकपदार्थयुक्तञ्च नीललो-हितकल्पमापीतं रुधिररसं वहन्त्योऽन्योन्यया संयुज्य धमनीमूलानीव क्रमेण स्थूलत्वमापद्य धमनीव बृहदाकारं प्राप्ता गुह्यदेशादूर्ध्वतो ग्रीवादेशपर्य्यन्तमुपाश्रिताः । सैषा व्यासेन दैर्घ्येण च बृहत्तमा नलिका रासायन्यपि रसनदीत्या-ख्यातुं शक्यते । अस्याः पुनर्मूलमारभ्याग्रदेशपर्य्यन्तं सर्वेष्वेव गात्रेषु सूक्ष्मसूक्ष्मतरसूक्ष्मतमरूपाणां प्रस्रवणादिस्थानीयानां तान्तविकरसवहा रासायन्यः संयुज्यन्ते तन्मुखानाञ्च प्रत्येकं कपाटवत्त्वात् नद्यामिव ते रसा आगन्तुं शक्नुवन्ति, न

त्ववसर्प्तुम्। नद्यामप्येवमनेके कवाटा दृश्यन्ते. यैस्ते रसा ऊर्ध्वत एव गच्छन्ति, नाधस्तात्। अत्र स्थूलधमन्या इव रचना ज्ञातव्या। इयमूर्ध्वदेशतो धमनीविशेषेण तान् रसान् फुप्फुसाभ्यां समर्पयति। तौ पुनः पूर्वरीत्या तान् संस्कृत्य हृत्-पिण्डोर्ध्वप्रकोष्ठे समर्पयतः एवं रासायनीभिः रुधिरप्रवाह-स्तत्संस्कारानुकूल्यं साध्यते।

अथासामपरं रूपं कर्म चान्यत् प्रदर्श्यते। तत् पुनारूप माकारतोऽभिन्नमपि यन्त्रविशेषजन्यत्वात् संज्ञान्तरेणाभि-हितत्वाच्च भिन्नतयैव वक्तव्यं कर्म च यान्त्रिकाणामेव रसवि-शेषाणां ग्रहणं, गृहीत्वा च नद्यां समर्पणम्। तत स्तया नद्या पूर्वोक्तेन धमनीविशेषेण फुप्फुसयोराधानम्। रसविशेषास्तावत् यन्त्रयन्त्राङ्गभेदाद् भिद्यन्ते। न तु तत्र कोऽपि रसः पूर्वोक्त-रक्तोत्सृष्टरसरूपः, किन्तु पाकज एव। पाकव्यापारो हि मुख-विवरमारभ्य प्रायेण मलाशयपर्य्यन्तं प्रवर्त्तते। येन पच्यमा-नेभ्यो भुक्तपीतद्रव्येभ्योऽन्नवाहिन्या नल्या अधः क्रियमाणेभ्यः पाचकाः पोषकाश्च पृथगाकारा रसाः समुत्पद्यन्ते। ततस्तस्या नल्याः प्रायेण सर्वाङ्गत एव धमनीकैशिका आविर्भूय तदीय शिरानिर्मुक्तरुधिरेण सह पोषकान् रसान् गृह्णाना यथा धमन्यां समर्पयन्ति, तथा तदङ्गसमुद्भूता रासायन्योऽपि द्वैविध्येन वर्त्तमानाः कतिपया वर्णिततन्तुप्रदरसान् वहन्ति, कतिपयाश्च पोषकरसान्। उभया एव च तान् रसान् वर्णितायां नद्या

मुपस्थापयन्ति । तत्र पाकस्थलीगृहीतरसस्यामाशयशोषित-रसस्य च विशेषज्ञानमावश्यकम् । तज्ज्ञाने चैतद् रसानामपि तत्त्वं विज्ञायेत ।

पाकस्थल्यास्तावत् द्विविधाः कैशिका उत्पन्नाः । तत्रैकाः तद्गतकैशिकाशिरामुखेभ्यः प्रसृताः ताः कैशिकाशिरारक्तोत्-सृष्टाल्पनीलवर्णाङ्गारकाम्लरूप-विषमिश्रित-रुधिरवाहिन्यः । अपराः पोषणसमर्थपाकजरसवाहिन्यः । उभया एव यकृत् प्राप्तास्तद्द्रसेन कषायीकृतगर्भास्तदुक्तधमन्या एकीभूता इत्यवोचाम ।

अपराः पुनाररासायन्याख्याः तद्गात्रात् समुद्भूता स्तद्गत-पाकजरसविशेषमेव वहन्त्यः प्रोक्तनद्यां तद्रसं समर्पयन्ति । अपरास्त्वामाशयस्यांशविशेषेभ्यः समुत्थिता भुक्तपीतद्रव्य-परिपाकजबहूपकरणरसविशेषं गृह्णानाः तस्यां नद्यामाददते । अस्मिन् रसे बहवः श्वेतरक्तकणा विद्यन्ते । आरक्तकणाश्च स्वल्पाः । तथा स्नेहजातीयाः पदार्थाः, सूक्ष्मसूत्रनिर्माणो-पयोगिपदार्थाश्च । तथा सर्वोपादानबीजपदार्थाः (एल्बुमिन्) केचन बहिर्गमनशीलपदार्थाश्च । लवणं जलं च विद्यते । पाकस्थलीद्त्तरसे तु श्वेतरक्तकणास्तथा सूत्रनिर्माणोपयोगि-पदार्थाः, तथा सर्वोपादानबीजभूताः, तथा केचन बहिर्गमन-शीलाः पदार्था विद्यन्ते । तथा जलं लवणं च, न तु स्नेहपदार्थं आरक्तकणिका वा । शिष्टाश्च आगलदेशादुत्पन्ना रासा-

यन्यः । जललवणसहितं केवलसर्वोपादानबीजान्वितं रसमेव वहन्ति । एवमासां रसेषु पृथग्जातीयपदार्थानां व्यवस्थितिः ।

अथैतेषां रसानामूर्ध्वगमनप्रक्रियाः । तत्र ये तान्तविका रसाः, तेषामुद्गमने कैशिकाशिराणां वेगेन रक्तावसर्पण विशेषः कारणम् । सर्वासाञ्च रसोद्गमने स्वगात्रेषु स्वाभाविकी आकुञ्चनक्रिया, आमाशयात् प्रसृतानान्तु तत्प्रभव-स्थानानामाकुञ्चनक्रिया च । पेशीसूत्राणां पेषणञ्च साधारणो हेतुः । तथा रससमुत्पन्नधमनीव्यापारश्च । सर्वा हि धमन्यो वक्षसः स्फीतिकाले शून्यगर्भा इव भवन्ति; तेनात्याग्रहेण रसानाकर्षन्ति; ततश्च वेगेन तत्र रसः प्रविशति । इत्थं बहुभिः कारणैः रसानामूर्ध्वप्रसारः साध्यते । एत एव रसा बीजानां सहायाः; एष्वेव प्रोक्ताः श्वेतरक्तकणा आरक्तकणाश्च । तथा सर्वोपादानरूपोद्भिज्जजातपदार्थ-विशेषः ( एलवुमिन् ) । सर्वाण्येतानि देहबीजानि भवन्ति । याश्च धमनीमूलरूपा रसवहाः कैशिका उक्ताः, याः सम्भूय धमनीभावं प्राप्ता यकृदभिमुखमन्यधमन्यभिमुखञ्च गताः तद्रसेषु च श्वेतरक्तकणादीनि वर्त्तन्ते, तानि चैतस्य देहस्य बीजानि । एतानि हि रुधिरेण सह मिलितानि बह्वाकारतामा-पद्यमानानि देहस्यास्थिपेशीनाड्यादि सर्वावयवानामारम्भ-काणि भवन्ति । तत्र रासायनीरसस्थानि बीजानि प्रोक्तरीत्यैव रुधिरैः सङ्गच्छन्ते, रुधिररसगतानि पुनरन्य-रूपेणेति । तदेतत् श्लोकैरवगम्यताम् ।

आमाशयात् तथा पाकस्थल्या याः कैशिकाः स्मृताः
रसगर्भाः पुनस्ताश्च धमनीत्वमुपागताः ॥
यकृद्गर्भं सम्प्रविश्य तद्गतेन रसेन च।
समाप्लुताः क्रमात् स्थौल्यं प्राप्ता ऊर्ध्वदिशं गताः ॥
तथान्या अपि तादृश्यस्ताभिरेकत्वमागताः।
धमन्यां स्थूलरूपायां विसृजन्ति च तान् रसान् ॥
अन्याश्च या अधः शाखाभ्यः सर्वा एव कैशिकाः।
तया संयुज्य तत्रैव रुधिराणि च जुह्वति ॥
एवं सा परिपुष्टाङ्गी सर्वानात्मगतान् रसान्।
हृत्पिण्डोर्ध्वप्रकोष्ठे च पश्चाद्देशेन निम्नतः ॥
निदधाति च तान् सर्वान् रसान् नानागुणैर्युतान्।
नाना बीजसमूहेन चान्वितान् नीललोहितान् ॥
रूपं तेषान्तु बीजानामणुवीक्षणगोचरम्।
तानि सर्वैं रसैः सार्द्धं मांसादिप्रभवाणि च ॥
असंख्येयप्रकाराणि स्वस्वोपादानभेदतः
गच्छन्त्यधः प्रकोष्ठे च ततो निर्दिष्टवर्त्मना ॥
ततस्तेन यथायोग्यं कृते संस्कारकर्मणि।
ऊर्ध्वाभिगामिनाड्या तु धमन्योद्गम्य फुप्फुसम् ॥
दक्षिणञ्चैव वामञ्च यथावत् समुपस्थिताः।
उभयेऽपि कैशिकास्तु समन्तात् परिपूरिताः ॥
ततश्च प्रोक्तया रीत्या तद्गर्भस्थान् सहस्रशः।
अवकाशान् समाप्लाव्य प्रश्वासेन पुनः पुनः ॥

प्रविष्टवायुपुञ्जानामक्सिजेनाभिधैस्ततः ।
देहपुष्ट्युपयोगेन सम्भाव्य संस्कृता अपि ॥
अपाकुर्वन्ति तान् भावान् देहस्यानुपयोगिनः ।
येऽपकुर्वन्ति तांश्चैव निःश्वासक्रियया पुनः ॥
विषमाङ्गारिकाम्लाख्यं मोचयन्ति पुनः पुनः ।
एवं संस्कारमापन्नाः फुप्फुसक्रिययापि च ॥
हृत्पिण्डवामकोष्ठं तदूर्ध्वस्थमवसारिताः ।
अन्यनाड्याश्रयेणाथ रक्तप्रायाश्च वर्णतः ॥
तेन कोष्ठेन संस्कार्य्यं चतुर्थं समुपागताः ।
आकुञ्चनविसाराभ्यां तयोरपि यथाक्रमम् ॥
सम्यक् शोधितरूपास्ते भवन्ति रुधिराभिधाः ।
अधुनास्मिल्लोँहिते तु बहवोऽद्भुतदर्शनाः ॥
भावाः प्रादुर्भवन्त्येतान् यथावदवधारय ।
बैजिका एव ते भावा बीजतत्त्वमतस्त्विदम् ॥

## रुधिरतत्त्वम् ।

अथ रौधिरिकं तत्त्वं पाश्चात्त्यैर्यन्निगद्यते ।
स्वचक्षुषा तु यद्दृष्टं तदेवात्राभिधीयते ॥
वर्णस्तु रुधिरे रक्तो यत् सर्वैरवलोक्यते ।
न तत् सम्यक् परीक्षातः पीत एव तु तात्त्विकः ॥
अस्वच्छतामिषाघ्राणं लवणक्षारमिश्रितः ।
रसोऽनुभूयते चास्य गुरुत्वञ्चैवमिष्यते ॥

परिमाणञ्च देहेऽस्मिन् यस्य यद् गौरवं भवेत् ।
तदीयशतभागानां भागैर्द्वादशभिर्मतम् ॥
कुत्रचित् कुत्रचिद्देहे तैश्चतुर्दशभिश्च तत् ।
अत्रोदाहरणं पश्य येन तत् प्रस्फुटीभवेत् ॥
रामदासस्य चेद्देहः शतसेरमितो भवेत् ।
मितं द्वादशभिः सेरै रुधिरं तत्र बुध्यताम् ॥
एवमन्यत्र देहेऽपि रीत्या ज्ञेयं यथायथम् ।
यावन्मात्रन्तु रुधिरं यस्मिन् देहेऽवतिष्ठते ॥
त्रिसाहस्रैर्विभज्यैतन्मानमेवं घनाम्बुनोः ।
तस्य भागसहस्रे तु द्वासप्तत्यधिकानि च ॥
षट्शतानीह भागाः स्युस्तरलानामितीक्ष्यते ।
अष्टाविंशतियुक्तं यच्छिष्टं भागशतत्रयम् ॥
कठिनानां पदार्थानां मानं तदभिधीयते ।
अन्यरूपेण चैतस्य तत्त्वं ज्ञातुमिहार्हसि ॥
यद्द्रवात्मकमेवैतत् सर्वोपादानरूपकम् ।
यैर्निर्म्मितं शरीरस्य मांसास्थ्यादि पृथक् पृथक् ॥
भासमानैरसंख्यातैर्बीजैश्चापि समन्वितम् ।
प्रथमं तदिदं रक्तं भागाभ्यां प्रविभज्यते ॥
पदार्थस्तरलाकार एकोऽन्यः कणिका मतः ॥
तत्र यस्तरलाकारो वर्णस्तत्र न दृश्यते ॥
जलञ्च लवणञ्चैव सूक्ष्मसूत्रोपयोगिनः ।
सर्वोपादानयोग्याश्च दृश्यन्ते भावराशयः ॥

इमं पदार्थसंघातं जलवत्तरलाकृतिम् ।
पोषकं रौधिरं प्राहू रसं नाम्ना विपश्चितः ॥
ये पुनः कणिकाकारा दृश्यन्तेऽन्ये पृथग्विधाः ।
ते च जीवनबीजेति नामयोग्या भवन्ति हि ॥
ते चापि द्विविधा दृष्टाः श्वेता रक्ताश्च वर्णतः ।
यदा चैवंविधं रक्तं प्राप्णोति घनतां तदा ॥
गन्धान्तरं प्रयात्यस्मात् तरलं चान्यरूपकम् ।
पृथग्भवति वस्त्वस्मात् पीतदेश्यं तदीक्ष्यते ॥ (सिराम्)
शलाकया तु तद्रक्तं शनैरालोड्यते यदि ।
लूतातन्तुनिभं तत्र दृश्यते जड़ितं बहु ॥
श्वेतवर्णं तदेवात्र वस्तुसूत्रमितीरितम् ।
कणा ये लोहिताकारा अत्यन्तमणवश्च ते ॥
सहस्राणां त्रयाणान्तु भागानामङ्गुलस्य च ।
शतद्वयाधिकानान्तु भागैकोऽत्र निरूप्यते ॥
मानमाकारतस्तेषां तस्माद् दृश्या न चक्षुषा ।
गात्रस्यैवामुभौ पार्श्वावधश्चोपरि च स्थितौ ॥
किञ्चिन्न्युब्जौ पुनस्तौ तु पूर्य्येते तद्विचेष्टया ।
वर्णितात् तरलाद् द्रव्याद् भावान् संगृह्य तद्धितान् ॥
एवं ते पुष्टिमापन्ना जायन्ते कूर्मसन्निभाः ।
स्थितिस्थापकधर्माणः कोमलाश्चैव वर्णतः ॥
आपीताभाः पृथग्विधाः संहतास्तु सुलोहिताः ।
कोशवर्द्धनशीलन्तु मूलमेषु न दृश्यते ॥

जीविनः सर्व एवैते गत्याद्याः प्राणभृत्क्रियाः ।
उभयेष्वेव दृश्यन्ते ताश्च सन्धानपूर्विकाः ॥
सुखदुःखादिबोधश्च सम्यगेष्वेव धार्य्यते ।
आत्मरक्षाप्रवृत्तिश्च मैत्री चैव स्वजातिषु ॥
संहतिप्रियता चैषामुभयेष्वेव लक्ष्यते ।
सुसम्भूय सुसम्भूय यथा मुद्गादिसंहतिः ॥
गोलस्तम्भसमाकाराः स्थातुमिच्छन्ति सर्वदा ।
उत्सहन्ते न तु क्वापि स्थातुमेकः कदाचन ॥
अमित्राणां जिघांसा च मित्राणाञ्च विरक्षिषा ।
विवेकशक्तिरेतेषां कार्य्यदृष्ट्यानुमीयते ॥
देहाद्विदीर्य्यमाणाश्च म्रियन्ते न च तत्क्षणात् ।
मुहूर्त्तद्वितयञ्चापि दृश्यन्ते जीविताः क्वचित् ॥
गुरुत्वमेषु संख्या च पण्डितैरेवमिष्यते ।
अम्बुनः सममानस्य सहस्रं यदि कल्पते ॥
स्वगुरुत्वस्य भागानां ततोऽष्टाशीतिसंख्यकाः ।
कणा गुरुत्वभागाः स्युरधिका इति निर्णयः ॥
यश्चैवाङ्गुलमानस्य विंशभागो भवेद्घनः ।
चत्वारि पंच वा तत्र लक्षाण्येते भवन्ति च ॥
स्फीताश्चैते भवन्तीह जलयोगेन बाह्यतः ।
तथा सति च यत्तेषामन्तःस्थं वर्णकारणम् ॥
रक्तरञ्जकसंघातं पृथग्भवति वस्तु तत् ।
पदार्थाश्चात्र रक्तासु कणिकासु विशेषतः ॥

दृश्यन्ते पञ्चरूपाश्च वाष्पाम्बुलवणानि च ।
रक्तरञ्जकमत्रास्ति पञ्चमं व्यञ्जकाभिधम् ॥
त्रयश्च वायवस्तत्र प्राणोऽम्लजनकश्च सः ।
यावक्षारो द्वितीयः स्यादम्ल आङ्गारिकोऽपरः ॥
रक्तरञ्जकसंयुक्त स्तत्राद्यः परिलक्ष्यते ।
द्वितीयोऽत्यल्पमात्रस्तु स्वातन्त्र्येणैव तिष्ठति ॥
( हिमोग्लोविन् )
आपीतेन रसेनाथ तृतीयो युक्त ईक्ष्यते । ( सिराम् )
एकभागोऽत्र लवणं क्षारप्रस्फुरकान्वितम् ॥
दृष्टं प्रतिशतं तात ! जलान्येव बहूनि च ।
शिष्टौ परौ तु विज्ञेयौ यथानियममास्थितौ ॥
रक्तरञ्जकनामा तु चतुर्थो योऽयमीरितः । (हिमोग्लोविन्)
उपादानानि यत् तत्र शृणु तानि यथाक्रमम् ॥
अङ्गारश्च यवक्षारो जलस्य जनकस्तथा ।
आग्नेयश्च तथा वायुः कठिनो व्यक्त एव च ॥
दृष्टः कश्चित् पदार्थोऽत्र गन्धकञ्चैव पञ्चमम् ।
एषां प्रतिशतञ्चैव बीजानि लोहितासृजः ॥
शुष्कभूतानि सूक्ष्माणि वशोनानि वदन्ति च ।
जले पीतरसे चैतद् द्रवञ्च निस्रागं भवेत् ॥
तदा स्वच्छं स्वरूपेण काचवद् दृश्यते सदा ।
पदार्थान् स्थावरस्यैतद् विमृद्यैव प्रजायते ॥
तथापि जातिभेदेन रूपमस्य पृथक् पृथक् ।

मानवानां शरीरे च दीर्घाकृतिः समीक्ष्यते ॥
चत्वारि तत्र कोणानि त्वष्टकोणानि शूकरे ।
षट्कोणानि च मार्जारे न तत्र दैर्घ्यसम्भवः ॥
एवमन्यान्यदेहेषु भवत्येतत् पृथग्विधम् ॥
यदाकारोपयोगित्वं यस्य देहस्य निर्मितौ ।
तदाकारेण तत्रैव परिणम्यैतदास्थितम् ॥
इदं द्वाभ्यां प्रकाराभ्यां देहेऽस्मिन्नवतिष्ठते ।
अर्द्धांशोऽस्य दृश्यतेऽस्मिन्नाग्नेयवायुमिश्रितः ॥
स्वातन्त्र्येणापरांशेऽस्य भागाश्चत्वार एव च ।
तत्राद्यं नीलरक्तन्तु कृष्णञ्चैव द्वितीयकम् ॥
शिष्टे च पीतवर्णौ स्त इत्यस्य भागनिर्णयः ।
चतुर्थं व्यञ्जकं प्रोक्तं तत् तत्त्वन्तु निशामय ॥
तदेतन्नातिभिन्नेन रूपेण द्विविधं भवत् ।
आपीतेन रसेनैव प्रायेण मिलितं स्थितम् ॥
यदा तु लवणं किञ्चिदङ्गाराम्लञ्च किञ्चन ।
तद्रसे मिलितं कुर्य्यात्तदेतन्निस्नगं भवेत् ॥
श्वेतचूर्णत्वमापद्य पश्यन्तीमं विपश्चितः ।
एवं व्यञ्जकतत्त्वन्तु समासेन निरूपितम् ॥
तथा रक्तकणानाञ्च रूपादिकमिहेरितम् ।
सितानामधुना तात ! कणिकानामिहोच्यते ।
कणिकाः श्वेतरूपा या गोलाकारास्तु ता मताः ।
व्यासमानं भवेदासां प्रायेण लोहितैः समम् ॥

अष्टाविंशच्छतानाञ्च भागानामेकभागकम् ।
मानमङ्गुलमानस्य भवेदिति निरूपितम् ॥
अङ्गुलस्यैव विंशांशे घना एषां निरूपिताः ।
संख्याः सप्तसहस्राणि आचतुर्भ्यः समीरिताः ॥
अल्पीयो गौरवञ्चैषां कणातो लोहितासृजः ।
त्वगावरणमेतेषां न किञ्चिदपि दृश्यते ॥
सर्वथा प्राणिधर्माणो यथा रक्तकणास्तथा ।
गतिश्चैषां तथैवास्ति प्रकृतिस्तु पृथग्विधा ॥
सर्वोपादानभूतं यद् रुच्यते स्थावरैरिह ।
तद्विकार (प्रोटोप्लाजम्) विशेषश्च श्वेतानां प्रकृतिर्मता ॥
कोषवर्द्धनशीले च द्वे मूले एकमेव वा ।
आसु स्त इति रक्ताभ्य आसामेतद्विशिष्यते ॥
रासायनजभावाश्च दृश्यन्तेऽत्र चतुर्विधाः ।
अण्डलालामयो भावः प्रथम स्तत्र कीर्त्तितः ॥
द्वितीयः स्नेहलवणे तृतीयोऽन्यौ पृथग्विधौ ।
(लिसिथिन् ग्लाइकोजेन)
चतुर्भिश्च चतुर्थः स्यात् सलिलञ्चात्र विद्यते ॥
(मायोसिन् कलेष्ट्रीन्)
एवं संक्षेपतस्तत्त्वं श्वेतानामिह कीर्त्तितम् ।
एतासामेव रक्तत्वे परिणामोऽपि दृश्यते ॥
स्वतन्त्रा च तदुत्पत्ति र्दृश्यते सर्वदैव हि ।
प्रथमं वीजभावेनैवोभयासां जनुर्मतम् ॥

ततः सर्वासु नाडीषु यकृत् प्लीहाद्युरःसु च ।
सन्ततासु भवेदासां पुष्टिस्तत् क्रियया पुनः ॥
श्वेतानामेव तत्रैव विशेषः परिदृश्यते ।
जलीयांशस्तु यो रक्ते आपीतरसमिश्रितः ॥
तत्र क्षारपदार्थोऽपि परीक्षातः समीक्ष्यते ।
गुरुत्वञ्चास्य बोद्धव्यमेवम्भागविनिश्चयात् ॥
समञ्चेत् केवलाम्बु स्यादेवम्भूतस्य वस्तुनः ।
सहस्रन्तत्र संख्याञ्च गुरुत्वस्याधकल्पय ॥
तत्रासृजो जलांशस्य या गुरुत्वमितिर्भवेत् ।
एकोनत्रिंशपर्य्यन्तमाषड्विंशात्तु साधिका ॥
द्रवाश्च तत्र दृश्यन्ते चत्वारो ये पृथग्विधाः ।
प्रायेणैतेषु सर्वेषु सर्वोपादानमीक्ष्यते ॥
रसायनजभावाश्च वायवश्च पृथग्विधाः ।
तद्विशेषवर्णनन्तु नात्यन्तमिह युज्यते ॥
एवं बीजानि जायन्ते रुधिरं कणिकास्तथा ।
ततः प्रोक्तदिशा तस्माद् रक्तात् सर्वत्र विस्तृतात् ॥
स्वस्वोपादानमादाय जायन्तेऽसंख्यतन्तवः ।
मांसमेदोऽस्थिमज्जासु हृत्पिण्डफुप्फुसादिषु ॥
पुरातनाश्च ये सन्ति ते तिष्ठन्ति स्वमूर्त्तिषु ।
प्रत्येकमेव यन्त्राणां यथा भिद्यत आकृतिः ॥
तथा तदीयतन्तूनामाकाराश्च पृथग्विधाः ।
अत्यद्भुतानि ते सर्वे विचित्रदर्शना स्तथा ॥

रुधिरस्यापि बीजानि बीजांशा ये च सूक्ष्मकाः।
सर्व एव यद्दि स्युश्च कोषशब्देन भाषिताः॥
तथाप्यत्र विशेषेण परिभाषा विधीयते।
बहुबीजसमुद्भूतो येषामेकैक एव च॥
त एवात्रावगन्तव्याः कोषशब्दाभिधित्सिताः।
तन्तवश्च तदारब्धास्तानेवात्र यथाक्रमम्।
आकारतः क्रियातश्च वर्णयिष्ये यथामति॥
या रक्ते कणिकाः प्रोक्ताः शुक्ला रक्ताश्च सूक्ष्मकाः।
तासु शुक्लास्तु सम्भूय रक्ताभिश्च क्वचित् सह॥
यथोक्तगुणसम्पन्नाः प्राणिधर्म्मैरलंकृताः।
आरभन्ते हि ता एव संयोगेन विशेषतः॥
कोषान् नानाविधांस्तात! गोलाकारानसंख्यकान्।
कोषेभ्यस्तन्तवो जाता स्त एवासंख्यरूपकाः॥
तथान्यबीजतश्चापि जायन्ते कोषपूर्वकम्।
मांसतन्तुः शिरातन्तुस्तन्तुर्धमनीकारकः॥
तथा मज्जास्थितन्तुश्च मेदोऽन्त्रतन्तवस्तथा।
हृत्पिण्डफुप्फुसप्लीहयकृत्तन्तुस्तथैव च॥
स्नायुक्लोमतन्तवश्च रासायन्यश्च तन्तवः।
स्वरप्रस्रावयन्त्राणां शुक्रादीनां च ये मताः॥
पृथगाकृतयः सर्व उत्पद्यन्ते यथाविधि।
केचित् स्तम्भसमाकाराः केचिन्मृगविषाणवत्॥
द्वौ द्वावपि च संयुक्तौ सूत्रवच्चापि केचन।

तथा धनुर्युगाकारा-गोलाकाराश्च केचन ॥
मत्स्यशल्का इवान्ये च बहुकोणास्तथापरे ।
तारकायुगवच्चान्ये समीक्ष्यन्तेऽप्यसंयुताः ॥
केचिच्च लाङ्गुलाकारा स्तथान्ये चान्यरूपकाः ।
तेषामाकृतिभेदांस्तु संख्यातुं नैव शक्यते ॥
एवं यन्त्रादिभेदेन तन्तवो भिन्नजातयः ।
ते सदैव तु जायन्ते म्रियन्ते च तथैव ते ॥
परस्तात्तद् दर्शयिष्य इदानीमन्यदुच्यते ।
एषां प्रसवकार्य्यार्थं मूलं सर्वत्र दृश्यते ॥
येन कोषा विजायन्ते सदैवापरिसंख्यकाः ॥
तेनैषामपि जन्म स्यात् सततं वृद्धिकारकम् ॥
कोषस्यैवाङ्कुरोऽयं स्यात् कोषमूलञ्च कथ्यते ।
( निउक्लियस् )
केन्द्रीभावेन संवृत्तः कोषेषु च पृथक् पृथक् ॥
निर्म्मिमीते सदा कोषान् कोषं तन्तु विभर्त्ति च ।
सर्वोपादानभूतात् स जात उद्भिज्जजन्मनः ॥
विकृतादन्यरूपेण सर्वादिकोषसंज्ञकात् ।
नारीपुरुषधर्म्माभ्यां द्विधाभूयावतिष्ठते ॥
निर्म्मिमीते पुनः कोषांस्तस्माद् द्विविधधर्म्मकान् ।
नारीकोषास्तथा कोषाः पुरुषाख्या भवन्ति च ॥
तेभ्यश्चापि हि ये जाता स्ते चाप्येवंविधा मताः ।
नियामकः स एतेषां मस्तिष्कवद्व्यस्थिवः ॥

अत्रैतदपि बोद्धव्यमेकैकस्मिंश्च कोषके।
स्त्रियाश्च पुरुषस्यापि द्वयोरेव सहस्थितिः॥
समानमात्रया वापि न्यूनाधिक्येन च क्वचित्।
सर्वरूपेषु कोषेषु ज्ञेयमेतद्विचक्षणैः॥
शुक्रमध्यगता ये च कोषाः स्युः पुत्रकारकाः।
सूक्ष्माश्चरन्ति तत्रैव पुंवीजं केवलं मतम्॥
कन्याप्रजनका ये तु तेषां मध्यगतञ्च यत्।
तद्बीजं न्यूनयोषित्वं पुंप्रधानञ्च कल्पते॥
डिम्बभूतास्तु ये कोषा योषित्सु योषिदाकराः।
तत्र बीजसमूहस्तु स्त्रीधर्म्मेत्यनुमीयते॥
पुत्राभिजनने ये स्युरनुकूलाश्च योषिताम्।
कोषास्तद्गतबीजानि न्यूनपुंस्त्वानि कल्पये॥
सामान्यन्त्वनयोः क्वापि सर्वथैव न सम्भवेत्।
प्रायेण समतां मत्वा सामान्यं तन्निगद्यते॥
यैः कोषैर्जन्यते क्लीवस्तत्रैवमनुमीयते।
एवं बीजगतस्त्रीत्वात् पुरुषत्वाच्च तद्गतात्॥
कोषा अपि च कल्पन्ते पुरुषा योषितस्तथा।
कोषांशाः कथिता ये वा आदिबीजाभिधानकाः॥
तदारब्धानि बीजानि कोषबीजतथा यतः।
कल्पन्तेऽत्र ततस्ते च स्त्रियश्च पुरुषा अपि॥
तातात्र सर्व एवैते बीजांशा वा तदंशकाः।
रक्तानां कणिकाश्चापि कोषाश्च तन्तवस्तथा॥

कोषशब्दगृहीताः स्युरित्येवमवधारय ।
यथैवैतानि सर्वाणि स्त्रीपुंधर्म्माणि सक्रमम् ॥
प्राणिधर्म्माणि तद्वच्च तथा प्राणिक्रियाणि च ।
दृश्यन्ते तद्धि चैतेषां तथैव परिकल्पते ॥
इति चात्रावगन्तव्यं नैतानि प्रथमानि यत् ।
एतेभ्योऽपि हि कल्पन्ते यानि सूक्ष्मतराणि च ॥
बीजानामपि बीजानि तान्येवादिजनूंषि नः ।
मन्ये तेषामपि स्त्रीत्वं पुरुषत्वञ्च विद्यते ॥
अन्यत्रैव तु तच्चिन्त्यं नात्र तस्य प्रयोजनम् ।
भावानां बीजहेतूनां रचितानामिहोद्भिदा ॥
उपमर्द्देन ये जातास्तेषां श्रेष्ठतमस्तु यः ।
आदिबीजसमाख्योऽसौ प्रोक्त एव पुनः पुनः ॥
स चाणुवीक्षणेनैव किञ्चित् तरल ईक्ष्यते ।
वर्णतस्तु द्विधाऽयं स्यात् स्वच्छ आकृष्ण एव च ॥
तेषां ज्ञानादयो धर्म्माः कणावदेव निश्चिताः ।
क्रियाश्चैषां त्रिधाः प्रोक्तास्तत्राद्या गतिरीरिता ॥
द्वितीयं पोषणं कर्म कोषाणां जननं परम् ।
श्वेतरक्तकणानान्तु गत्यैवैषां गतिर्मता ॥
सा च द्विधा भवेदेषां बाह्याभ्यन्तरभेदतः ।
बाह्यावयवतो या स्यात् साद्या तत्र प्रकीर्त्तिता ॥
अन्तरस्थैस्तु भावैर्यः साध्यते सा परा मता ।
कूर्म्माणां कुक्षिसंस्थास्तु पुच्छपादकरादयः ॥

विनिष्क्रम्य पुनस्तेषां साधयन्ति गतिं यथा ।
आदिवीरासमाख्यानास्तथैवान्तः शरीरतः ॥
सूक्ष्मपुच्छवदङ्गानि विनिर्गत्य पुनः पुनः ।
चालयन्ती तनुं सा तु बाह्यैषां गतिरीरिता ॥
एवं गतेर्निमित्तं किमिति चेत् परिपृच्छसि ।
समासतः प्रतिब्रूमस्तदा किञ्चिन्निशामय ॥
विस्तरस्त्वस्य भविता पृथक् प्रकरणे पुनः ।
स्त्रीशक्तिरेषु या तात ! पुंशक्तिश्च प्रदर्शिता ॥
ते एवास्या निमित्ते स्त इति मन्यामहे वयम् ।
ते परस्परसंश्लेषः प्रियत्वात् प्रेमतोऽपि वा ॥
एका ह्यन्यतरां प्राप्तुं चिकीर्षति सदैव च ।
न त्वेकान्यतरां त्यक्त्वा स्थातुमुत्सहते क्वचित् ॥
तच्चिकीर्षाभिनुन्नानि बीजान्यपि चलन्ति च ।
अन्यप्रोटप्लाजमिको (आदिबीजं) बीजैरितरशक्तिकैः ॥
साकं सम्भवितुं तस्मादेतेषाञ्च गतिर्भवेत् ।
यः पोषणक्रमस्तेषां परस्तात् स वदिष्यते ॥
त एते परिवर्त्तन्ते रूपैरन्यैरपि क्वचित् ।
लभन्ते चान्यनामानि रक्तराशिषु संस्थिताः ॥
एवमेवादिबीजानां वर्णितानान्तु संहतिः ।
मनुष्यादिशरीराणां कोष इत्यभिधीयते ॥
सर्वेषामेव कोषाणां तन्वावरणमीक्ष्यते ।
सूक्ष्मं झिल्लीव तत्तेषां शरीरादेव जायते ॥

स्वच्छरूपञ्च तज्ज्ञेयं निकायपरिवर्जितम् ।
नमनीयञ्च तद्रूपं तस्मादेषां शरीरतः ॥
निर्गन्तुमभिगन्तुञ्च तरलं वस्तु शक्नुयात् ।
आकारांश्चैव कोषाणां निर्म्मित्या वर्णतोऽपि च ॥
बहुधैव विजानीहि त उच्यन्ते यथाक्रमम् ।
मेदो निर्म्मापकाः कोषाः शुक्लप्राया भवन्ति हि ॥
ग्रन्थीनां रचका ये तु नानावर्णैस्त ईक्षिताः ।
ये पिगामेन्ट् समाशक्ता स्तद्धरेव हि ते मताः ॥
एषां निर्म्मितिभेदाश्च प्रागेव परिदर्शिताः ।
इत्थं वर्णितकोषाणां सदैव मूलजन्मनी ॥
धारावाहितया तात ! प्रवर्त्तेतेऽत्र मूर्त्तिषु ।
जनित्वा कञ्चिदेवैते कालं जीवन्त्यहो पुनः ॥
म्रियन्तेऽथ पुनर्मृत्वा निःसरन्ति शरीरतः ।
अन्ये पुनश्च सञ्जाताः पूरयन्ति तदासनम् ॥
तदिदं जन्मवृत्तान्तं कोषाणां मूलसंज्ञिनाम् ।
पितृशुक्रगतेभ्यश्च कोषेभ्य इह वर्ण्यते ॥
तेषामुत्पत्तिरीति र्या या वृद्धिक्षययोरपि ।
इदानीमपि देहेऽस्मिन् सैव सम्यग् विराजते ॥
तस्माद्विज्ञायतामेषा साम्प्रतं चाधिगम्यताम् ।
पुंसान्तु शुक्रबिन्दूनां प्रत्येकं बहुसंख्यकाः ॥
सन्तानकारकाः कोषाः सन्तीति यदुदीरितम् ।
तत्र तेषां स्वरूपादीन् यथावदवधारय ॥

अवश्यञ्च त्वया तात ! वल्ली सततमीक्ष्यते ।
नेत्रकर्णमुखैर्हीना सा पादैश्च प्रकल्प्यताम् ॥
यादृशी स्यात् तदा तस्य मूर्त्तिरेषाञ्च तादृशी ।
शिरोग्रीवा मध्यदेशः पुच्छञ्चैषां तथेक्ष्यते ॥
मस्तकं यच्च तत्तात ! मुखनेत्रादिवर्जितम् ।
तत्रोष्णीषमिवाभाति तत् परिच्छेदलक्षणम् ॥
ग्रीवादेशोऽपि यः प्रोक्तस्तत्रापि द्वौ विभाजकौ ।
अधस्ताच्चोर्ध्वतश्चापि सूत्रमाल्यवदीक्षितौ ॥
भावौ, तौ देहमेतेषां परिच्छिन्तः पृथक् पृथक् ।
दृश्यन्ते वर्णतश्चैते प्रायेणैव तु मेचकाः ॥
क्रियाशक्तिर्लाङ्गुलेन ज्ञानञ्चान्येन लक्ष्यते ।
लाङ्गुलेन हि सर्पन्ति सुखदुःखे च मूर्त्तिनः ॥
विजानन्तीति मन्यन्ते सर्व एव विपश्चितः ।
जीवनं जन्म मृत्युश्च नान्यन्मानमपेक्षते ॥
तस्मात् प्राणिन एवैते नात्र कार्य्या विचारणा ।
एवं प्रजनुपिण्याणां कोषाख्यानाञ्च लक्षणम् ॥
एतन्मूर्त्तिश्च जीवोऽयं प्राक् पुंस्येव प्रजायते ।
एतदेव हि जीवस्य प्रथमं जनिरुच्यते ॥
"पुरुषेहे" त्यादिकया श्रुत्या विद्वद्भिरेव च ।
एतान् कोषांस्तु पाश्चात्या वदन्ति स्पार्माटोजनम् ॥
एतेषामंशभूतांश्च प्रोटोप्लाजमसंज्ञया ।
आदिकोषा यथोक्तास्ते बीजकोषाश्च तद्गताः ॥

तद्गतानि च बीजानि यथोक्तान्येव सन्ति च ।
तत्र सूक्ष्मतमा ये च सर्वेभ्यः परिकीर्त्तिताः ॥
स्त्रीशक्तिकाश्च तत्रैके तथा पुंशक्तिकाः परे ।
नारीणां तत्र पुंसाञ्च तेषां युग्मं परस्परम् ॥
सम्भूय ज्ञानशक्त्यादेराधिक्येन विकाशनात् ।
पुष्णाति मिलितात्मानमेकीभूतमिव स्थितम् ॥
सूक्ष्मभूतैरुपादानैरप्राप्तप्राणिसंज्ञकैः ।
अधिकं सुखमन्विच्छ्वोस्तयोर्योगो यदा तदा ॥
भवत्यन्यविधो भावः स्त्रीपुंशक्त्योर्विघर्षणात् ।
तदा च समतां यातः स्त्रीपुमांसावुभावपि ॥
निमीलिताविवासाते ह्यस्ति नास्ति विलक्षणौ ।
उर्ध्वं ततः क्षणादेव जागृतौ द्वौ तदा पुनः ॥
पूर्वावस्थाऽव्यतिक्रान्तावित्येवात्रानुमीयते ।
यदासीत् पुरुषः पूर्वं योषिच्च नाधुना तथा ॥
बलेनेव विपर्य्यास उभयोः सम्प्रवर्त्तते ।
तदवस्था पुनस्तात ! क्षणाद्विपरिवर्त्तते ॥
पुनः सापि विपर्य्यस्त एवं मन्यामहे वयम् ।
उभयोरेव च प्राणशक्तिः क्रीड़ति सर्वदा ॥
पोषणार्थं निकाय्यस्य सा करोति च पोषणम् ।
परिवर्त्तनजातस्य तस्माद्देहान्तरोद्भवः ॥
एकस्मिन् परिवर्त्ते च यथा देहः प्रपुष्यते ।
अन्यस्मिंश्च तथेत्यस्माद् देहभेदः प्रजायते ॥

वियुयुक्षा युयुक्षा च द्वयमेवात्र वर्त्तते ।
तत् सामञ्जस्यतस्तात ! वृद्धिर्विश्लेष एव च ॥
युगपत् सम्प्रवर्त्तते प्रतिदेहञ्च तद्विधम् ।
यथाकालं ततस्ते तु वियुज्यन्तेऽपरात्परे ॥
तत्रैक एव कर्त्ता च मूलप्राणी तथैककः ।
प्रतिदेहं न जीवोऽपि पृथक् पृथगिहेष्यते ॥
एवमेवादि बीजानामवस्था परिकीर्त्यते ।
एषामपि च मूलं वै कल्प्यते तच्च सर्वथा ॥
एतल्लक्षणकं किन्तु नाकारेणेह वा क्वचित् ।
आदिबीजेभ्य एतेभ्यो जायन्ते पित्र्यकोषकाः ॥
अनन्तेभ्योऽप्यनन्ताश्च यथापूर्वं प्रकीर्त्तिताः ।
सदैवैते च जायन्ते म्रियन्ते च सदैव हि ॥
एकस्यैव हि जीवस्य जायन्ते बहुमूर्त्तयः ।
सर्वा मूर्त्तीरभिव्याप्य त्वेक एव हि वर्त्तते ॥
एतदन्यप्रसङ्गे च परस्तादिह वक्ष्यते ।
मूले नष्टे तदुत्पन्ने तदुत्पन्नेषु वा पुनः ॥
नष्टेष्वन्यतरं श्रित्वा जीवः प्राणेन राजते ।
नश्यन्ति सर्व एवैते कोषा युगपदेव चेत् ॥
जीवोऽपि भवति प्रेतो लुप्तप्राणक्रियस्तदा ।
जीवस्यैकत्वसिद्धान्तोऽपीति मे वर्त्तते मतिः ॥
इति वै पित्र्यकोषाणां यत्किञ्चिदिह वर्णितम् ।
इदानीं डिम्बकोषस्य विस्तृतिः परिदर्श्यते ॥

नारीपुंशक्तिलीला च देहानां जननन्तथा ।
तद्देवास्य प्रसङ्गस्य केन्द्रीभूतमिव स्थितम् ॥
शुक्रे तु वर्णितैः कोषैः सह सिक्ते च योषिति ।
योनौ ते लाङ्गुलैः कोषा विसर्पन्त इतस्ततः ॥
स्त्रीकोषान् डिम्बरूपांश्च समन्विच्छन्ति सर्वतः ।
अप्राप्य तु ततस्तत्र तानुद्गच्छन्ति लिप्सया ॥
जरायुं तत्र चेड्डिम्बं डिम्बकोषाद्विनिःसृतम् ।
प्राप्नुवन्ति ततो यादृगवस्था तां निशामय ॥
डिम्बाधारौ जरायोः स्तः पार्श्वयोः सव्यवामयोः
दशैकादश वा तत्र प्रत्येकं डिम्बकोषकाः ॥
स्त्रीत्वशक्तिप्रधानत्वात् कथ्यन्ते स्त्रिय एव ते ।
अतिसूक्ष्मतमास्ते च सन्ति सीमन्तिनीतनौ ॥
पुंतनौ बीजकोषाणामंशाः प्राग् यदुदीरिताः ।
इहापि च समा एते बीजकोषप्रवर्त्तकाः ॥
लक्षणञ्च तथैवैषां स्त्र्यधिकन्तु विशिष्यते ।
एवं सूक्ष्मतमं रूपं बालिकास्वेव दृश्यते ॥
ततस्तासां तनोर्वृद्ध्या सहैवैते यथाक्रमम् ।
आप्नुवन्त्युक्तया रीत्या विवृद्धिं बहुसंख्यकाः ॥
सम्भूय बीजकोषत्वं लभन्ते ते च पूर्ववत् ।
ततश्चादिकोषसंज्ञाऽपि लब्ध्वा तु यौवने ॥
स्थूलमावरणं प्राप्य डिम्बकोषा भवन्ति ते ।
तत्र स्थित्वा च ते नारीधर्म्मणि ह्यार्त्तवागमे ॥

आत्मानं प्रविभज्यैव भवन्ति बहुसंख्यकाः ।
तेषामेको द्वयं वापि जरायुं प्रविशन्ति च ॥
नल्या त्वक्सृष्टया तात ! पुंवीजसंयुयुक्षया ।
( फिलोपियान् )
डिम्बा बहव एवात्र तथाभूताश्च यद्यपि ॥
सन्ति स्वाधारयोस्तेषां तथापि यस्य यस्य तु ।
पुष्टिः सम्पूर्णतामेति सम्वृत्ता वापि पक्वता ॥
स च प्रोक्तप्रकाराया बह्वादिवीजसंहतेः ।
सङ्कीर्णत्वनिमित्तेन स्वाधारस्थितिबाधया ॥
पुंसंयुयुक्षया चापि स्वभावगतया पुनः ।
तदाधाराद्वासर्पन् जरायुमभिगच्छति ॥
ऋतावेव तु संप्राप्त एवमस्य गतिर्भवेत् ।
एवं डिम्ब उपायाते पुंसंयोगमभीप्सति ॥
यथोक्ताश्चापि पुंस्कोषा लाङ्गुलेन यथाक्रमम् ।
स्त्रीसंयुयुक्षव स्तात योनिनालीं विहाय च ॥
अभ्यन्तरं जरायोस्त उद्गच्छन्ति शनैः शनैः ।
गत्वा तु तत्र डिम्बेन युज्यते त्वेक एव हि ॥
अयं योगः कदाचित्तु डिम्बनल्याञ्च जायते ।
डिम्बाधारे कुत्रचिच्च गर्भिण्याः स तु मारकः ॥
तस्मिन् ह्ययं पुष्टिमाप्य दशमासान् प्रवृद्धय च ।
नालं गर्भाशयं प्राप्तुं डिम्बाधारं भिनत्ति च ॥
न शक्नुयाच्च निर्गन्तुं वर्त्माभावान्म्रियेत च ।

प्रसूतिश्चापि तेनैव सार्द्धं भ्रूणेन तत्परम् ॥
अथ चेत् तत्र विष्टैव सह डिम्बेन शौक्रिकः ।
कोषोऽयं डिम्बवाहिन्या जरायुमभिगच्छति ॥
न तदापद्भवेत् काचिदिति तत्त्वविनिर्णयः ।
विदार्य्य शिरसा तस्य विस्फारोन्मुखमस्तकम् ॥
प्रविशत्यन्तरं यावत् सन्धि लाङ्गुलमध्ययोः ।
लाङ्गुलञ्च पृथग्भूतं निर्जीवमपसर्पति ॥
अन्ये च बहवः कोषाः साकमेनेन ये गताः ।
निर्जीवास्तेऽपि शुक्रेण विनिर्य्यान्ति यथाक्रमम् ॥
सर्वान् कोषान् समाश्रित्य जीवएकोऽत्र वर्त्तते ।
एकस्यैवाधिपत्येन बहुकोषा विनिर्म्मिताः ॥
जीवन्ति चेत्यवोचाम तत्रेदं लिङ्गमिष्यते ।
प्रत्येकं यदि कोषाणामेकैको जीव इष्यते ॥
इदानीन्तर्हि नैवैते म्रियेरन्निति गम्यते ।
एको जीवो हि संयुज्य नारीडिम्बेन तादृशम् ॥
देहवृद्धिसहायेन पूर्णं काममवाप्य च ।
अन्यान् कोषान् परित्यज्य सह तेनैव वर्द्धते ॥
शवरूपास्ततश्चान्ये निःसरन्तीति बुध्यते ।
अत्रैतदपि मन्तव्यं यद्येतेषां यदि क्वचित् ॥
स्त्रीडिम्बेन समायोग एकेनापि न सम्भवेत् ।
सर्व एव तु ते तात ! त्रिचत्वारि दिनानि च ॥
योनिं जरायुगर्भञ्च विचिन्वन्तः पुनः पुनः ।

स्त्रियमप्राप्य नश्येयु भ्रमन्तो लाङ्गुलाङ्घ्रिभिः ॥
निःसरन्ति ततो योनेरियं परिणतिर्भवेत् ।
सेकाभावेऽपि शुक्रस्य कोषाणां तत्र तस्थुषाम् ॥
सह शुक्रेण नाशः स्याद्देह एव विशोषणात् ।
तेषु सर्वेषु नश्यत्सु मूलजीवोऽपि नश्यति ॥
योनौ तावत् तथाभूतो जीवो डिम्बगतो भवन् ।
अन्यकोशेषु सम्बन्धं हित्वैकेनैव संयुतः ॥
विहारं बहुरूपैश्च करोत्युल्लासितो यथा ।
डिम्बकोषोऽपि वै तद्वत् प्राप्य पुंस्कोषसङ्गमम् ॥
प्रवर्त्तन्ते शरीरस्था द्वयोरेवानयो र्यतः ।
स्त्र्यधिकाः पुंप्रधानाश्च बीजकोषाः परस्परम् ॥
प्रेम्णा जिगीषया वापि सांसारिकनिरूढया ।
संश्लिष्यन्ति चौत्सुक्याद् युयुत्सन्त्यथवा पुनः ।
तद्व्यापारैस्तदारब्धा आदिकोषाश्च नोदिताः ॥
तथा भवन्ति तस्माच्च क्रियेयं डिम्बपित्र्ययोः ।
ततस्तौ स्त्रीपुमांसौ च नियुध्यन्तौ परस्परम् ।
मल्लाविव समौ तात ! विजयेते मुहुर्मुहुः ।
वारमेकं स्त्री पुमांसं पुरुषोऽपि स्त्रियं पुनः ।
पुनःस्त्री पुरुषञ्चापि सोऽपि तां पुनरेव च ॥
द्वयोरेवं प्रेमजातो विमर्द्दः संप्रवर्त्तते ।
एतद् विमर्द्दकाले तु भवाभिभवसङ्कुले ॥
नानाकाराः प्रजायन्ते गोलदीर्घादिलक्षणाः ।

विजये डिम्बकोषस्य य आकारः प्रवर्त्तते ॥
पराजये पुनस्तस्य स तदा परिवर्त्तते ।
तथा संयुक्तयो डिंम्बपित्र्ययोः कोषयोर्द्वयोः ॥
विश्लेषाद्देरयोग्यत्वादेकतैव हि यद्यपि ।
एकीभूतन्तु तद्द्वेधा प्रथमं भवति क्षणात् ॥
प्रत्येकं पुनरेवापि भवत्याशु द्विधा तयोः ॥
ततस्तावपि च द्वौ द्वौ, द्वौ द्वौ तौ वापि तत्परम् ।
पुनस्तावपि च द्वौ द्वौ, द्वौ द्वौ तौ च ततः परम् ।
भवतस्तत् क्रमेणैवं सहस्रं द्वे च ते पुनः ॥
ततश्चापरिसंख्येया मूर्त्तयः प्रतिभान्ति च ।
तस्मादाकृतिभेदेऽपि भ्रमणात् परिकल्पिते ॥
स भेदश्चातिसूक्ष्मत्वाच्चक्षुषा न प्रगृह्यते ।
यन्त्राणां भिन्नरूपाणामस्थिपेश्यादिभेदतः ॥
मूलान्येतानि सर्वेषामाकारेण पृथक् पृथक् ।
तन्त्वाकारान् समापद्य भिन्नरूपान् यथाक्रमम् ॥
आरभन्ते च यन्त्राणि व्यवस्थैवं सुनिश्चिता ।
एवं बहुविधाकारान् कणिकास्ताः प्रगृह्य च ॥
एकीभूय पुनः पिण्डरूपं गृह्णन्ति सर्वशः ।
इति ते बीजतत्त्वन्तु समासेन निवेदितम् ॥
महांस्त्वेकोऽत्र सन्देह आयाति जीवसंश्रितः ।
किमेक एव पिण्डेऽस्मिन् जीवोऽथ बहवोऽपि वा ॥
बीजानां सर्वरूपाणां प्राणिवद्दर्शिता क्रिया ।

मातापित्रोश्च जीवौ द्वौ कोषयोः परिकीर्त्तितौ ॥
बहवस्तेन जीवाश्च प्राप्ताः पिण्डात्मकाकृतौ ।
एकत्वात् पिण्डमूर्त्तेश्च जीवैकत्वन्तु भासते ॥
अत्र किं सत्यमित्येतद् वक्तुमत्रोऽपयुज्यते ।
एतस्मिन् विषये तात ! शरीरं लक्ष्यतां निजम् ॥
त्वमेक एव कर्त्तात्र किंवा बहव एव च ।
तर्हि त्वमेक एवाहमेवं ब्रूया न संशयः ॥
येन तेन प्रकारेण जीवैकत्वं तदागतम् ।
सहेतुकं परस्तात् तद्विस्तरादिह वक्ष्यते ॥
डिम्बपुंस्कोषयोस्त्वत्र जीवतत्त्वं निरूप्यते ।
देहस्य रचनादृष्ट्यैतच्च संक्षेपतो भवेत् ॥
स्त्रीशक्तिस्तां विना वापि स्थातुं शक्नोति न क्वचित् ।
अन्योन्यस्य समायोगादन्योन्यजीवनोदयः ॥
प्राणचेष्टा तथा पुष्टिरन्याश्च विविधाः क्रियाः
ज्ञानं सर्वविधं चापि सर्वमेतत् प्रवर्त्तते ॥
अन्योन्यस्य पराभवाद्विजयाच्च पुनः पुनः ।
उभावेव विजृम्भेते जीवतश्चेति कथ्यते ॥
सर्वथैव विनष्टेव यदि त्वेकतरैनयोः ।
भवन्त्यन्यतरा तर्हि बलहीना शनैः शनैः ॥
लुप्तप्राया इवाभाति तदा मृत्युर्न संशयः ।
पुनरुत्थानयोग्यानि देहयन्त्राणि नो यदि ॥
अथ चेत् तानि शक्तानि पुनरुत्थानसाधने ।

सुषुप्तिः स्यात् तदानीन्तु तन्त्रादिकमतः शनैः ॥
नष्टप्राये पुनस्तस्मिन् योग्यतामात्रसंश्रिते ।
कालं प्राप्योन्मिषेत् तात ! कतराचित् तदापरा ।
तया सार्द्धं परिस्फूर्त्तिमाप्त्वा जाग्रद्भवेदिह ॥
अन्योन्यस्यैव संघर्षो भवेदन्योन्यजीवनम् ।
प्राणक्रिया ज्ञानहेतुरेतस्मादनुमीयते ॥
पेशीशक्तिर्यथा तात ! तदन्यतरया स्फुरेत् ।
तद्वदेतद्विजानीहि स्त्रीपुंशक्त्योः क्रियादिकम् ।
न भूरिवलसम्पन्नो मल्लो यावन्नियुध्यते ॥
समेनान्येन मल्लेन तावदस्य बलक्रिया ।
नवा बलस्य सुस्फूर्त्तिः सुप्तवच्चास्ति तद्बलम् ॥
इतरस्य तु तुल्येन यदा पेशीबलेन तत् ।
बाध्यते स्फूर्त्तिमायाति द्वयोरेव बलं तदा ॥
यावन्मात्रं प्रतीपं स्यात् तथैवैतद्विवर्द्धते ।
अतिन्यूनं विरुद्धञ्चेत् स्वल्पमेव प्रवर्द्धते ॥
अतिरिक्तं समं वा स्यात् तदैतत् सम्यगूर्ज्जते ।
स्त्रीपुंशक्त्याश्च युग्मेऽस्मिन्नेवं बलविनिर्णयः ॥
द्वयोरेव ततः सत्ता तस्मिन् पिण्ड इहेष्यते ।
विजिताया विजेत्र्याश्च शक्त्यामात्मसमर्पणात् ॥
तस्या एव प्रभुत्वाच्च ह्येकत्वमुपपद्यते ।
अन्तराले बलीयस्याः स्थितापि च निरन्तरम् ॥
उत्थातुं चेष्टते सम्यक् पर्य्यायेण च वर्द्धते ।

अतुल्यन्तु बलीयस्या वर्त्तते च क्रियादिकम् ॥
इत्थं द्वित्वञ्च सिद्धं स्यात् तस्मिन् पिण्डे सदैव हि।
आतिष्ठते तु जीवोऽस्मिन्नेक एव द्विशक्तिकः ॥
भ्रूणस्य प्रथमं रूपं जानीह्येवं समासतः।
अथान्येन प्रकारेण द्वित्वञ्चेज् ज्ञातुमिच्छसि ॥
प्रत्येकन्तर्हि देहानां निर्म्मितिं पश्य यत्नतः।
द्विधैव भिद्यते सम्यग्देहोऽयमेक एव सन् ॥
करपादादियन्त्राणां सर्वेषां च द्वयं द्वयम्।
देहेऽस्मिन् वर्त्तते तात! यदेकं तच्च रेखया ॥
समान्तरालवर्त्तिन्या द्विधैव परिदृश्यते।
द्वौ पादौ द्वौ भुजौ चापि श्रवणे नयने तथा ॥
द्वौ फुप्फुसौ च मूत्रस्य यन्त्रे द्वे वामदक्षयोः।
क्लोम्नां प्लीहश्च यकृश्च नामतो रूपतोऽपि च ॥
क्रियातोऽपि नचैकत्वं सर्व्वथा परिदृश्यते।
द्विधाभावश्च नैतेषां कस्यचित् परिकल्प्यते ॥
तस्मात् सिद्धान्तबाधोऽत्र न्यायतः सम्प्रसज्यते।
परिपाकानुकूलत्वसाम्येन त्वेकतेष्यते ॥
ततो वामे च दक्षे च जात्या त्वेकं प्रकल्प्यते।
फुप्फुसादिवदित्यस्मात् स सिद्धान्तो न दुष्यते ॥
क्लोमप्लीहोस्तथैकत्वं सम्भूय करणान्मतम्।
वामभागे ह्यवस्थानं दृश्यतेऽङ्गाङ्गिवद् द्वयोः ॥
एवं द्वे एव नासे स्तो द्वे चैव रसने मते।

रेखया संध्यवच्छेदान्मस्तिष्कमपि तादृशम् ॥
अस्थीनि शिरसश्चापि ग्रीवामेर्वोस्तथैव च ।
रेखयैव विभिद्यन्ते तद्न्तः स्नायवोऽपि च ॥
एवमेतच्छरीरं च द्विधैव भिद्यते स्फुटम् ।
क्रिया सर्वविधा चास्मिन् द्विधाभूतैव दृश्यते ॥
पृथग्वर्त्मा पृथग्भूता पृथक्कालविकाशिता ।
यदा दक्षिणभागस्थयन्त्राणां कर्म वर्त्तते ॥
न तदा वामभागस्य व्यत्ययेऽप्येवमेव च ।
वामे व्याप्रियमाणे तु दक्षिणः सुप्तवद्भवेत् ॥
दक्षिणे च तथाभूते तद्वद्वामोऽपि दृश्यते ।
पश्य तात ! जनञ्चैनं यस्याद्धाङ्गं निमीलितम् ॥
वातव्याधिकृताद्बाधादर्द्धाङ्गञ्च क्रियान्वितम् ।
ततश्चैतदर्पाक्षेथा अर्द्धाङ्गेऽस्यावशीकृते ॥
मध्यगेत्रापरार्द्धञ्च शनैर्निष्क्रियतामियात् ।
स्त्रीशक्तिस्तु वामभागे पुंशक्तिश्चैव दक्षिणे ॥
स्फुरन्ती सर्वकर्माणि विनिर्वर्त्तयते सदा ।
अन्योन्यायास्तयोरेव क्रिया चैवम्भवेन्मिथः ॥
प्रत्यक्षतस्ततो वाव ! ज्ञातं तत्त्वमिदं त्वया ।
यद् द्वे एवेह शक्ती स्तः शरीरे सर्वदेहिनाम् ॥
परस्परसमेते च तथान्योन्यानुकूलिते ।
अपेक्षेते तथान्योन्यं विमर्दन च जीवतः ॥
वर्द्धतेऽन्यतराभावे म्रियतेऽन्यतरा पुनः ।

द्वे एव च विनष्टे स्तः क्रमादिति समीरितम् ॥
एवं द्वैविध्यभावोऽस्मिञ्छरीरे स्फुटमीक्ष्यते ।
जीवशक्तेस्ततस्तात ! द्वित्वमेवावधार्य्यते ॥
परस्पराभिसम्बन्धः परस्परभवाभवौ ।
संघर्षप्रियता चापि तथान्योन्यसहायता ॥
सर्वमेतत् स्फुटं देहे द्वित्वमेव च शंसति ।
विस्तरस्त्वस्य तत्त्वस्य जीवतत्त्वे भविष्यति ॥
इदानीं शृणु तत्तात ! प्रारब्धं यद्विवक्षितम् ।
देहस्यैव स्वरूपादिनिर्म्माणञ्च विशेषतः ॥
आवश्यकतयारब्धं वक्तुं तत् स्मर्यतामिह ।
तत्र डिम्बप्रसङ्गेन विषया ये प्रकीर्त्तिताः ॥
विशेषतः प्रवक्ष्यामि यद्वक्तव्यं ततः परम् ।
तथा विभिन्नशक्तिभ्यां तौ च द्वौ डिम्बकोषकौ ॥
भूरिविक्रियमाणौ च समासक्तौ परस्परम् ।
पृथग्भूतं तथैकञ्च देहं खण्डद्वयात्मकम् ।
निर्म्मातुमारभेते च स्त्रीपुंशक्तिसमन्वितम् ।
पुंबीजेन दक्षभागो नारीबीजेन चापरः ॥
निर्म्मीयते यथायोगं स्त्रीतनुः पुरुषस्य वा ।
स्त्रीदेहो यत्र जायेत तत्र पुंबीजमाश्रिता ॥
प्रबलापि च पुंशक्ति र्नारीशक्तया जिता भवेत् ।
तथावृत्तञ्च बीजन्तत् स्त्रीबीजेन समन्वितम् ॥
स्त्रीप्रधानेन तद्देहनिर्म्मितौ प्रबलं भवेत् ।

दक्षिणाङ्गं ततो जीवो निर्म्मिमाणोऽपि तत् तनोः ॥
स्त्रीप्रधानतयैवैतदङ्गमारभते शनैः ।
अस्मात् कोषाश्च ये जाता ये च तेभ्योऽपि सन्तताः ॥
तेभ्योऽपि च प्रजायन्ते सर्व एव तथाविधाः ।
स्त्र्यधीनपुरुषत्वास्ते नारीभूता इवासते ॥
स्त्रीकोषा एव ते सर्वे तस्मादभ्यनुमोदिताः ।
डिम्बं च स्त्रीप्रधानत्वात् स्वत एव हि सा मता ॥
तस्माज्जातास्तु ये कोषा ये च तत्सम्भवा अपि ।
तदुद्भूताश्च ये सर्वे नारीरूपाः स्वतश्च ते ॥
एवञ्च सन्तता भूत्वा रचयन्तीतरार्द्धकम् ।
तेऽपि स्नेहप्रधानाः स्युः कोमलास्तत एव च ॥
काठिन्यवदुपादानैरारभ्यन्ते पुमात्मकाः ।
इत्येवं योषितां देहे कोषतत्त्वं निवेदितम् ॥
तन्तु बीजादिकानाञ्च तत्त्वमेतेन वर्णितम् ।
इदानीं पुंशरीरस्य कोषतत्त्वं निबोध मे ॥
यदा शुक्रगते कोषे पुंशक्तिः प्रविजृम्भते ।
नारीशक्तिमनादृत्य तदैव पुरुषं प्रति ॥
निमित्तत्वम्भवेदस्य ज्ञातव्यमिति पण्डितैः ।
स संयुज्य च डिम्बेन प्रागुक्तेन यथायथम् ॥
आत्मानञ्च विकुर्वाणः पुंस आरभते तनुम् ।
अत्रापि दक्षिणाङ्गेऽस्य प्राधान्येन व्यवस्थितिः ॥
स्त्रीडिम्बस्य तु वामार्द्धे विशेषेणाधिकारिता ।

पुंशक्ति र्विजिता त्वत्र नारीशक्तिः प्रतिष्ठते ॥
तस्मात् पुंशक्तिरेवास्मिन् देहे कर्त्रीति कथ्यते ।
क्रिया तु पूर्ववद्रीत्या ह्वयोश्च सव्यवामयोः ॥
न्यायेन कथितेनैव दक्षे ये कोषतन्तवः ।
बीजानि च प्रजायन्ते सर्व एव पुमात्मकाः ॥
स्त्र्यात्मका अपि वामे ते पुंप्राबल्यात् पुमात्मकाः ।
न्यायेनैतेन देहेऽस्मिन् पुमांसः सर्व एव ते ॥
एवं पुंदेहकोषाणां स्त्रीत्वं पुंस्त्वं च कथ्यते ।
यदा तु तच्छुक्रबीजे पुंस्त्वं न तादृशम्भवेत् ॥
यथा पुंदेहनिर्म्माणे सामर्थ्यमुपपद्यते ।
स्त्रीडिम्बस्य च यत् स्त्रीत्वं स्त्रीनिर्म्माणे न चेत् क्षमम् ॥
प्रायेण सममात्रञ्च ह्वयमेव यदा भवेत् ।
तदा पूर्वोक्तरीत्यैव क्लीवदेहः प्रजायते ॥
मात्रावैषम्यत स्तात ! सोऽपि नानाविधो भवेत् ।
क्वचित् स्त्रीलक्षणं किञ्चिदाधिक्येन प्रकाशते ॥
क्वचित् पुंलक्षणं वापि क्लीवदेहेऽत्र दृश्यते ।
तयोरेव च भेदात्तु क्लीवा बहुविधास्तथा ॥
तथापि तेषु सर्वेषु साम्यमेव प्रकल्प्यते ।
उभयोरंशयोस्तेषां देहस्य वामदक्षयोः ॥
कोशादीनाञ्च सर्वेषां साम्यमेवावधार्य्यते ।
वैषम्यतस्तु यत् किञ्चित् स्त्रीपुंशक्त्योः समन्वयात् ॥
उत्पत्तिर्जीवनञ्चापि सर्वा एव क्रियास्तथा ।

निष्पद्यन्ते तनोस्तेषां न तु कामः प्रजायते ॥
यत् किञ्चिन्मात्रया चेत् स्यात् कामत्वन्तत्र नेष्यते
इत्थं स्त्रीपुरुषक्लीवाः प्रजायन्ते पृथक् पृथक् ॥
एवं नारीशरीरस्थाः स्त्र्यात्मका एव यद्यपि ।
पुंदेहारम्भकाश्चापि सर्व एव पुमात्मकाः ॥
तथापि शक्तिरूपत्वादनयोः केन्द्रमिष्यते ।
स्वेषु स्वेषु च केन्द्रेषु ततः काष्ठानयो र्भवेत् ॥
उपकेन्द्रे च यद्यापि वर्त्ततेऽङ्कं द्वयोरपि ।
तस्मिंस्तस्मिन् परा वृद्धिः स्त्रीपुंशक्त्योश्च दृश्यते ॥
तत्र तत्र च ये कोषास्तन्तवो वा यथाक्रमम् ।
स्नेहकाठिन्यभूयिष्ठा इति चात्रावगम्यते ॥
स्त्रीशक्त्योराश्रयस्तत्र दृष्टं केन्द्रचतुष्टयम् ।
मस्तिष्के सर्वकेन्द्राणां विद्यमानेऽपि राजनि ॥
आद्यमस्तिष्कनिम्नांशे पृष्ठमध्येऽपराणि च ।
मस्तिष्कतः प्रसूते च स्नायुगुच्छे यथाक्रमम् ॥
तत्रैकमुरसः पश्चादन्यद् गर्भाशयात् परम् ।
योनेः पश्चात् तृतीयन्तु त्रीण्येतानि पृथक् पृथक् ॥
चतुर्ष्वेतेषु केन्द्रेषु स्त्रीशक्तिः परिजृम्भते ।
प्रथमस्य च केन्द्रस्य मुखगण्डौ समीपतः ॥
आधिक्येनाधिपत्याच्च तयोः स्त्रीत्वं ततोऽधिकम् ।
तदारम्भककोषाणां प्रत्यक्षेणैव गम्यते ॥
एवमेव च पुंशक्तेस्त्रीणि केन्द्राणि वै विदुः ।

नास्ति ह्येषां जरायुश्च डिम्बः साधार एव च ॥
केन्द्रानुगानि चाङ्गानि तत् समीपस्थितानि च ।
मुखोरः-शिश्नसंज्ञानि त्रीण्येवैतानि मन्यते ॥
एतेष्वेव च केन्द्रेषु पुंशक्तिश्च विजृम्भते ।
तथैवैतेषु चाङ्गेषु तन्तुकोषादिकन्तथा ॥
कठिनत्व गुणोपेतमपेक्षातो निरीक्ष्यते ।
द्वयारेवापराङ्गेषु विद्यन्ते स्वस्वशक्तयः ॥
अपरेभ्यः पुनस्तासां केन्द्रेभ्यः स्फूर्त्तिरिष्यते ।
पञ्चभ्यश्चाप्रधानेभ्यः पुंनारीत्वप्रकाशने ॥
ज्ञानक्रियादिकार्य्येषु न तेषां गुणता तथा ।
एवं स्त्रियाश्च पुंसश्च शक्तिर्देहेऽवतिष्ठते ॥
प्रमाणञ्चात्र संक्षेपाद् यत्किञ्चिदवतार्य्यते ।
प्रथमं तात ! विज्ञेयं तत्र कामस्य लक्षणम् ॥
स्त्रीपुंधर्म्मपरिज्ञानं तज्ज्ञानेनैव जायते ।
स्त्रीणां पुंपरता कामः पुंसां स्त्रीपरता तथा ॥
येनान्योन्ययुयुक्षेह द्वयोरेव समुद्भवेत् ।
अदृश्येनाभिघर्षेण चान्योन्यस्य प्रवर्द्धते ॥
नायमेकान्ततः स्त्रीत्वशक्तिः पुंशक्तिरप्यथ ।
न ताभ्यामपि भिन्नो वा सर्वथा सम्भवत्ययम् ॥
धर्म्मधर्म्मितया तात ! द्वयमेवात्र कल्पते ।
धर्म्मः कामो धर्म्मिणीशक्ति रेषा
भेदाभेदौ चैतयोः सुप्रसिद्धौ ।

तापो धर्म्मी दाहकत्वञ्च धर्म्मः
भिन्नौ चैतौ द्वावभिन्नौ च सिद्धौ ॥
यथैकस्मिन् वस्तुनि स्याद्विवक्षा
समाख्यातुर्धर्म्मधर्म्मित्व दृष्टया ।
तदैवैतौ भेदवन्तौ भवेतां
तत्राख्यातुः संविवक्षैव हेतुः ॥
तस्माद्धर्म्मो वस्तुतो नैव भिन्नः
प्रज्ञावद्भिः कथ्यते पूर्वजातैः ।
वाङ्मात्रं वै भेद इत्येवमेव
वक्तव्यं स्यात् सद्विचारात्मदृष्टया ॥
तस्मादेष स्त्रीत्वशक्तिस्वरूपो
धर्म्मी यद्वा पुरुषाख्यापि शक्तिः ।
कस्मिंश्चिद्वै कर्म्मणि स्यात् प्रसक्तः
आत्मानं वै भावयन्नन्यथा च ॥
तदैवैषोऽन्यप्रकारोऽस्य धर्म्मो
भिद्येतासौ वाक्यतः स्वात्मरूपः ।
स्त्रीत्वन्तावत् पुंपरं सर्वदैव
पुंस्त्वञ्चैतन्नार्य्यपेक्षीह दृष्टम् ॥
सुप्ते चैते पुंपरस्त्रीपरत्वे
आसाते पुंयोषितोः सर्वदैव ।
न धर्मत्वं नापि वा धर्मभाव-
स्तदा कैश्चिज् ज्ञायते कथ्यते वा ॥

यदैवैते कर्षतोऽन्योन्यमिष्टं
क्रियावत्त्वात् पुं परस्त्रीपरत्वे ।
प्रकाशेते कामरूपेण तर्हि
योषित् पुंसोर्धर्म्मभावेन चोक्ते ॥
यदा चैते भूय एव प्रसुप्ते
स्यातां तर्हि क्वात्र धर्म्मी क्व धर्म्मः ।
तस्मात् कामः पुंस्त्वरूपो हि पुंसि
नार्य्यां स्त्रीत्वं वस्तुनः सत्यमेतत् ॥
एवं बहुविचारैस्तु कामतत्त्वं निरूप्यते ।
वारिदाद्रौ यथैकस्मिन् विद्युता चापरस्थया ॥
अदृश्येन च सम्बन्धवशेन स्फुरणोन्मुखी ।
क्रियते विद्युदित्येवमेकान्यतरया त्विह ॥
स्त्रीशरीरस्थया शक्त्या पुंशक्तिः परिवर्द्धते ।
पुंशक्त्या चापि सा तद्वद्सम्बन्धे न तु क्वचित् ॥
स्त्रीशक्तिर्मातृदेहस्था तत्समानस्थितापि वा ।
अन्यस्यामपि साध्व्यां वा सुते स्वसृसुतेऽपि वा ॥
अन्यस्मिन् पुरुषे पत्युः सन्निकृष्टेऽपि न क्वचित् ।
कामरूपेण जागर्त्ति पुंशक्तिश्च न तास्वपि ॥
आनर्गलयन्तु यत्र स्यात् स्त्रियां वा पुरुषेऽपि वा ।
तत्रैव जृम्भते कामः परस्परयुयुक्षया ॥
तस्मात् परस्परापेक्षि द्वयमेतत् प्रकल्प्यते ।
अन्योन्यबलसंघर्षाद् बलवृद्धिर्द्वयोरपि ॥

एनयोः शक्तिरूपत्वञ्चैते नैवावगम्यते ।
यदा जागर्त्ति कामो हि स्त्रियां वा पुरुषेऽपि वा ॥
मस्तिष्के केन्द्रराजेऽथ विस्फुरन्नवसर्पति ।
मेर्वन्तः स्नायुगुच्छेन निम्नसीमान्तमेव च ॥
क्रमेण स तदा केन्द्रमेकैकमवसृत्य च ।
संलब्धायतनो भूत्वा बली स्यात् स्वीयकर्म्मणि ॥
स्वव्यापारप्रयोगे च सामर्थ्यं लभते तथा ।
अथ स्नायुश्च सर्वांस्तांस्तत्तत्केन्द्रोपजीविनः ॥
तन्तुकोषादिकान् वापि तत् स्थानादभिसर्पति ।
समुद्वेलयते तद्वदथ गण्डादिसंस्थितान् ॥
तांश्च तानि तथाङ्गानि तदारब्धानि तत्परम् ।
परिस्फुटं तदा तात ! स्त्रिया वा पुरुषस्य वा ॥
मुखञ्चाद्रियते गण्डः पच्यमानं पयो यथा ।
उत्फुल्लमिव चाभाति सुस्फुरञ्चापि लक्ष्यते ॥
मुहुः कामतरङ्गस्य प्रवाहाद् व्यापृतम्भवेत् ।
व्यापारेण च तेनैव रुधिरञ्चात्र सर्पति ॥
तद्वत् तमा च कोषाणां रुधिरान्तर्वर्त्तिनाम् ।
गण्डं मुखं च संश्रित्य भवत्येव समागमः ॥
नारी वा पुरुषो वापि तदानीमात्मनि स्फुटम् ।
न्यूनञ्चानुभवत्येव कामस्य बलवद् वपुः ॥
स्त्राचेत् पुसस्तदङ्गस्य समाकर्षणमेव च ।
संयुयुक्षाञ्च तेनापि व्यापारं वापि कञ्चन ॥

यस्तां पुरुषसान्निध्यं नयतीव प्रतीयते ।
बलादिवाभिभूयास्याः सर्वाः शक्तीरपीतराः ॥
एवं वक्षःस्थले चापि जरायुक्षेत्र एव च ।
काममञ्चे तथाधस्ताद् योनावपि समा क्रिया ॥
सममाकर्षणञ्चैव समश्च रुधिरागमः ।
उद्रिक्तिस्फूर्त्तिफुल्लत्वप्रभुत्वानि समानि च ॥
तथैव पुरुषस्यापि कामेन विजितस्य च ।
मुखगण्डौ तथोरश्च सशेफः क्षेत्रमेव च ॥
सर्वमेव समं ज्ञेयमात्मन्यनुभवस्तथा ।
तत्राकर्षे विशेषोऽयं दृश्यते चोभयोरपि ॥
अङ्गं मुखादिकं वापि तन्त्वाद्या वा तदीयकाः ।
प्रतिरूपमिहाङ्गं च तन्तूंश्च सदृशांस्तथा ॥
समाकर्षति कोषांश्च सूक्ष्मबीजानि वै तथा ।
तन्तवो वाथ कोषाद्याः कोषत्वाद्यैः समा अपि ॥
तत्तत् कोषत्वादिधर्म्मैं भिद्यन्ते सर्व एव च ।
अस्थिकोषास्तथा मज्जकोषा इत्येवमादिभिः ॥
तत् साजात्यं समालम्ब्य यथाकर्षणमीक्ष्यते ।
अन्योन्यस्य तथेहापि सजात्याकर्षणं भवेत् ॥
डिम्बोरोमुखकोषाणां चानैक्यान्नासमानता ।
स्त्री पुंशक्तयोर्विजातित्वात् कामधर्म्मादिसाम्यतः ॥
उभयोर्मुखगण्डादि कोषाणामेकता मता ॥
अन्योन्यस्य तथाभूतान् समाकर्षन्ति हार्द्दिनः ॥

गण्डकोषा गण्डकोषान्मुखकोषा मुखस्थितान् ।
उरःकोषानुरः कोषाः शिश्नकोषाश्च यौनिकान् ॥
शुक्रकोषा डिम्बकोषानित्येवं नियमो भवेत् ।
तदारब्धतया चापि गण्डो गण्डं मुखं मुखम् ॥
उरश्चोरस्तथा शेफौ योनिञ्च भगमेव च ।
तयोतफुल्ल्यादिसंयुक्तः समाकर्षति ह्यार्द्रतः ॥
स्त्रीणामपि तदङ्गानि पुरुषाणां तथैव च ।
समाकर्षन्ति तान्येव मुखगण्डादिकानि हि ॥
तेन चैतावुभावेव क्रियेते विह्वलाविव ।
इतरेतरसंसिद्ध-समाकर्ष-बलेन च ॥
वशीकृतौ विवेकादिशून्यौ हृद्वेगकम्पितौ ।
विकृतस्वरकण्ठौ च परस्पर समागमात् ॥
गात्रोद्वर्त्तनजृम्भाभ्यां मुहुः प्रकृतिसंस्थितौ ।
सर्वाङ्गान्येव सर्वाणि समाकर्षन्ति वस्तुतः ॥
अन्योन्यस्येति विज्ञेयं स्त्रीपुंसोः पूर्वहेतुना ।
शक्तिरूपस्ततः कामो बलरूपश्च गम्यते ॥
इत्येवं कामतत्त्वेन स्त्रीपुंतत्त्वं निवेदितम् ।
विस्तारोऽस्य परस्तात्तु यथास्थानं भविष्यति ॥

इति श्रीमन्महर्षि कश्यपान्वयज-हलधर विद्यामणि भट्टाचार्यात्मज-श्रीशशधर तर्कचूडामणि विरचिते चूडामणि दर्शने सप्तमोऽध्यायः ॥

---